श्रीः ।

# गोत्रप्रवरनिबन्धकदम्बम् ।

( अस्मिन् कदंबे पुरुषोत्तमपण्डितविरचिता प्रवरमञ्जरी, कमलाकरभट्टविरचितं प्रवरदर्पणं, पट्टाभिरामशास्त्रिविरचितो गर्गभरद्वाजकुलविवाहविचारः, प्रवरदर्पणकारप्रदर्शिताः प्रवरा गोत्रगणाश्च, अभिनवमाधवाचार्येण विरचितो गोत्रप्रवरनिर्णयः )

तदिदम्

गङ्गाविष्णु-श्रीकृष्णदासस्य

अध्यक्ष "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये

मैनेजर पं० शिवदुलारेजी वाजपेयीत्यनेन स्वाम्यर्थे

मुद्रयित्वा प्रकाशितम् ।

शकाब्दाः १८३९, संवत् १९७४, सन १९१७ ई.

कल्याण-मुंबई.

# धन्यवादाः ।

शिथिलीभूतश्रौतस्मार्ताचारप्रवर्तकग्रन्थनिवहेऽस्मिन्कलिकाले स्वाश्रितविद्वन्मण्डलीद्वारा संरक्षितश्रौतस्मार्त्तादिग्रन्थेभ्यः श्रीमन्महीशूरक्षोणीपुरन्दरेभ्यो वितीर्यन्ते परश्शतं धन्यवादाः । यतश्च तद्रक्षितपुस्तकालयादेवायं ग्रन्थो मुद्रणार्थमस्माभिः समासादीति-

उपकृतः,

गंगाविष्णु-श्रीकृष्णदासः ।

# भूमिका।

इह खलु सुविदितमिदमत्रभवतां यत् समानगोत्रा समानप्रवरा च कन्या नोद्वाहमर्हतीत्यस्मात्पूर्वे पूर्वे ऋषय इति. तत्र गोत्रं नाम वंशः कुलं सन्ततिरित्यपि नार्थान्तरम्. यस्मादृषेः प्रभृति सन्ततिरादौ व्यभिद्यत स गोत्रर्षिरित्याख्यायते. प्रवरो नाम प्रकर्षेण वरणं प्रार्थनमग्नेः यजमानपूर्वपुरुषानृषीन् संकीर्त्य दर्शपूर्णमासादिक्रतुषु सुप्रसिद्धम्. तत्सम्बन्धाच्च ऋषयोऽपि गोत्रर्षेर्वंश एव पूर्वं जनिताः प्रवराः प्रवरऋषय इति चोच्यन्ते. ईदृशगोत्रप्रवरसमानतामाश्रित्य च स्मृतिषु समानगोत्रायास्समानप्रवरायाश्च कन्याया विवाहो निषिध्यते तत्र विप्राणामष्टादशैव सङ्घाः परस्परं विवाहार्हा वेदितव्याः तथा हि–

द्विजातयः किल सर्वे वृक्षसदृक्षस्य ब्रह्मणश्शाखोपशाखारूपाः. यथा–पुरा खलु ब्रह्मणश्चत्वारस्तनयाः प्रादुरभूवन् भृगुः अङ्गिराः मरीचिः अत्रिः इति. एतेषामेव चतुर्णां सन्ततिस्सकला अपि भूता भवन्तो भविष्यन्तश्च द्विजातयः. तदनु भृगोः कुले जमदग्निरजनि. आङ्गिरसो गौतमभरद्वाजौ. मरीचेः कश्यपवसिष्ठागस्त्याः. अत्रेश्च विश्वामित्रः त एते वक्ष्यमाणेभ्यः केवलोपपदेभ्योऽन्येषां ब्राह्मणानां सन्ताननिदानभूताः जमदग्निगौतमभरद्वाजकश्यपवसिष्ठागस्त्यविश्वामित्राः अत्र्यष्टमा गोत्रकारा इत्यग्रे व्यपादिश्यन्त. तदात्वे च "इतः प्रभृति नैकसन्तानसंभूताः परस्परं विवाहमर्हन्ति, अधुना च एकसन्ततिजातयोरपि ययोरन्वयौ निर्वृत्तपरस्परविवाहौ दृष्टौ तयोरन्वययोस्तु परस्परं विवाहो नैव दुष्यति" इत्यनुशासनमेतदाविरास, यत् समानगोत्रप्रवरकन्यानिषेध इत्यभिधीयते. अत एव चैतेभ्यो गोत्रकारेभ्यः प्राचीनान्, गोत्रकारानेतानपि वा न तदनुशासनं गोचरीचकार. तथा च दृश्यते अङ्गिरसस्सुतयोरपि गोतमभरद्वाजयोरन्वयौ परस्परं विवाहार्हौ, अत्रिविश्वामित्रयोरपि चान्वयावन्योन्यमुद्वाहार्हाविति. अथ खल्वेतेषामष्टानां गोत्रकाराणां सन्ततिबहिर्भूता अपि केचित् ब्राह्मणा उपलभ्यन्ते तेषां च मूलपुरुषाः केचित्क्षत्रजन्मानस्तपःप्रभावादिभिर्विश्वामित्रवत् अधिगतब्राह्मणभावाः. इयांस्तु विशेषः. यत् क्षत्रजन्माऽपि विश्वामित्रः अधिगतब्राह्मण्यः प्रभावातिरेकेण स्वोपज्ञमेकं पक्षं प्रवर्तयन् गोत्रकाराभिधामापेदे. इतरे त्विमे क्षत्रजन्मानः अधिगतब्राह्मण्या अपि भृगोरङ्गिरसो वा यथायथं पक्षमाशिश्रियन् इति.

तेषु ये भृगोः पक्षमाश्रितास्ते केवलभार्गवा इत्याख्यायन्ते. अङ्गिरसः पक्षमाश्रिताश्च केवलाङ्गिरसा इति. अतश्च तेषां प्रवरेषु भृगुरङ्गिरा वा निविष्टो दृश्यते. तदेतेषां केवलोपपदानां भृगुप्रवरत्वमाङ्गिरःप्रवरत्वं वा नौत्पत्तिकमिति इतरैर्भृगुप्रवरैराङ्गिरःप्रवरैश्चोद्वाहार्हता निराबाधा. स्वस्वगणे तु नैवान्योन्यं विवाहयोग्यता, स्वरसतः एकसन्तानान्तःपातित्वात्. तत्र केवलभार्गवाश्चत्वारः, वीतहव्यः मित्रयुः शुनकः पार्थः इति । केवलाङ्गिरसाश्च षट्, रथीतरः मुद्गलः विष्णुवृद्धः हरितः कण्वः संकृतिः इति । तदेवं दशसु केवलोपपदेषु पार्थान्यानां नवानामपि भृग्वङ्गिरसोरन्यतरस्य पक्षपरिग्रहमितिहासैर्निदर्शयामः. पार्थे तु केवलभार्गवसमाख्याप्रमुखैर्लिङ्गैस्तं सम्भावयामः. तत्र वीतहव्यो वैदेहापरनाम्नो जनकस्य सन्ततिजातो ब्रह्मर्षिरभवदिति महाभारते आनुशासनिके पर्वणि त्रिंशेऽध्याये विज्ञायते—" तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः । नेहास्ति क्षत्रियः कश्चित् सर्वे हीमे द्विजातयः ॥ एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः । पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् ॥ एवमप्यस्मि भगवन् कृतकृत्यो न संशयः । य एष राजा वीर्येण स्वजातिं त्याजितो मया ॥ भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः । वीतहव्यो महाराज ब्रह्मवादित्वमेव च ॥" इति ।

तथा पुरूरवस्सन्ततिजश्शुनकः दुष्यन्तसन्ततिभवा मित्रयुमुद्गलकण्वाश्च ब्रह्मर्षितामवापुरिति हरिवंशे एकोनत्रिंशद्द्वात्रिंशाध्याययोः प्रत्यपादि तथैव च विष्णुवृद्धहरितरथीतरा ब्रह्मर्षिभावमन्वभूवन्निति विष्णुपुराणादौ प्रतीयते.

आर्ष्टिषेणो यद्यपि केवलभार्गवेषु क्वचित्पठ्यते, तथाऽपि प्रवरनिर्णयादिनिबन्धेषु जामदग्न्येष्वेव स गण्यत इति तमेव पक्षं साधीयांसं रोचयामहे कथमन्यथा जामदग्न्यैर्वत्सादिभिरेषामनुद्वाहो निरुह्येतेति, तत्सिद्धं विप्राणामष्टादशैव संघाः परस्परं विवाहार्हा इति. कल्पसूत्रकारास्तु केवलोपपदानां इतरैर्भृगुभिराङ्गिरसैश्च विवाहकारणं भङ्ग्यन्तरेण कथयन्ति. तद्यथा—" एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् ॥ त्र्यार्षेयाणां द्व्यार्षेयसाम्ये अविवाहः । पञ्चार्षेयाणां त्र्यार्षेयसाम्येऽविवाहः ॥ " इति ।

वस्तुतस्तु क्वचिदेकर्षिसाम्येऽपि समानप्रवरता अन्यत्र द्व्यार्षेयादिसाम्ये सत्येवेति वैलक्षण्यकल्पनं सूत्रकृतां प्रागुपदर्शितविशेषानुसन्धानमूलकमेवेति सुधियो विदांकुर्वन्तु.

# विषयसूचिका ।

## प्रवरमञ्जरी पुरुषोत्तमपण्डितविरचिता ।

## कश्यपगोत्रप्रवरकाण्डानि ।



## वसिष्ठगोत्रप्रवरकाण्डानि ।



## अगस्तिगोत्रप्रवरकाण्डानि ।



## प्रवरदर्पणं कमलाकरभट्टविरचितम् ।



इति विषयसूचिका समाप्ता ।

# वंशवृक्षाः प्रवराश्च ।

## १ जमदग्निवंशवृक्षः

भृगुः
|
च्यवनः
|
आप्नवानः
|
ऊर्वः
|
ऋचीकः
|
जमदग्निः

## १ जमदग्नीनां प्रवराः

१ भार्गवच्यावनाप्नवानौर्वजामदग्न्येति ।

२ भार्गवौर्वजामदग्न्येति ।

३ भार्गवच्यावनाप्नवानेति ।

४ भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति ।

५ भार्गवार्ष्टिषेणानूपेति ।

६ भार्गवच्यावनाप्नवानौर्ववैदेति ।

## २ वीतहव्यवंशवृक्षः

मरीचिः
|
कश्यपः
|
विवस्वान्
|
मनुः
|
इक्ष्वाकुः
|
निमिः ( विदेहः )
|
जनकः
..........
|
सुनयः
|
वीतहव्यः

## २ वीतहव्यानां प्रवरः

१ भार्गववैतहव्यसावदसेति ।

## ३ मित्रयुवंशवृक्षः

अत्रिः
|
सोमः
|
बुधः
|
पुरूरवाः
|
..........
|
दुष्यन्तः
|
भरतः
|
वितथः
|
सुहोत्रः
|
बृहत्पुत्रः
|
अजमीढः
|
भर्म्यश्वः
|
मुद्गलः
|
वध्र्यश्वः
|
दिवोदासः
|
मित्रयुः

## ३ मित्रयूनां प्रवराः

१ भार्गववाध्र्यश्वदैवोदासेति ।

२ भार्गवदैवोदासवाध्र्यश्वेति ।

३ वाध्र्यश्वेति ।

### ४ शुनकवंशवृक्षः

- अत्रिः
- सोमः
- बुधः
- पुरूरवाः
- आयुः
- क्षत्रविरोधः
- सुनहोत्रः
- गृत्समदः

### ४ शुनकानां प्रवराः

१ भार्गवशौनहोत्रगार्त्समदेति
२ गार्त्समदेति
३ शौनकेति
४ भार्गवगार्त्समदेति ।

---

### ५ वेनवंशवृक्षः

- ब्रह्मा ( आपवप्रजापतिः )
- स्वायम्भुवमनुः
- उत्तानपादः
- .........
- अङ्गः
- वेनः
- पृथुः

### ५ वैन्यानां प्रवराः

१ भार्गववैन्यपार्थेति ।

---

### ६ भरद्वाजवंशवृक्षः

- अङ्गिराः
  - बृहस्पतिः
    - भरद्वाजः
      - गर्गः
      - अमहीयः
        - उरुक्षयः
          - कपिः

### ६ भारद्वाजानां प्रवराः

१ आंगिरसबार्हस्पत्यभारद्वाजेति ।
२ आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति ।
३ आंगिरसवान्दनमातवचसेति
४ आंगिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ।
५ आंगिरसकात्यात्कीलेति।
६ आंगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति ।
७ आंगिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्येति ।
८ आंगिरसगार्ग्यशैन्येति ।
९ आंगिरसशैन्यगार्ग्येति ।
१० आंगिरसामहीयौरुक्षयेति ।

---

### ७ गौतमवंशवृक्षः

- अंगिराः
  - गौतमः
  - उचथ्यः
    - दीर्घतमाः वा गौतमः ( सप्तर्षिः )
      - कक्षीवान्
        - कौमण्डरथः
      - वामदेवः
        - बृहदुक्थः
      - गौतमः
        - शरद्वान्
    - गौतमः
  - संवर्तः
  - वामदेवः
  - अयास्यः
  - उशिजः

## ७ गौतमानां प्रवराः.

१ आंगिरसौचथ्यगौतमेति ।
२ आंगिरसराहूगणगौतमेति ।
३ आंगिरसवामदेव्यगौतमेति ।
४ आंगिरसगौतमवामदेव्येति ।
५ आंगिरसवामदेव्यबार्हदुक्थेति ।
६ आंगिरसबार्हदुक्थवामदेव्येति
७ आंगिरसबार्हदुक्थगौतमेति ।
८ आंगिरसायास्यगौतमेति ।
९ आंगिरसौशिजगौतमेति ।
१० आंगिरसशारद्वतगौतमेति ।
११ आंगिरससौमराजगौतमेति।
१२ आंगिरसौचथ्यौशिजेति ।
१३ आंगिरसौचथ्यगौतमौशिजकाक्षीवतेति ।
१४ आंगिरसौचथ्यदैर्घतमसेति ।
१५ आंगिरसौचथ्यकाक्षीवतगौतमकौमण्डरथेति ।
१६ आंगिरसौचथ्यकाक्षीवतगौतमदैर्घतमसेति ।
१७ आंगिरसगौतमौशनसेति ।
१८ आंगिरसगौतमकारेणुपालेति ।
१९ आंगिरसायास्यौशिजगौतमकाक्षीवतेति ।

---

## ८ रथीतरवंशवृक्षः

मरीचिः
|
कश्यपः
|
विवस्वान्
|
मनुः
|
नभगः
|
नाभागः
|
अम्बरीषः
|
विरूपः
|
पृषदश्वः
|
रथीतरः

## ८ रथीतराणां प्रवराः.

१ आंगिरसवैरूपपार्षदश्वेति ।
२ आष्टादंष्ट्रवैरूपपार्षदश्वेति ।
३ आंगिरसपार्षदश्ववैरूपेति ।
४ आंगिरसवैरूपराथीतरेति ।

---

## ९ कण्वः

## ९ कण्वानां प्रवराः.

१ आंगिरसाजमीढकाण्वेति।
२ आंगिरसघौरकाण्वेति ।

---

## १० मुद्गलः

## १० मुद्गलानां प्रवराः.

१ आंगिरसभार्म्यश्वमौद्गल्येति ।
२ तार्क्ष्यभार्म्यश्वमौद्गल्येति ।

---

## ११ संकृतिवंशवृक्षः

अत्रिः
सोमः
बुधः
पुरूरवाः
.........
दुष्यन्तः
भरतः
वितथः
महावीर्यः सुहोत्रः नरः गर्गः
उरुक्षयः बृहत्पुत्रः संकृतिः शिनिः
कविः अजमीढः
कण्वः भर्म्यश्वः
मुद्गलः

## ११ संकृतीनां प्रवराः.

१ आंगिरसगौरुवीतसांकृत्येति ।
२ आंगिरससांकृत्यगौरुवीतेति ।
३ शाक्त्यगौरुवीतसांकृत्येति ।

## १२ विष्णुवृद्धः

## १२ विष्णुवृद्धानां प्रवराः.

१ आंगिरसपौरुकुत्सत्रासदस्यवेति ।

## १३ हरितवंशवृक्षः

मरीचिः
कश्यपः
विवस्वान्
मनुः
इक्ष्वाकुः
.........
युवनाश्व
मान्धाता
पुरुकुत्सः अम्बरीषः
त्रसदस्युः युवनाश्वः
संभूति हरितः
विष्णुवृद्धः

## १३ हरितानां प्रवराः.

१ आंगिरसाम्बरीषयौवनाश्वेति ।
२ मान्धात्राम्बरीषयौवनाश्वेति ।

## १४ अत्रिवंशवृक्षः

अत्रिः
अर्चनानसः
श्यावाश्वः
गविष्ठिरः

## १४ अत्रीणां प्रवराः.

१ आत्रेयार्चनानसश्यावाश्वेति ।
२ आत्रेयगाविष्ठिरपौर्वातिथेति ।
३ आत्रेयार्चनानसगाविष्ठिरेति ।
४ आत्रेयार्चनानसपौर्वातिथेति ।
५ आत्रेयार्चनानसातिथेति ।
६ आत्रेयार्चनानसवाग्भूतकेति ।
७ आत्रेयवामरथ्यपौत्रिकेति ।
८ वासिष्ठात्रेयजातूकर्ण्येति ।

## १५ विश्वामित्रवंशवृक्षः.

अत्रिः
|
सोमः
|
बुधः
|
पुरूरवाः
|
अमावसुः
|
.........
|
कुशः
|
कुशिकः
|
गाधिः
|
विश्वामित्रः
|
कतः — आक्षिलः (वाक्षिलः) — शालंकायनः — रेणुमान् — रेणुः — देवश्रवाः — देवतराः — पूरणः — देवरातः — वद्लः — गाथी — मधुच्छन्दाः — अघमर्षणः — अष्टकः — लोहितः

## १५ विश्वामित्राणा प्रवराः.

१ वैश्वामित्रदैवरातौदलेति ।
२ वैश्वामित्रदैवरातौदलेति ।
३ वैश्वामित्रमाधुच्छन्दसधानञ्जयेति ।
४ वैश्वामित्रमाधुच्छन्दसाजेति ।
५ वैश्वामित्रमाधुच्छन्दसरौहिणेति ।
६ वैश्वामित्रमाधुच्छन्दसाष्टकेति ।
७ वैश्वामित्राष्टकेति ।
८ वैश्वामित्राष्टकलौहितेति ।
९ वैश्वामित्रदैवराजपौरणेति ।
१० वैश्वामित्रपौरणेति ।
११ वैश्वामित्रकात्यात्कीलेति ( वाक्षीलेति ।
१२ वैश्वामित्राश्मरथ्यवाधूलेति ।
१३ वैश्वामित्राघमर्षणकौशिकेति ।
१४ वैश्वामित्रगाधिनरैणवेति ।
१५ वैश्वामित्ररौक्षरैवणेति ।
१६ वैश्वामित्रगाधिनवैणवेति ।
१७ वैश्वामित्रशालंकायनकौशिकेति ।
१८ वैश्वामित्रैन्द्रकौशिकेति ।

## १६ कश्यपवंशवृक्षः

मरीचिः
|
कश्यपः
|
अवत्सरः — असितः
अवत्सरः → रेभः, निध्रुवः
असितः → देवलः

## १६ काश्यपानां प्रवराः.

१ काश्यपावत्सारासितेति ।
२ काश्यपावत्सारशाण्डिल्येति ।
३ काश्यपावत्सारदैवलेति ।
४ शाण्डिल्यासितदैवलेति ।
५ काश्यपासितदैवलेति ।
६ दैवलासितेति ।
७ काश्यपदैवलासितेति ।
८ काश्यपावत्साररैभ्येति ।
९ काश्यपावत्सारनैध्रुवेति ।
१० वासिष्ठावत्सारकाश्यपेति ।

## १७ वसिष्ठवंशवृक्षः

मरीचिः
|
कश्यपः
|
मित्रो वरुणश्च
|
वसिष्ठः
वसिष्ठः → इन्द्रप्रमतिः, शक्तिः, मैत्रावरुणः
इन्द्रप्रमतिः → अभरद्वसुः → उपमन्युः
शक्तिः → पराशरः
मैत्रावरुणः → कुण्डिनः

## १७ वासिष्ठानां प्रवराः.

१ वासिष्ठेति ।
२ वासिष्ठाभरद्वस्वैन्द्रप्रमदेति ।
३ वासिष्ठेन्द्रप्रमदाभरद्वस्विति ।
४ वासिष्ठशात्क्यपाराशर्येति ।
५ वासिष्ठमैत्रावरुणकौण्डिन्येति ।
६ आंगिरसगौरुवीतसांकृत्येति ।
७ आंगिरससांकृत्यगौरुवीतेति ।
८ शाक्तगौरुवीतसांकृत्येति ।
९ काश्यपावत्सारवासिष्ठेति ।
१० वासिष्ठावत्सारकाश्यपेति ।
११ वासिष्ठात्रेयजातुकर्ण्येति ।

## १८ अगस्त्यवंशवृक्षः

कश्यपः
|
मित्रो वरुणश्च
|
अगस्त्यः
|
दृढच्युतः
|
इध्मवाहः

## १८ अगस्त्यानां प्रवराः.

१ आगस्त्यदार्ढ्यच्युतैध्मवाहेति ।
२ आगस्त्येति ।
३ आगस्त्यदार्ढ्यच्युतसाम्भवाहेति ।
४ आगस्त्यदार्ढ्यच्युतसौमवाहेति ।
५ आगस्त्यदार्ढ्यच्युतयाज्ञवाहेति ।
६ आगस्त्यमाहेन्द्रमायोभुवेति ।
७ आगस्त्यपौर्णमासपारणेति ।

## क्षत्रियवैश्यवंशवृक्षः

ब्रह्मा
|
विवस्वान्
|
मनुः
मनुः → इला ( बुधोद्वाहिता ), नेदिष्ठः
इला → पुरूरवाः
नेदिष्ठः → नाभागः → भलन्दनः → वात्सप्रिः

## क्षत्रियाणां प्रवरः

१ मानवैलपौरूरवसेति ।

## वैश्यानां प्रवरः.

१ भालन्दनवात्सप्रिमांकीलेति
वा वात्सप्रीति ।

# ब्रह्मा.

- भृगुः ( १ )
- अंगिराः ( २ )
- मरीचिः ( ३ )
- अत्रिः ( ४ )

## भृगुः ( १ )

- च्यवनः
  - आप्नुवानः
    - ऊर्वः
      - ऋचीकः
        - जमदग्निः ( गोत्रकारः सप्तर्षिः )
          - वत्सः
          - बिदः
          - आर्ष्टिषेणः
            - अनूपः

            पृथग्वंशः १.
  - प्रमतिः
    - रुरुः
      - शुनकः
        - गृत्समदः ( शुनकस्य कृत्रिम पुत्रः )

        पृथग्वंशः ४.
- वीतहव्यः ( भृगोः कृत्रिमः पुत्रः कश्यपवंश्यः )

  पृथग्वंशः २.
- मित्रयुः ( भृगोः कृत्रिमः पुत्रः अत्रिवंश्यः )

  पृथग्वंशः ३.
- वेनः ( भृगोः कृत्रिमः पुत्रः अत्रिवंश्यः )

  पृथग्वंशः ५.

## अंगिरा: ( २ )

- उचथ्य: — दीर्घतमा: वा गोतम: ( स० गो० )
  - कक्षीवान् — कौमण्ड:
  - करेणुपाल:
  - वामदेव: — बृहदुक्थ:
  - गोतम: — शरद्वान्
  - पृथग्वंश: ६.
- अयास्य:
- वामदेव:
- गोतम:
- संवर्त:
- उशिज:
- बृहस्पति: — भरद्वाज: ( स० गो० )
  - अग्निवेश:
  - वान्दन: — मातवचस: — ऋक्ष:
  - गर्ग: — शिनि:
  - आमहीय: — कपि:
  - पृथग्वंश: ७.
- पृषदश्व: (कृत्रिम: पुत्र:, मरीचिवंश्य: ) — रथीतर: — अष्टादंष्ट्र: पृथग्वंश: ८.
- कण्व: (कृत्रिम: पुत्र:, अत्रिवंश्य: ) — मेधातिथि: पृथग्वंश: ९.
- मुद्गल: (कृत्रिम: पुत्र:, अत्रिवंश्य: ) पृ० १०.
- संकृति: (कृत्रिम: पुत्र:, अत्रिवंश्य: ) पृ० ११.
- पुरुकुत्स: (कृत्रिम: पुत्र:, अत्रिवंश्य: ) — त्रसदस्यु: — संभूति: — विष्णुवृद्ध: पृथग्वंश: १२.
- अम्बरीष: (कृत्रिम: पुत्र:, मरीचिवंश्य: ) — युवनाश्व: — हरित: पृथग्वंश: १३.

# मरीचिः (३)

- कश्यपः (गो० स०)
  - अवत्सारः
    - रेभः
    - निध्रुवः
  - असितः
    - शाण्डिलः
      - देवलः
  - पृथग्वंशः १४.
  - विवस्वान्
    - मनुः
      - नेदिष्ठः
        - नाभागः (वैश्यः)
          - भलन्दनः
            - वात्सप्रिः
      - नभगः
        - नाभागः
          - अम्बरीषः
            - विरूपः
              - पृषदश्वः
                - रथीतरः
                  - अष्टादंष्ट्रः (अंगिरःकुले गतः)
      - इक्ष्वाकुः
        - निमिः
          - वीतहव्यः (भृगुकुले गतः)
        - युवनाश्वः
          - मान्धाता
            - पुरुकुत्सः
              - त्रसदस्युः
                - सम्भूतिः
                  - विष्णुवृद्धः (अंगिरःकुले गतः)
            - अम्बरीषः
              - युवनाश्वः
                - हरितः (अंगिरःकुले गतः)
      - इला (बुधोद्वाहिता)
  - मित्रावरुणः
    - वसिष्ठः (गो० स०)
      - मैत्रावरुणः
        - कुण्डिनः
      - इन्द्रप्रमतिः
        - अभरद्वसुः
          - उपमन्युः
      - शक्तिः
        - पराशरः
          - व्यासः
      - पृथग्वंशः १५.
    - अगस्त्यः (गो०)
      - महेन्द्रः
        - मयोभूः
      - दृढच्युतः
        - इध्मवाहः
      - पृथग्वंशः १६.

# अत्रिः (४)
(गो० स०)

- अर्चनानसः
  - अतिथिः
  - वाग्भूतकः
  - वामरथः
    - पुत्रिकः
  - श्यावाश्वः
    - गविष्ठिरः
  - पृथग्वंशः १७.
- सोमः
  - बुधः (अनेन मनुपुत्री-लोद्वाहिता)
    - पुरूरवाः
      - अमावसुः
        - काशिः
          - गाधिः
            - विश्वामित्रः (गो० स०)
              - अश्मरथः
                - बाधूलः
              - रुक्षः
                - रेवणः
              - इन्द्रः
              - शालंकायनः
              - रेणुमान्
              - अघमर्षणः
              - गाधी
                - वेणुः
              - देवश्रवाः
                - देवतरः
              - देवरातः
                - उदलः
              - मधुच्छंदाः
                - अजः
                - रोहिणः
                - धनंजयः
                - अष्टकः
                - अघमर्षणः
              - अष्टकः
                - लोहितः
              - पुराणः
      - नहुषः
        - दुष्यन्तः
          - भरतः
            - वितथः
              - सुहोत्रः
                - अजमीढः
                  - वध्र्यश्वः
                    - दिवोदासः
                      - मित्रयुः (भृगुकुले गतः)
                  - भर्म्यश्वः
                    - मुद्गलः (अंगिरःकुले गतः)
                  - कण्वः
                    - मेधातिथिः (अंगिरःकुले गतः)
              - महावीर्यः
                - उरुक्षयः
                  - कपिः (प्रायो भारद्वाजः)
              - नरः
                - संकृतिः (अंगिरःकुले गतः)
              - गर्गः
                - शिनिः (प्रायो भारद्वाजः)
      - आयुः
        - क्षत्रवृद्धः
          - शुनहोत्रः
            - गृत्समदः (भृगुकुले गतः)
- उत्तानपादः (स्वयंभुमनुपुत्रोऽत्रेर्दत्तकः)
  - वेनः
    - पृथुः (भृगुवंशे गतः)

पृथग्वंशः १८.

हरिः ॐ.

## पुरुषोत्तम विरचिता

# प्रवरमञ्जरी।

यज्जं यत्स्थं यदीयं जगदिदमखिलं यल्लयं यत्प्रधानं
यत्प्रेर्यं यन्निवासस्थिरचरहृदयं यत्पुरा सम्प्रभूतम् ।
यत्क्रीडावस्तुभूतं यदनुभवसुखं यत्स्वरूपानभिज्ञं
यत्स्वापं यत्प्रबोधं यदतिहिततमं ब्रह्म तस्मै नमोस्तु ॥ १ ॥

आचार्यान्वेदकल्पान्परहितनिरतान्कल्पसूत्रप्रणेतॄन्
सर्वान्बोधायनादीन् प्रणिपतितजनत्राणशीलान्प्रणम्य ।
तत्सूत्रोपात्तगोत्रप्रवरसुमनसां मञ्जरीं तां करिष्ये
यज्ज्ञानात्कर्मकाण्डं फलति निजफलं ज्ञानकाण्डं च सर्वम् ॥ २ ॥

मत्स्य कूर्मवराहखर्वनृहरीन्रामांश्च रामानुजं
नत्वाऽऽदौ दश कल्किविष्णुसहितान् ब्रह्मावतारानिमान् ।
तत्तत्प्रोक्तपुराणभारतगतास्स्मृत्यन्तरोक्ताश्च ये
तैर्गोत्रप्रवरैश्च पूर्वगदितां बध्नाम्यहं मञ्जरीम् ॥ ३ ॥

कन्यामूढ्वा स्वगोत्रप्रवरपुरुषजां मातृवद्धापदण्ड-*
प्रायश्चित्तादिभाक्स्याज्जनयति च सुतं जातिचण्डालमस्याम् ।
अज्ञात्वोढ्वोपगम्य प्रतिगमनमहत्यैन्दवं सा च भार्या
गर्भश्चेत्स्याददुष्टस्स मुनिभिरुदितः काश्यपो गोत्रविद्भिः ॥ ४ ॥

कृत्वा चान्द्रायणानि प्रतिहतदुरितो मातृवत्पुत्रवच्चा-
प्यन्योन्यं मन्यमानौ सह परिचरतां दम्पती यावदायुः ।
अज्ञात्वाऽन्यस्वगोत्रप्रवरमुनिगणान्प्रत्यवाये पतन्तः
स्युर्ज्ञात्वाऽन्यस्वगोत्रप्रवरमुनिगणान्ब्रह्मलोके वसंति ॥ ५ ॥

---

*शृ—दण्डः.

गोत्राणां कोटिसंख्यात्रितयमितिमतां दुर्ग्रहत्वाच्च तस्मा-
त्सर्वेषां सर्वगोत्रप्रवरमतिफलां मञ्जरीमारभेऽहम् ।
सेयं गोत्रप्रफुल्ला प्रवरमतिफला मञ्जरी वैदिकानां
सर्वज्ञानां बुधानां पदकमलदलेष्वस्तु पुष्पोपहारः ॥ ६ ॥

अत्र बोधायनापस्तम्बसत्याषाढकुण्डिनभरद्वाजलौगाक्षिकात्यायनाश्वलायनादिभिः कल्पसूत्रकारैर्मत्स्यादिपुराणकारैर्भारतादीतिहासकारैर्मन्वादिभिस्स्मृतिकारैरुपदिष्टान्प्रवराध्यायानुपलभ्योदाहृत्योदाहृत्य तत्तद्भाष्यकारमतानुसारेणवगोत्रस्वरूपं गोत्रसङ्ख्यां समानगोत्रत्वं द्विगोत्रत्वं तत्कृतं चाविवाहं प्रवरस्वरूपं प्रवरसङ्ख्यां प्रवरविकल्पं समानप्रवरतां तत्कृतं चाविवाहं यथोपदेशं* यथाप्रश्नं चाबहुश्रुतानां मन्दधियामुपकारार्थं ईश्वरप्रसादादाचार्यप्रसादाच्च वर्णत्रयाणां प्रवरान्व्याख्यास्यामः ॥

तत्र कल्पसूत्रपुराणस्मृतिकारैरेकेनैव क्रमेण गोत्रप्रवरकाण्डान्युपदिष्टानि । येनैव क्रमेण तान्युपदिष्टानि तेनैव क्रमेण तानि वक्ष्यमाणानि भूदेवानामबहुश्रुतानामुपकाराय सुखग्रहणाय चानुक्रमिष्यामः ॥

आदितस्तावद्गोत्रप्रवरोपदेशकर्तव्यताहेतुसन्दर्भगर्भाणि परिभाषासूत्रकाण्डान्युपदिष्टानि, तेषु च गोत्रप्रवरतत्सङ्ख्याविधिपराः प्रत्यक्षश्रुतयः तैत्तिरीयाः शाखान्तरीयाश्च ॥

परिभाषासूत्रकाण्डेभ्योऽनन्तरं भृगूणां गोत्रप्रवरतत्संख्योपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । ते वत्सा विदा आर्ष्टिषेणा यस्काश्शुनका मित्रयुवा वैन्या इत्येवमाद्या गोत्रगणा उपदिष्टाः । प्रतिगणं च प्रवरास्तत्सङ्ख्याश्चोपदिष्टाः । वत्सार्ष्टिषेणविदानां त्रयाणां गणानां परस्परं स्वे स्वे गणे चाविवाहश्चोपदिष्टः । यस्कादीनां वैन्यान्तानां स्वं स्वं गणं वर्जयित्वा परस्परं च पूर्वोक्तैः वक्ष्यमाणैश्च सर्वैस्सह विवाह उपदिष्टः ॥

भृगुसूत्रकाण्डेभ्योऽनन्तरं आङ्गिरसानां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डानि त्रिविधान्युपदिष्टानि—गौतमानां गोत्रप्रवरोपदेशपराणि सूत्राणि, तदनन्तरं भरद्वाजगोत्रप्रवरोपदेशपराणि, सूत्रकाण्डानि, तदनन्तरं केवलाङ्गिरसानां प्रवरोपदेशपराणि काण्डानि । तत्र गौतमसूत्रकाण्डेष्वायास्या गौतमा औचथ्या गौतमा

* मू—यथोद्देशं.

औषिजा गौतमा राहूगणा गौतमाः सोमराजकयो गौतमा वामदेवा गौतमा बृहदुक्था गौतमा इति बहुभेदा गौतमगणाः। प्रतिगणं च प्रवरास्तत्सङ्ख्याश्चोपदिष्टाः। गौतमानां सर्वेषामविवाहश्चोपदिष्टः। गौतमसूत्रकाण्डेभ्योऽनन्तरं भरद्वाजगोत्रसूत्रकाण्डानि। तेषु च केवलभरद्वाजाः शुङ्गशैशिरयो द्व्यामुष्यायणाः ऋक्षाः कपयो गर्गा इत्येवमादयो भरद्वाजगणाः। प्रतिगणं च प्रवरास्तत्सङ्ख्याश्चोपदिष्टाः। भरद्वाजगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः। भरद्वाजगणेभ्योऽनन्तरं केवलाङ्गिरसानां प्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि। तेषु च हारितकुत्सकण्वरथीतरमुद्गलसंकृतिविष्णुवृद्धादयो गणाः प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः। तेषु च हरितकुत्सानां परस्परमविवाहः। कण्वादीनां परस्परं विवाहश्चोपदिष्टः॥

अतःपरं अत्रीणां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि। तेषु केवलात्रयो वाग्भूतका गविष्ठिरा अतिथयः पुत्रिकापुत्राश्चेत्यादयो गोत्रगणाः। प्रतिगणं च प्रवरा उपदिष्टाः। अत्रिगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः॥

अत्रिगणानन्तरं विश्वामित्रगोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि। तेषु च देवराता रौक्षका लोहका लोहिताः श्रौमताः कता धनञ्जया अघमर्षणाः पूरणा इन्द्रकौशिका आजायनाः रेवणा इत्याद्या गणाः प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः। विश्वामित्रगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः

तदनन्तरं काश्यपानां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि। तेषु च निध्रुवा रेभाश्शाण्डिला लौगाक्षा इत्याद्या गणाः। प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः। कश्यपगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः॥

तदनन्तरं वसिष्ठानां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि। तेषु च केवलवसिष्ठा उपमन्यवः पराशराः कुण्डिनास्संकृतयश्चेति च गणाः। प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः। वसिष्ठगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः॥

तदनन्तरं अगस्तीनां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि। तेषु चेध्मवाहाः साम्भवाहाः सोमवाहा यज्ञवाहा माहेन्द्राः पौर्णमासाश्चेति गोत्रगणाः प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः। अगस्तिगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः॥

तदनन्तरं क्षत्रियाणामात्मीयप्रवरः पुरोहितप्रवरश्चोपदिष्टः पुरोहितगोत्रैः पुरोहितप्रवरैश्च सह क्षत्रियाणामविवाहो नोपदिष्टः, प्राप्त्यभावात्॥

तदनन्तरं वैश्यानां क्षत्रियवत् आत्मीयप्रवरः पुरोहितप्रवरश्चोपदिष्टः ॥

तदनन्तरं सार्ववर्णिकमानवप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च त्रयाणां वर्णानामविशेषेणैकार्षेयो मानवः प्रवर उक्तः ॥

सर्वान्ते च समानगोत्रसमानप्रवरादियाथार्थ्यविदां प्रवराध्यायाध्ययनस्य च ब्रह्मविदां वेदाध्ययनस्येव ब्रह्मलोकादिफलप्राप्त्युपदेशपराणि शास्त्रसमाप्तिसूत्रकाण्डान्युपदिष्टानि । तेषु चोपदिष्टेषु सत्सु पर्यवसिताः प्रवराध्यायाः ॥

अस्यां च काण्डानुक्रमण्यां परिगणितेषु गणेष्वेकैकस्मिन् गणे यावन्ति गोत्राणि यन्नामकानि यत्क्रमकानि चान्तर्भवन्ति विद्यन्ते तानि सर्वाणि सूत्रपाठक्रमानुसारेणैव परिगणितानि ज्ञातव्यानीति । तथा प्रवरसंख्या पञ्चार्षेयत्र्यार्षेयद्व्यार्षेयैकार्षेयविभागे सूत्रपाठक्रमानुसारेणैव ज्ञातव्या । इति वक्ष्यमाणं सर्वमनुक्रान्तं जिज्ञासानिवृत्तये सुखग्रहणाय च ॥

तत्र प्रथमं तावद्बोधायनीयमहाप्रवराध्यायोक्तसूत्रकाण्डान्येव तत्रतत्र प्रथमाध्यायपरिसमाप्तिरुदाहृत्योदाहृत्य व्याख्याय पश्चादापस्तम्बाद्युक्तसूत्रकाण्डान्युदाहृत्य व्याख्यास्यामः । तत्र श्लोकः—

सर्वेष्वपि प्रवरशास्त्रगणेष्वतीव श्रीमन्महाप्रवरशास्त्रमिति प्रसिद्धम् ।
बोधायनीयमिति तत्कृतसूत्रगोत्रकाण्डान्यहं प्रथमतस्सकलानि वक्ष्ये ॥

## अथातः प्रवरान्व्याख्यास्यामः ।

" बन्धोरेव नेत्यथो संतत्यै परस्तादर्वाचो वृणीते तस्मात्परस्तादर्वाञ्चो मनुष्यान्पितरोनु प्रपिपते " * इति । तथा दर्शपूर्णमासयोरेवार्षेयवरणविधिपरं वाजसनेयिब्राह्मणं—" अथार्षेयं प्रवृणीत ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति यस्मादार्षेयं प्रवृणीते परस्तादर्वाक् प्रवृणीते परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय उच्चैवेनं निह्नुत इदं हि स पितेवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते " ‡ इति । तथाऽन्यत्रापि प्रतिशाखमुदाहर्तव्यम् । तथा गोत्रसम्बद्धान्यपि कानिचिदङ्गानि विहितानि; यथा—" ' त्वं वरुण ' † इति वसिष्ठराजन्यानां परिधानीया ' आजुहोत ' † इतीतरेषां गोत्राणाम् " इति । तथा ' नाराशंसो द्वितीयः प्रयाजो वासिष्ठशुनकानां तनूनपादितरेषां गोत्राणाम् ' इति ।

---

* तै० सं. २-५-८. ‡ शतपथब्रा. २-४-३. † तै.ब्रा. ३-५-२.

तथा 'वासिष्ठो ब्रह्मा ज्योतिष्टोमे' इति । तथा 'भृगूणां त्वा देवानाम्' ‡ इति भृगूणां यथर्ष्याधानं विहितं, 'अङ्गिरसां त्वा देवानाम्' ‡ इत्यङ्गिरसां यथर्ष्याधानमिति । तथा 'जमदग्नीनां पञ्चावत्तमन्येषां गोत्राणां चतुरवत्तम्' इति । तथा राजसूये 'भार्गवो होता भवति' § इति । तथासोमे 'आत्रेयाय प्रथमाय हिरण्यं ददाति द्वितीयाय तृतीयाय च' इत्यादीनि तत्रतत्रोदाहर्तव्यानि । तथा स्मृतिकारैरपि सर्वैरकृताधानानामिव पतितानामिव चाकृतविवाहानां पुंसां कर्माधिकारानर्हतां मत्वा विवाहाविवाहौ गोत्रप्रवरोपाधिकावेव विहितौ । यथाऽऽह याज्ञवल्क्यः—

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
उद्वहेत्........................... ॥

इति । तत्रासमानार्षजा, असमानप्रवरपुरुषजा, असमानगोत्रजा, भिन्नगोत्रपुरुषजेत्यर्थः । आहापस्तम्बः—"सगोत्राय दुहितरं न प्रयच्छेत्" * इति । आह गौतमः—"असमानप्रवरैर्विवाहः" * इति । तथा सगोत्रागमनं गुरुतल्पसमं मत्वा गौतम एवाह—"सखिसयोनिसगोत्रासु स्नुषायां गवि च गुरुतल्पसमं गमनम्" * इति । आह बौधायनः—"सगोत्रां गत्वा चान्द्रायणं कुर्यात्" इति । आह यमः—

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चांडालास्त्रय ईरिताः ॥

इति । तथा स्मृत्यन्तरे—

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
तावुभौ विद्धि चाण्डालौ सगोत्राद्यश्च जायते ॥

इति । तथा—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

इति । तथा श्राद्धे चाहापस्तम्बः—"योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान्भोजयेत्" ‡ इत्येवमादीनि स्मृतिवाक्यानि तत्रतत्र द्रष्टव्यानि । यस्मादेतानि पूर्वो-

‡ तै. ब्रा. १-१-४. § तै. सं. १-८-१८. * धर्म. २-२-१५, २. धर्म. ४-२. २३-१२. ‡ गृह्य. २१-२.

क्तान्यङ्गानि विवाहादीनि च कर्माणि गोत्रप्रवरतत्त्वज्ञानायत्तानि तदभावे च य [ त ] स्माद्गुरुतल्पदोषचाण्डालेत्यादिदोषप्रसक्त्या ब्राह्मण्यहानिप्रसङ्गात् मूलोच्छेदप्रसङ्गः ॥

गोत्राणां च कोटिसंख्यात्रयपरिमितत्वाद्भूपांसूनां दिवि तारकाणामिव च दुर्ज्ञेयतां संख्यानिर्देशेन बोधायनो दर्शयति—

**गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।**
**ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥**

इति । अत्र सहस्राणि प्रयुतान्यर्बुदानीति तिसृषु संख्यासु बहुवचनप्रयोगाद्गोत्राणां तिस्रः कोट्यः सम्पद्यन्ते । तस्मात्पूर्वसूत्रात्कर्मकाण्डादनन्तरं तदपेक्षितगोत्रसमानगोत्रसमानप्रवरतत्कृताविवाहतत्त्वज्ञानाय अतो हेतोः प्रवरान्व्याख्यास्यामः, यतस्तदभावे कर्माधिकारानुपपत्तिः, कर्मप्रकरणे तेषामनुक्तत्वात् । इत्यथातश्शब्दौ व्याख्यातौ । प्रवरान्व्याख्यास्यामः । सर्वेषां ब्राह्मणानां वक्ष्यमाणागस्त्याष्टमसप्तर्षिवंशपरंपराशाखोपशाखासहस्रप्रयुतार्बुदानेकगोत्राणामाहिताग्नीनां सतां प्रतिपुरुषमाहवनीयस्याग्नेर्हव्यवाहनाग्नः सप्तर्षीणामगस्त्याष्टमानामपत्यसम्बन्धेन तत्सादृश्यसम्बन्धेन वा प्रकर्षेण वरणानि प्रार्थनानि प्रवराः । ते च होतुरध्वर्योश्च विहिता द्विप्रकाराः । होतुस्तावद्यथा वत्सानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येतिपञ्चार्षेयप्रवरे पञ्चभिर्मन्त्रदृग्भिर्देवप्रसिद्धैः आहवनीयोऽग्निः संबोध्यते । तथा संबोधितोऽग्निर्देवेभ्यो हव्यं वक्ष्यति नान्यथेति कृत्वा तमग्निं होता वृणीते प्रार्थयते । तथा तैरेव मन्त्रदृग्भिः पञ्चभिस्तद्विपर्ययक्रमेणागस्त्याष्टमसप्तर्ष्यपत्यक्रमेण सादृश्यसम्बन्धेन तमेवाहवनीयमग्निमध्वर्युर्वृणीते प्रार्थयते, यथा जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अस्यायमर्थः—यथा जमदग्न्यादयो योग्यतया भोज्यान्नतया च देवज्ञातत्वाद्देवानुद्दिश्य त्वयि हविःप्रक्षेपयोग्याः, तथाऽयमपि यजमानो वत्सस्तदपत्यत्वात्तवोत्पादकत्वेन पितृस्थानीयत्वाच्च त्वयि हविःप्रक्षेपयोग्य एवेत्याह । अध्वर्युप्रवरेऽपि स एवाहवनीयोऽग्निः प्रव्रियते प्रार्थ्यते । इदमेव च प्रवरपदव्याख्यानं अग्निप्रकाशनार्थसामिधेनीमन्त्रलिङ्गानि प्रवरविधायकब्राह्मणानि च दर्शयन्ति । तथाहि—सामिधेनीमन्त्रेषु "अग्निं दूतं वृणीमहे" * "वृणीध्वं हव्यवाहनम्" * इत्यादीनि

* तै. ब्रा. ३-५-२.

मन्त्रलिङ्गान्याहवनीयस्याग्नेः प्रवरकर्मतां दर्शयन्ति, द्वितीयानिर्देशात् । तथा 'वृणीध्वं हव्यवाहनम्' * इत्यस्यैव मन्त्रस्य व्याख्यानपरं तैत्तिरीयाणां दर्शपूर्णमासयोः प्रवरविधिपरं ब्राह्मणमेतमेवार्थं स्पष्टीकरोति—" त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सह रक्षा असुराणां त एतर्ह्याशंसन्ते मां वरिष्यते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीत आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्यै "* इति । अत्रापि 'हव्यवाहनं' 'तं' 'आर्षेयं' इति च तत्रतत्र द्वितीयानिर्देशात् अग्नेरेव वरितव्यतां प्रतीमः । तथा वाजसनेयिनां प्रवरविधिपरं ब्राह्मणमेतमेवार्थं प्रतिभासयति—' अथार्षेयं प्रवृणीत ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते ' इत्यादि अध्वर्युप्रवरविधिपरमिदं ब्राह्मणम् । अस्यायमर्थः—आर्षेयः ऋष्यपत्यमाहवनीयोऽग्निः—यजमानेनोत्पादितत्वात्, यजमानस्य ऋषिसन्तानत्वात्—तं वृणीते । किमर्थमित्याशङ्क्य प्रयोजनमाह—" ऋषिभ्यश्चैवैनं यजमानं देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापत " इति यस्मादेवं प्रयोजनवान् प्रवरः तस्मादार्षेयं वृणीत इति । तस्मादाऽध्यायपरिसमाप्तेः होतृप्रवरैरध्वर्युप्रवरैश्च तैस्तैर्मन्त्रदृशामपत्यसम्बन्धेन सादृश्यसम्बन्धेन चाग्निरेवाहवनीयः प्रार्थ्यते । तस्य प्रकारेण प्रार्थनानि तैस्तैर्मन्त्रदृग्भिः एकद्वित्रिपञ्चसङ्ख्याकैः विशिष्टानि एकार्षेया द्व्यार्षेयाः त्र्यार्षेयाः पञ्चार्षेयाः प्रवरा इत्युच्यन्ते; न पुनः ऋषीणामेव मन्त्रदृशां प्रवरणानि प्रवरा इति ॥

नन्वेतस्मिन्प्रवरपदव्याख्याने सति बहूनि सूत्राणि वक्ष्यमाणानि विरुद्ध्यन्ते । कथं ? तथाहि—सर्वे सूत्रकारा वक्ष्यन्ति 'इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोर्वाचो होता वृणीते' इति । अत्र हि मन्त्रदृशामेवैकद्वित्रिपञ्चसङ्ख्याकानां ऋषीणां वरणकर्मता प्रतीयते, तेषां द्वितीयानिर्दिष्टत्वात्, नाग्नेराहवनीयस्य । तथा 'ऊर्ध्वमासीनं होतारं वृणीते' 'अग्निर्देवानां होता देवान्यक्षत्' इत्यत्रापि होतुरेव वरणकर्मता प्रतीयते, नाग्नेः । तत्र कथमिवाविरोध इति ॥

अत्र ब्रूमः—पूर्वापरानभिज्ञस्येदं चोद्यम् । कथं ? तथाहि—सर्वे सूत्रकाराः 'इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोर्वाचो होता' इत्युक्त्वा अनन्तरं होतुरध्वर्योश्च प्रवरानाहुः—'भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता वृणीते, जमदग्निवदूर्ववदप्नवानव-

* तै. सं २–५–८.

च्यवनवद् भृगुवदित्यध्वर्युः ' इति । न ह्यत्र ऋषीणां वरणकर्मताऽवगम्यते, तेषां तद्धितेन निर्देशात्; अध्वर्युप्रवरे च तद्वदिति वतिप्रयोगाच्च । तस्मात्तत्राप्यग्नेरेव वरणकर्मता वक्तव्येति पूर्वापराविरोधाय सूत्रान्तराविरोधाय च तानि वाक्यानि व्याचक्ष्महे—इत ऊर्ध्वानध्वर्युर्वृणीते । इतो यजमानात् ऊर्ध्वानृषीन् संकीर्त्य तद्वत्तद्वदिति तत्सादृश्यसम्बन्धेनाहवनीयं वृणीत इत्यर्थः । तथा अमुतोर्वाचो होता इत्यत्रापि तानेव संकीर्त्य तदपत्यसम्बन्धेन होताऽऽहवनीयमित्युभयत्राग्निरध्याहर्तव्यः । ऊर्ध्वमासीनं होतारम् इत्यत्रापि होतृशब्देनाहवनीय एवाग्निरभिप्रेतः । कथं ? ' अग्निर्देवो होता देवान्यक्षत्' इत्यादिवाक्यशेषात् । ' अग्निर्देवो होतेति य एव देवानां तमवृणीत ततो देवा अभवन् ' * इति च ब्राह्मणमपि होतृशब्देन आहवनीयमेवोक्तं दर्शयति । तस्माद्यथोक्त एव प्रवरशब्दस्यार्थः ॥

ते च प्रवराः पुनरपि द्विविधाः समाना असमानाश्चेति तत्र समानानां मन्त्रदृशां ऋषीणां नामसंख्याक्रमैः समानाः प्रवरा येषां ते समानप्रवराः, यथा सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डमाण्डव्यप्राचीनयोग्यमार्कण्डेयादिगोत्रप्रभेदानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्यस्य प्रवरस्य समानत्वात् समानप्रवरास्ते । एवं सर्वत्र । असमानप्रवरास्तु नामसंख्याक्रमाणां अन्यतमेनैकेन द्वाभ्यां त्रिभिर्वा भिन्ना प्रवरा येषां त इति । तत्राविशेषेण सर्वे प्रवरा व्याख्येयत्वेन प्रतिज्ञायन्त इति ॥

## सप्तानामृषीणामगस्त्याष्टमानां पक्षा भवन्ति ॥

येषामिह प्रवरा व्याख्येयत्वेन प्रतिज्ञातास्ते सर्वे ब्राह्मणा एव विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपानां सप्तानां ऋषीणां अगस्त्याष्टमानां पक्षा भवन्ति; पक्षः वंशः वर्गः गोत्राणीत्येकार्थाः ॥

ननु भृग्वङ्गिरसोः कस्मादिह पक्षा नोक्ताः, तेऽपि सप्तर्षिपक्षे वक्ष्यन्त एव । अत्रोच्यते—भृग्वङ्गिरसोस्सप्तर्षित्वाभावात् सप्तर्षिपक्षोपदेशेनैव भृग्वङ्गिरसोः पक्षोपदेशस्यान्यथासिद्धत्वाच्च भेदेन नोच्यन्त इति ॥

## त्रयः पक्षा भृगूणां पञ्चार्षेया वत्सा विदा आर्ष्टिषेणाः ॥

यथा चैते पञ्चार्षेयाः तथा चैतान् स्वस्थाने वक्ष्यामः ॥

* तै. सं. २-५-११.

**चत्वार एवाङ्गिरसाः कामण्डौ दैर्घतमा राक्षायणौ गर्गाश्चः ॥**

यथा चैते त्रिपञ्चार्षेयाः तथा स्वस्थाने वक्ष्यामः । एतत्सर्वं स्वाभिप्रायेण द्रष्टव्यं, सूत्रान्तरेष्वन्यथाऽपि दर्शनात् ॥

**गर्गाणां त्र्यार्षेयो विकल्पः ॥**

यथा चैवं तथा वक्ष्यामः ॥

**विश्वामित्रपक्षे पौरणा द्व्यार्षेयाः ।**

**शुनकवसिष्ठा एकार्षेयाः ॥**

यथा चैवं तथा वक्ष्यामः ॥

**अतोन्ये त्रिप्रवरा भवन्ति ॥**

परिगणितेभ्यो वत्सादिभ्यो वसिष्ठान्तेभ्यो येऽन्ये वीतहव्यादयोऽगस्त्यान्तास्तिसृभिः कोटिसङ्ख्याभिः संख्याता उत्तरत्रास्माभिर्वक्ष्यन्ते ते सर्वे त्रिप्रवरा भवन्ति । अयमपि स्वाभिप्राय एव, सूत्रान्तरेष्वन्यथाऽपि दर्शनात् । त्रिभिर्वरणं त्रिप्रवरः, स येषां ते त्रिप्रवराः, त्र्यार्षेयप्रवराः, भवन्तीत्यर्थः । स्वाभिप्रायोऽयं, एतेषामपि सूत्रान्तरेष्वेकार्षेयद्व्यार्षेयत्र्यार्षेयपञ्चार्षेयाणां दर्शनात् । यथा चैतदुभयं तथा वक्ष्यामः ॥

**एतेषु भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवस्स्युरिति मतं बोधायनस्येति ॥**

अस्य सूत्रस्य द्विविधं व्याख्यानम्—

एकं तावदुच्यते—एतेषु परिगणितेषु गोत्रेषु भृगोरङ्गिरसश्च जमदग्निगौतमभरद्वाजव्यतिरिक्ताः भृगुत्वेनाङ्गिरस्त्वेन चाभिन्ना अपि सन्तो भिन्नविवाहं कुर्वते । भिन्नवद्विवाहो भिन्नविवाहः । भिन्नश्चासौ विवाहश्चेति भिन्नविवाहः । यथाऽऽगस्त्याष्टमसप्तर्षिपक्षीयाः परस्परभिन्नगोत्रीयाः स्वं स्वं पक्षं विहाय पक्षान्तरीयैः भिन्नगोत्रैस्सह विवाहं कुर्वते तथा भृग्वङ्गिरसो जमदग्निगौतमभरद्वाजव्यतिरिक्ताः वीतहव्यशुनकमित्रयुववैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धादयो भृगुत्वेनाङ्गिरस्त्वेन चाभिन्ना अपि स्वंस्वं गणं विहाय गणान्तरीयैः सह विवाहं कुर्वत इत्यर्थः ॥

अपरा व्याख्या—अभिन्नविवाहं कुर्वत इति सूत्रच्छेदः । अस्यायमर्थः—भृगवो भृगुत्वेनाभिन्ना अपि स्वंस्वं गणं विहाय गणान्तरीयैः भृगुभिरेवाभिन्नविवाहं कुर्वते । अभिन्नानां विवाहोऽभिन्नविवाहः एवमङ्गिरसोपि । तत्र भृग्वङ्गिरसोः सप्तर्षिवाह्यत्वेन तत्पक्षीयाणां गोत्राभावेन गोत्रसमानत्वाभावात् मिथो विवाहे नास्ति दोषः; असमानप्रवरत्वात्, असमानगोत्रत्वाच्च । एवं सप्तर्ष्यपत्यबाह्यानां भृग्वङ्गिरसां परस्परविवाह उक्तः । अत्रैव विशेषमाह—"न चेत् समानार्षेया बहवस्स्युः" इति । पञ्चार्षेयाणां ऋषित्रयसमानत्वं समानर्षिबहुत्वं यथा आर्ष्टिषेणानां विदानां च । त्र्यार्षेयाणां ऋषिद्वयसमानत्वं समानर्षिबहुत्वं यथा हरितकुत्सानाम् । तदुभयं येषां भृग्वङ्गिरसां नास्ति ते परस्परं विवाहं कुर्वत इत्यर्थः । बोधायनग्रहणमात्मनः पूजार्थं, यथा जैमिनीये सूत्रे 'जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधस्स्यात्' *इत्यत्र जैमिनिग्रहणं तद्वत् । इति करणमध्यायसमाप्त्यर्थम् ॥

इति श्रीबोधायनीये महाप्रवरे प्रथमोऽध्यायः ।

**अथात ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोर्वाचो होतेत्येष एवोभयोस्सर्वत्रोद्देशः ॥**

अथ प्रवरकर्तव्यतोपदेशानन्तरं अतो हेतोः, यतो विज्ञाते क्रमविशेषे होतुरध्वर्याश्च वरणमग्निप्रार्थनं बहूनां मन्त्रदृशां वरणं कर्तुं शक्यते नाविज्ञाते, अतः क्रमविशेष उच्यते—अत ऊर्ध्वानित्यादिना । अयमर्थः—अतो यजमानादूर्ध्वान् मन्त्रदृग्भिरव्यवहितान् मूलभूतादृषेः क्रमेण संकीर्त्य तद्वत्तद्वदिति सादृश्यसम्बन्धेन आहवनीयं प्रवृणीते प्रार्थयते, यथा वत्सानां जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अमुतोर्वाचो होता—अमुतो मूलभूतादृषेरारभ्यार्वाग्भूतान्मन्त्रदृशः अध्वर्युप्रवरक्रमविपर्ययक्रमेण तदपत्यसम्बन्धेन प्रार्थयते तमेवाग्निं, यथा भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । एवमुभाभ्यां प्रार्थितोग्निर्यजमानयोग्यतां ज्ञात्वा तदीयं हविर्देवेभ्यो दास्यति । यथा कर्माङ्गभूतानामृत्विजां वरणं तत्प्रार्थनं यजमानेन प्रार्थितास्सन्तः कर्माङ्गानि करिष्यन्तीति, तथा होतुरध्वर्योश्च वरणमग्निप्रार्थनं ताभ्यां प्रार्थितोऽग्निर्देवेभ्यो हव्यं वहतीति । एष एव प्रवरक्रमविशेषो होतुरध्वर्योश्चाध्यायपरिसमाप्तिपर्यन्तं सर्वत्रोपदेष्टव्यः ॥

*मीमां. १२-१-७.

**द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणामसमानप्रवरैर्विवाहः ॥**

' भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवस्स्युः ' इति उक्तमधस्तात् । अनेन सूत्रेण भृग्वङ्गिरसां अविवाहकारणभूतं समानबह्वर्षित्वमाह—त्र्यार्षेयाणां भृगूणां द्व्यार्षेयसन्निपातादविवाहः, समानर्षिबाहुल्यात् । अङ्गिरसामपि हरितानां कुत्सानां च त्र्यार्षेयाणां द्व्यार्षेयसन्निपातादविवाहः । सन्निपातः समत्वम् । तथा पञ्चार्षेयाणां भृगूणामार्ष्टिषेणानां वत्सानां बिदानां च त्र्यार्षेयसन्निपातादविवाहः । यथा चैवं तथा स्वस्थाने वक्ष्यामः ॥

**एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ।**
**तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् ॥**

गोत्रलक्षणमुपरिष्टाद्वक्ष्यति—

**विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः ।**
**अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः ॥**

**" सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते "**

इति । यत्तु पाणिनीयं गोत्रलक्षणं ' अपत्यं पौत्रप्रभृति गोत्रम् ' इति तस्यापत्यमात्रविषयत्वेन सामान्यत्वात् बोधायनीये गोत्रलक्षणे अगस्त्याष्टकसप्तर्ष्यपत्यविषये पर्यवसानं, अन्यथा चण्डालादेरपत्यमपि पौत्रप्रभृति गोत्रं प्रसज्येत इत्यतिव्याप्तिप्रसङ्गात् इत्यस्य बोधायनीयस्य सूत्रस्य व्याख्यानावसरे भविष्यति ॥

गोत्रस्वरूपसिद्धवत्कारेण समानगोत्रलक्षणोपदेशपरमिदं सूत्रम् । अस्यायमर्थः—एक एवागस्त्याष्टमसप्तर्षिगोत्राणां अगस्त्याष्टमसप्तर्ष्यपत्यात्मनां तिसृभिः कोटिसंख्याभिः संख्यातानां वक्ष्यमाणानां प्रवरेष्वेकद्वित्रिपञ्चार्षेयेषु व्रियमाणतया सत्तया चानुवर्तते तावतां गोत्राणां समानगोत्रत्वमुक्तं विज्ञेयम् । एतदुक्तं भवति—अगस्त्याष्टमानां सप्तर्षीणामन्यतमसृषिमेकं वा सद्वितीयं वा सतृतीयं वा सपञ्चमं वा ये प्रवृणुते ते सर्वे समानगोत्रा इति । तत्रायं विशेषः—' अन्यत्र भृग्वङ्गिरसां गणात् ' इति । अयमर्थः—जमदग्निव्यतिरिक्तानां भृगूणां गणात् गौतमभरद्वाजव्यतिरिक्तानां अङ्गिरसां गणाच्च अन्यत्र । गणादित्येकवचनं जात्यपेक्षं—

गणेभ्योन्यत्र । अगस्त्याष्टमसप्तर्ष्यपत्यानां गणेष्वेवैकर्ष्यनुवृत्त्या समानगोत्रत्वमुक्तं विज्ञेयम् । जमदग्निगौतमभरद्वाजव्यतिरिक्तानां तु भृग्वङ्गिरसामगस्त्याष्टमसप्तर्ष्यपत्यबाह्यत्वेन गोत्रत्वासंभवात् गोत्रसिद्धवत्कारपूर्वकं समानगोत्रत्वं नास्तीति मत्वा ' अन्यत्र भृग्वङ्गिरसां गणात् ' इति पर्युदासः कृतः ॥

नन्वसत्यां प्राप्तौ कथं पर्युदासः, प्राप्त्यपेक्ष्यत्वात्तस्य ?—

सत्यमेवम्, अस्त्यत्रापि भ्रान्तिनिमित्ता अन्यत्र प्राप्तिः । कथं ?—अगस्त्याष्टमसप्तर्ष्यपत्यभूतान् वत्सादीन् गोत्रशब्दं प्रयुञ्जानान् दृष्ट्वा तत्परमासन्नाविवेकाग्रहणात् मित्रयुवशुनकहरितरथीतरमुद्गलादयोपि सप्तर्षिबाह्याः गोत्रशब्दं प्रयुञ्जते—मित्रयुवगोत्रोहमित्येवम । इत्थं भ्रान्तिनिमित्तां प्राप्तिमपेक्ष्य पर्युदासः कृतः ' अन्यत्र भृग्वङ्गिरसां गणात् ' इति ॥

अथवा पर्युदासस्य प्राप्त्यपेक्षैव नास्ति, एकवाक्यत्वात् । यथा " यज्ञेषु येयजामहं करोति नानूयाजेषु येयजामहं करोति " इत्यत्रैकवाक्यत्वात् पर्युदास इत्युक्तं " अपि तु वाक्यशेषत्वादितरपर्युदासस्स्यात्प्रतिषेधे विकल्पस्स्यात् " * इति बाधलक्षणे तद्वत् ॥

जमदग्निगौतमभरद्वाजानां त्रयाणां भृग्वङ्गिरसामपि सतामगस्त्याष्टमसप्तर्ष्यन्तर्भावादेव गोत्रत्वसिद्धेः समानगोत्रत्वं युक्तमेवेति न तत्रायं पर्युदासः । इममेव च पर्युदासाभिप्रायं उपरिष्टात् बोधायनः स्वयमेव दर्शयिष्यति—' वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः,' ' गौतमानां सर्वेषामविवाहः', ' भरद्वाजानां सर्वेषामविवाहः', इति त्रिभिरेभिस्सूत्रैः । ये तु सप्तर्ष्यपत्यबाह्याः वीतहव्यशुनकवाध्र्यश्ववैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धाद्याः तद्विषयमिदं सूत्रत्रयमधस्तादुक्तं, ' भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवस्स्युः ' इति, ' द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणाम् ' इति । इति करणमध्यायसमाप्तिद्योतनार्थम् ॥

## इति श्रीबोधायनीये महाप्रवराध्याये द्वितीयोऽध्यायः ।

इति पुरुषोत्तमपण्डितविरचितायां सर्वगोत्रप्रवरमञ्जर्यां बोधायनीयमहाप्रवराध्यायसूत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डं समाप्तम् ।

---

* मीमां १०-८-४. भाष्ये तु— " अपि तु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात् ' इत्येव सूत्रं पठ्यते.

अथेदानीमापस्तम्बाद्युक्तप्रवराध्यायसूत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डमुदाहरिष्यामः—

**प्रवरान्व्याख्यास्यामः ॥ १ ॥**

**आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्या इति विज्ञायते ॥ २ ॥**

**न देवैर्न मनुष्यैरार्षेयं वृणीत ऋषिभिरेवार्षेयं वृणीत इति विज्ञायते ३ ॥**

**आर्षेयमन्वाचष्ट ऋषिणा हि देवाः पुरुषमनुबुध्यन्त इति विज्ञायते ४ ॥**

**यो वाऽन्यस्सन्नथान्यस्यार्षेयेण प्रवृणीते स वा अस्य तद्दर्षिरिष्टं वीतं वृङ्क्ते इति विज्ञायते ॥ ५ ॥**

**त्रीन् वृणीते मन्त्रकृतो वृणीते यथर्षि मन्त्रकृतो वृणीत इति विज्ञायते ६**

**अथैकेषामेकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चाति वृणीते इति विज्ञायते ॥**

**इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोर्वाचो होतेति विज्ञायते ॥ ८ ॥**

**पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते ॥ ९ ॥**

इत्यापस्तम्बाद्युक्तगोत्रप्रवरसूत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डमुदाहृतम् ॥

अथेदानीं आपस्तम्बाद्युक्तसूत्रस्य भाष्यकारधूर्तस्वामिकपर्दिस्वामिगुहदेवस्वामिप्रभृतीनां मतानुसारेणेदं काण्डं व्याख्यास्यामः ॥

नित्यं नैमित्तिकं काम्यं कर्मोक्तं त्रिविधं श्रुतौ ।
तदङ्गगोत्रप्रवरास्सर्वे नोक्ता विभागशः ॥
कर्माधिकारस्सर्वेषां गोत्रप्रवरहेतुकः ।
विवाहश्चेति मन्वानः प्रवरानाह सूत्रकृत् ॥
समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥
यतस्ततोहं प्रवरान् गोत्रैस्सर्वैस्सहाधुना ।
वक्ष्ये ब्राह्मण्यरक्षार्थमित्याचार्योऽब्रवीदिमान् ॥

**प्रवरान्व्याख्यास्यामः ॥१ ॥** *

इत्येतत्सूत्रं महाप्रवरभाष्ये कृतव्याख्यानमिति न व्याख्यातम् ॥ १ ॥

**आर्षेयं...... विज्ञायते ॥ २ ॥**

आर्षेयमृष्यपत्यसम्बन्धमग्निमनो वृणीते । अथवा आर्षेयमृषेरपत्यमाहवनीयमग्निं यजमानेनोत्पादितत्वाद्यजमानस्य ऋषिसन्तानत्वात् तं वृणीते प्रार्थयते तद्धोत्रतयेति । एवं सति बन्धोरेव भेति । पूर्वर्षिसम्बन्धान्न च्यवते इत्यर्थः । अथो अपि च सन्तत्यै पूर्वेषामात्मनश्च सन्तानायेति ॥ २ ॥

**न देवैः......विज्ञायते ॥ ३ ॥**

अपिच विज्ञायते श्रूयते शाखान्तरे । न देवैः प्रजापत्यादिभिरार्षेयं वृणीते । न च मनुष्यैर्विद्वद्भिर्देवदत्तादिभिरार्षेयं वृणीते । ऋषिभिरेव वसिष्ठादिमन्त्रद्रष्टृभिरार्षेयं वृणीत इति ॥ ३ ॥

**आर्षेयं......विज्ञायते ॥ ४ ॥**

अथापरं विज्ञायते श्रूयते शाखान्तरे । आर्षेयमन्वाचष्टे । कस्मात् ? ऋषिणा पूर्वजनकीर्तितेन देवप्रसिद्धेन तदपत्यं पुरुषमनुबुध्यन्ते भोज्यान्नोऽयं तदपत्यत्वात् इति जानन्ति हीति ॥ ४ ॥

**यो वा......विज्ञायते ॥ ५ ॥**

अथ च विज्ञायते यो वै यजमानोन्यगोत्रस्सन् अथान्यगोत्रस्यार्षेयेण प्रवृणीते स ऋषिरस्य यजमानस्य तदिष्टं यागफलं वीतं ब्राह्मणतर्पणादिफलं वृङ्क्ते गृह्णातीति ॥ ५ ॥

**त्रीन् वृणीते......विज्ञायते ॥ ६ ॥**

त्रीन् मन्त्रकृतो मन्त्रद्रशो वृणीते, मन्त्राणां करणाप्रसक्तेः करणे चानित्य-त्वप्रसङ्गात् । यो यो यस्य यस्य ऋषिः यथार्षि मन्त्रद्रशो वृणीत इति विज्ञायते श्रूयते शाखान्तरे ॥ ६ ॥

**अथ......विज्ञायते ॥ ७ ॥**

---

*सत्रानन्तरं तदर्थं होतृप्रवरा अध्वर्युप्रवराश्चानुक्रमाद्वक्ष्यन्ते ॥ प्रज्ञातबन्धूनां यैरग्निर्व्रियन्ते ते प्रवराः, तानेतान्विस्तरेण प्रवरान्प्रपञ्चेन वक्ष्यामः ॥ इति कपर्दिभाष्ये विशेषः.

अथैकेषां शाखिनां श्रुतौ श्रूयते— एकमार्षेयं वृणीते, एकमृषिं संकीर्त्य तदपत्यमग्निं वृणीते । तथा द्वौ वृणीते त्रीन्वृणीते इत्यत्रापि । चतुरो न वृणीते । पञ्चातीत्य षडादीन्न वृणीते । अयमर्थः—आर्षेयवरणस्य मन्त्रदृक्त्वं विशेषणत्वेनोक्तमधस्तात् । अतश्चात्मीयानां मन्त्रदृशां यथेष्टसङ्ख्याकानामनियमेन वरणप्राप्तौ सत्यां 'न चतुरो वृणीते' 'न पञ्चातिवृणीते' इति चतुर्णामतिपञ्चानां च वरणप्रतिषेध इति वर्णयन्ति । तत्र 'आर्षेयं वृणीते इति विहिते वरणे 'एकं वृणीते द्वौ वृणीते त्रीन् वृणीते' इति सङ्ख्या विदधाति वाक्यत्रयमस्यां श्रुताविति कृत्वा कल्पसूत्रकारा इमामेव श्रुतिमवलम्ब्य प्रवर्तन्ते । या तु पूर्वोदाहृता श्रुतिः 'त्रीन्वृणीते मन्त्रकृतो वृणीते यथर्षिमन्त्रकृतो वृणीते' इति तत्र त्रीन्वृणीते इत्येतावन्मात्रं विधिः । इतरेषां कश्चिदुपक्रमः कश्चित्स्वव्युत्पत्त्यानुवादः कश्चित्प्रतिषेध इति मत्वैनामेव श्रुतिमवलम्ब्य न्यायविद्भिराचार्यैरधिकारलक्षणे षष्ठेऽध्याये त्र्यार्षेयस्यैवाधिकारो निरूपितः "अत्र्यार्षेयस्य हानं स्यादधिकारात्"* इत्यत्र । कल्पसूत्रकाराणां च बहुत्वात्प्रयोगशास्त्रकारत्वाच्च जैमिनेरेकत्वादेकस्य बहूनां मतविरोधे सति बहूनां मतमनुसर्तव्यमिति मत्वा प्रयोगार्थिनो वैदिकप्रयोगशास्त्रकारानेवानुगता इति ॥ ७ ॥

**इत......विज्ञायते ॥**

इदं सूत्रं महाप्रवरभाष्ये व्याख्यातमिति न व्याख्यायते । इदं सूत्रं शाखान्तरीयं श्रुतिवाक्यमिति मन्तव्यं, विज्ञायते इति प्रयोगात् ॥ ८ ॥

**पुरोहितस्य......विज्ञायते ॥ ९ ॥**

पुरोहितः पुर एनं क्षत्रियमभिषिक्तं वैश्यं वा नयतीति पुरोहितः क्षत्रियवैश्ययोः दार्विहोमिकोभिजनविद्यावृत्तादिगुणसम्पन्नः । तस्य हि प्रवरेण राजाऽभिषिक्तः प्रवृणीते । दर्शपूर्णमासयोः अत्र च वचनाद्ब्राह्मणोपि राज्यं प्राप्तः पुरोहितप्रवरेणैव प्रवृणीत इति । इदमपि सूत्रं शाखान्तरीयं श्रुतिवाक्यमेवेति मन्तव्यं, विज्ञायत इत्युक्तत्वादिति ॥ ९ ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां आपस्तम्बसत्याषाढादिसूत्रोक्तगोत्रप्रवरकाण्डानामाद्यं परिभाषासूत्रकाण्डं व्याख्यातम् ।

* मीमांसा. ६-१-४३. भाष्यधृतसूत्रपाठे अधिकारादित्यंशो न दृश्यते.

अथ कात्यायनलौगाक्षिप्रणीतवरप्राध्यायसूत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डमुदाहीरष्यामः—

अथातः प्रवरान् व्याख्यास्यामः ॥ १ ॥

तदेतद्ब्राह्मणं भवत्यार्षेयं वृणीते बन्धोरेव नैत्यथो सन्तत्या इति ॥ २ ॥

एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते पञ्च वृणीते न पञ्चातिवृणीते इति ॥ ३ ॥

अपि हैके मानवेति मनुवदित्येकैकमार्षेयं सार्ववर्णिकं प्रवृणीते । कस्य हेतोरिति । मानव्यो हि प्रजा इति ॥ ४ ॥

तदेतन्नोपपद्यते । न दैवैर्न मनुष्यैरार्षेयं वृणीते ऋषिभिरेवार्षेयं वृणीते ॥ ५ ॥

यः परार्षेयं वृणीते परं यज्ञस्याशीर्गच्छत्यावृश्च्यते वा एष ओषधीभ्यो वनस्पतिभ्यः पितृभ्य ऋषिभ्यो मनुष्येभ्यो यः परान् प्रवृणीते ॥ ६ ॥

तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानां युक्तं भवति ॥ ७ ॥

इत एवोर्ध्वं होता प्रवृणीतेऽन्वागित्यध्वर्युः ॥ ८ ॥

इति कात्यायनः ॥

इत एवोर्ध्वानध्वर्युर्वृणीतेऽमुतोर्वाचो होता ॥ ९ ॥

इति लौगाक्षिरित्येतावन्मात्रे पाठविशेषः । अन्यत्समानमिति ॥ ९ ॥

इति कात्यायनलौगाक्षिप्रणीतगोत्रप्रवरकाण्डानामाद्यं परिभाषासूत्रकाण्डमुदाहृतम्.

---

इह कात्यायनलौगाक्षिप्रणीतप्रवराध्याययोर्भाष्यादर्शनात् सूत्रान्तराभियोगबलात् गुरुप्रसादाच्च यथावदिदं काण्डं व्याख्यास्यामः—

अत्र श्लोकः—

बोधायनादिमुनिवृन्दपदारविन्दप्रेमप्रवर्धितमतिः पुरुषोत्तमोहम् ।

सूत्रान्तरेष्वभिनिवेशबलादिदानीं कात्यायनप्रवरभाष्यमहं करिष्ये ॥

**अथातः प्रवरान्व्याख्यास्यामः ॥ १ ॥**

इदं सूत्रं महाप्रवरभाष्ये वृत्तव्याख्यानमिति न व्याख्यायते ॥ १ ॥

**तदेतत्……सन्तत्या इति ॥ २ ॥**

इदमपि सूत्रमापस्तम्बसूत्रभाष्ये कृतव्याख्यातमेव ॥ १ ॥

**एक वृणीते……न पञ्चातिवृणीत इति ॥ ३ ॥**

अत्र दर्शपूर्णमासयोरेवार्षेयवरणविधिपरं ब्राह्मणं महाप्रवरभाष्ये अस्माभिरुदाहृतं व्याख्यातं च । " अथार्षेयं प्रवृणीत ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते परस्तादर्वाक् प्रवृणीते " इत्यादि। एतद्ब्राह्मणाभिप्रायं व्याचक्षाणेन कात्यायनेनैवमुक्तम्—"विद्वांश्चिकित्वान्मनुवद्भरतवदमुवदमुवदिति यजमानार्षेयाण्याह ।पुरस्तादर्वाञ्चि त्रीणि; यान्वतो वा मन्त्रकृतः" इति तत्र पुरस्तादर्वाञ्चि त्रीणीत्यस्य पक्षस्य मूलभूता श्रुतिरधस्तादेवोदाहृता "त्रीन्वृणीते मन्त्रकृतो वृणीते यथर्षिमन्त्रकृतो वृणीते" इति । इदानीं यावन्तो वा मन्त्रकृत इत्यस्य पक्षस्य मूलभूतां श्रुतिं शाखान्तरगतां स्वयमेवोदाहरति—एकं वृणीत इत्येवमाद्या । व्याख्याता चैषा श्रुतिरापस्तम्बसूत्रभाष्ये । अस्याः श्रुतेरयमभिप्रायः—यस्यैक एव मन्त्रदृगस्ति स एकं तमेव वृणीते । यस्य द्वावेव स्तः स द्वावेव वृणीते । यस्य त्रयस्सन्ति स त्रीनेव वृणीते । यस्य चत्वारस्सन्ति स चतुरो विद्यमानानपि न वृणीते । यस्य पञ्च सन्ति स पञ्च वृणीते । यस्य षडाद्या बहवस्सन्ति स पञ्चातीत्य षडादीन्न वृणीते विद्यमानानपीति । तत्र च यस्य यावन्तस्सन्ति न न्यूनाधिका इत्यत्र कल्पसूत्रकारा एव शरणं प्रमाणान्तराभावाच्च । इमामेव श्रुतिमवलम्ब्य कल्पसूत्रकाराः प्रवृत्ता इत्युक्तमधस्तात् ॥३॥

**अपि हैके……प्रजा इति ॥ ४ ॥**

अपि हेति पक्षान्तरपरिग्रहे । एके शाखिनस्ताण्डिनः छन्दोगाः । मानवेत्येकार्षेयं प्रवरं होतारः प्रवृणते । एक मनुवदित्यध्वर्यवः प्रवृणत इति । सार्ववर्णिकं सर्ववर्णेषु भवं प्रवरं प्रवृणीते । अत्र अथवा एके शाखिनस्ताण्डिनश्छन्दोगा इत्थं [illegible]यामनन्तीति वाक्यशषाऽध्याहर्तव्यः । एकार्षेयमानवप्रवरणे हेतुं पृच्छति—कस्य हेतोरिति । कुतो हेतोरित्यर्थः । ' षष्ठी हेतुप्रयोगे ' इति पञ्चम्यर्थे षष्ठीस्मरणात् । तत्र हेतुः—मानव्यो हि प्रजा इति । अयमर्थः—यतस्सर्वासां

प्रजानामाद्यो मूलभूतो मनुः " एकं वृणीते " इति ब्राह्मणान्तरं अतस्तमेव वृणते प्रजा इति । जातिः सामर्थ्यमर्थित्वं शास्त्रापर्युदासश्च येषां त्रैवर्णिकानां प्रवराधिकाराणां ते प्रजाशब्दवाच्या द्रष्टव्याः ॥ ४ ॥

अस्य ताण्डिनां पक्षस्य दूषणाय ब्राह्मणान्तरमाह—

**तदेतत्......वृणीते ॥ ५ ॥**

व्याख्यातं चेदं ब्राह्मणमापस्तम्बादिसूत्रभाष्ये । युक्त्या च ताण्डिदर्शनं दूषयन्ति बहुविदः । ताण्डिदर्शने हि सर्वेषां त्रैवर्णिकानां समानप्रवरत्वादविवाहः, विवाहे च वर्णसाङ्कर्यप्रसङ्गः, गुरुतल्पदोषप्रसक्त्या चण्डालोत्पत्तिदोषप्रसक्त्या च ब्राह्मण्यनाशान्मूलोच्छेदः प्रसज्यते इति ॥ ५ ॥

**यः परार्षेयं......वृणीते ॥ ६ ॥**

यः परार्षेयस्सन् स्वस्मात्परस्यार्षेयेण प्रवृणीते तदीयं यज्ञफलं तमेव परं गच्छाति स एव भुङ्क्ते इत्यर्थः । किञ्च—आवृश्च्यते आच्छिद्यते वा एषः देवर्षिपितृमनुष्यसाध्याद्यज्ञफलादिति ॥ ६ ॥

इदानीं ताण्डिश्रुतेरप्रामाण्यं परिहर्तुं विषयान्तरमाह—

**तदेतत्......भवति ॥ ७ ॥**

ब्राह्मणक्षत्रियाभ्यामन्यत्र वैश्यविषया ताण्डिश्रुतिरित्यदोषः । न हि तत्र समानप्रवरदोषोस्ति अवर्जनीयत्वादेकदेशक्षामवत् । वात्सप्रीतिहोता वत्सप्रिवदित्यध्वर्युरित्यत्रापि स्ववर्णप्रवरैस्तुल्यत्वात्समानप्रवरदोषो ब्राह्मणविषय एव निश्चीयते । तस्माद्ब्राह्मणानामेकद्वित्रिपञ्चार्षेयाणां होतुरध्वर्योश्च प्रवरा व्याख्येयाः॥७॥

तत्र बहूनां वरणे क्रमविशेषमाह—

**इत एवोर्ध्वं होता प्रवृणीतेऽन्वगित्यध्वर्युः ॥ ८ ॥**

इति कात्यायनः । इतः प्रवरकर्तव्यताप्रतिपादनादूर्ध्वं होता प्रवृणीते भृग्वादान्मन्त्रदृशः यथा भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । अन्वगित्यध्वर्युः । होतुः प्रवरक्रममनुसरन्नध्वर्युः प्रवृणीते । इति शब्देन तमेव प्रवरक्रमं दर्शयति—यथा भृगुवच्च्यवनवदप्नवानवदूर्ववज्जमदग्निवदिति । तथाहि—ब्राह्मणमध्वर्युप्रवरविधिपरं वाजिनां 'परस्तादर्वाक् प्रवृणीते' इति । स्वयमप्याह—यजमानार्षेयाण्याह

परस्तादर्वाञ्चि त्रीणीति । लौगाक्षिपाठे इतिव्याख्या । 'इति एवोर्ध्वं होता' इति कात्यायनादिभिस्समानम् । 'अमुतोर्वाचो होता' इत्यत्र विशेषः । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होतुः प्रवरादमुचोर्वाचोध्वर्युः प्रवृणीते अन्त्यमारभ्य मूलभूतादृषेः यथा जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अत्र सर्वेषामाचार्याणां होतुः प्रवरक्रमस्समानः । अध्वर्युप्रवरक्रमस्तु कात्यायनादन्येषामाचार्याणां समानः । कात्यायनस्य तु होतृप्रवरक्रम एवाध्वर्युप्रवरक्रम इति विशेषः ॥ ८–९ ॥

इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां कात्यायनलौगाक्षिप्रणीतप्रवराध्यायगोत्रसूत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डं समाप्तम्.

अथेदानीमाश्वलायनप्रणीतगोत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डमुदाहरिष्यामः—

**सर्वे समानगोत्रास्स्युरिति गाणगारिः कथं ह्याप्रीसूक्तानि भवेयुः कथं प्रयाजा इति ॥ १ ॥**

**अपि नानागोत्रास्स्युरिति शौनकस्तन्त्राणां व्यापित्वात् ॥ २ ॥**

**गृहपतिगोत्रान्वया विशेषास्तस्य राद्धिमनुराद्धिस्सर्वेषां प्रवरास्त्वावर्तेरन्नावापधर्मित्वादिति ॥ ३ ॥**

इत्थमाश्वलायनीयप्रवराध्यायसूत्राणां परिभाषासूत्रकाण्डं समाप्तम् ।

अत्र भाष्यकारदेवस्वामिमतानुसारेण व्याख्या प्रस्तूयते—

**सर्वे......प्रयाजा इति ॥ १ ॥**

उक्तानि वैतानिकानि कर्माणि सत्त्रपर्यन्तानि । तेषां मध्ये तिसृभिः कोटिभिस्सङ्ख्यातगोत्राणां ब्राह्मणानां प्रतिगोत्रं प्रवराः कर्तव्यत्वेन विहिताः— "आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते पञ्च वृणीते न पञ्चातिवृणीते" इति श्रुतिभिः । सत्त्रेषु बहुयजमानत्वमुक्तं 'ऋद्धिकामास्सत्त्रमासीरन्' "उपेयुः" इति च बहुवचनान्तासीतोपेतिचोदितत्वात्, 'चतुर्विंशतिपरमास्सत्त्रमासीरन्' इति च सङ्ख्याश्रुतेः । बहुषु च यजमानेषु समानगोत्राश्च

संभवन्ति नानागोत्राश्च । तत्रैवं सति सत्त्राधिकारिणो विषयीकृत्य संदेहः—किं समानगोत्रा एव सर्वे स्युरुत नानागोत्रा अपीति । तत्र सर्वे समानगोत्रस्स्युरिति गाणगारिराचार्यो मन्वते । तत्र गोत्रस्वरूपं बोधायनोक्तं द्रष्टव्यं—" सप्तानां सप्तर्षीणामगस्त्याष्टमानामेक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् " इति । तदुभयं गोत्रं समानगोत्र च हृदये निधाय सर्वे समानगोत्रास्स्युरिति प्रतिज्ञातेऽर्थे हेतुमाह—कथं ह्याप्रीसूक्तानीत्यादिना प्रयाजा इन्यन्तेन ॥

अयमर्थः—आप्रीसूक्तानि तावत्प्रतिगोत्रं व्यवस्थितानि—' समिद्धोऽग्निः ' इति शुनकानां ' जुषस्व नस्समिद्धम ' इति वसिष्ठानां ' समिद्धो अद्य ' इति वा सर्वेषामिति । तथा प्रयाजा अपि—नाराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकात्रिवाध्र्यश्वादीनामिति । प्रतिगोत्रं व्यवस्थितास्सन्तो गोत्रनानात्वपक्षे विरुध्यमानास्समानगोत्रपक्ष एव युज्यन्ते ॥ १ ॥

ननु प्रतिगोत्रमाप्रीसूक्तप्रयाजाभ्यामः कस्मान्न भवति प्रवरवत्? । नेति ब्रूमः—समानगोत्रेष्ववाभ्यासेन विनाऽपि चरितार्थत्वात्प्रकृतौ चानभ्यस्तत्वादिहापि तत्प्राप्तेः । यदुक्तं प्रवरवदिति तस्योत्तरमुत्तरं वक्ष्यामः । अपि च प्रतिगोत्रमभ्यासे सत्यङ्गानां क्रमकोपः प्रसज्यते । गृहपतिब्रह्मोद्गातृहोत्रध्वर्युप्रभृतियजमानधर्माणां बद्धक्रमत्वात् तस्मात्समानगोत्रा एवेति प्राप्ते सिद्धान्तमाह—

**अपि......व्यापित्वात् ॥ २ ॥**

अयमर्थः—नानागोत्रा अपि न समानगोत्रा एव । कुतः तन्त्राणां व्यापित्वात् । तन्त्रशब्देन मन्त्राणां साङ्गप्रधानविषयाः प्रयोगा उच्यन्ते । ते ऋद्धिपुष्टिस्वर्गादिफलकामिनस्सत्त्रे स्युः, पुरुषमात्रव्यापित्वात् । समानगोत्रपुरुषविषयत्वेन सङ्कोचकल्पनायामङ्गवशेन प्रधानाधिकारसङ्कोचो विना वचनेन कल्पितस्स्यात् । स चान्याय्यः सति निर्दोषे गत्यन्तरे ॥ २ ॥

गत्यन्तरमाह—

**गृहपतिगोत्रान्वया विशेषाः...**इति ।

ये गाणगारिणा समानगोत्रप्रतिज्ञासिद्ध्यर्था आप्रीसूक्तादयो विशेषा उक्तास्ते गृहपतिगोत्रानुसारेण कर्तव्याः तत्प्रधानत्वात्, तन्मुख्यास्तत्र ।.सीरन्नित्युक्तत्वात्

आपस्तम्बवचनाच्च "सर्वे इष्टप्रथमयज्ञा अपि वा गृहपतिरेव" इति । तथा 'गृहपतेरेव सामिधेनीकल्पेनावदानकल्पेनेति प्रक्रमेयुर्यानि चान्यान्येवंरूपाणि स्युः' इत्यनेन सूत्रद्वयेन गृहपतिगोत्रान्वयानेव गोत्रादिकृतान्विशेषान् दर्शयति. तस्मादविरोधः । ननु गृहपतिगोत्रानुसारेणाङ्गेषु कृतेषु येषामङ्गं विकलं तेषां फलसिद्धिर्न स्यादित्याशङ्क्याह—तस्य राद्धिमनुराद्धिस्सर्वेषामिति । तस्य गृहपतेः फलसिद्धिमनु पश्चादितरेषामपि फलसिद्धिस्स्यादित्यर्थः । तत्प्रधानत्वात् । नानागोत्राणां यजमानानां प्रतिगोत्रं प्रवरा अनुवर्तेरन् । कुतः ? आवापधर्मित्वात् प्रवरधर्मित्वात् । उप्यन्ते इत्यावापाः आहवनीयाः, 'अग्निं समावपेयुः' इति वचनात् । अथवा—उप्यन्ते हवींष्याहवनीयेष्वित्यावापाः आहवनीयाः, तेषामाहवनीयानामावापानां प्रवरान् प्रति धर्मित्वात् । तेषां चाहवनीयधर्माणां प्रवराणां प्रतिप्रधानमावृत्तिर्युक्ता, प्रधानवशवर्तित्वादङ्गानाम् । आहवनीयसंस्कारत्वं च प्रवराणामधस्तादेव व्याख्यातम् ॥

ननु पूर्वापरविरुद्धमभिहितं कथं ? नानागोत्रपक्षे विरुध्यमाना विशेषाः गृहपतिगोत्रान्वया इत्युक्तमधस्तात् । नैष दोषः । कथं ? आहवनीयानां सप्तर्ष्यपत्यसम्बन्धसङ्कीर्तनेन सम्बोधनात्मकाः प्रवराः; प्रवरैश्च सम्बोधिता आहवनीया देवेभ्यो हव्यं वहन्तीत्यधस्तादुक्तं महाप्रवरभाष्ये । तत्र यदि गृहपतेरेव प्रवरः क्रियेत नेतरेषां कश्यपविश्वामित्रात्रिगोत्राणां यजमानानां [तदा] असम्बोधितत्वात् तेषामाहवनीया देवेभ्यो हव्यं न वहेयुः । तस्मात्तदर्थं काश्यपविश्वामित्रात्रेयेत्यादि प्रतिगोत्रं प्रवरावृत्तिर्युक्ता । किञ्च—गृहपतेराहवनीयोऽन्येषामनाहवनीय एव; यथा गृहपतेः पुत्रोऽन्येषामपुत्रः, सम्बन्धिवचनत्वात्पुत्रशब्दस्य । तथाऽऽहवनीयशब्दोऽपि सम्बन्धिवचन एव । अत एवाहवनीये नान्यो होमं करोति अत एव चाहवनीयस्य प्रतिनिधिर्निषिद्धः षष्ठे प्रतिनिधिप्रकरणे 'न देवताग्निशब्दक्रियाणामन्यार्थसंयोगात्'* इत्यत्र । तस्मात्साधूक्तं नानागोत्राणां प्रतिगोत्रं प्रवरा आवर्तेरन्निति । स्थितेऽधिकरणे सन्देहः—किं नानागोत्राणामेव प्रवरा आवर्तेरन् उत समानगोत्राणामपीति ? । तत्रागृह्यमाणविशेषत्वात्समानगोत्राणां प्रवरास्तन्त्रेणैवेत्येके मन्यन्ते । अपरे पुनरावृत्तिं मन्यन्ते, नानागोत्रव्यवायात् यजमानधर्माणां बद्धक्रमत्वात्सकृत् प्रयोगे सति क्रमकृतं वैगुण्यं प्रसज्यत इति । तथा

*मीमां, ६-३-१८.

चापस्तम्बः 'नानागोत्रव्यवायादेव समानगोत्राणामार्षेयवरणमावर्तेतेत्येके मन्यन्ते इति ॥ ३ ॥

इत्याश्वलायनोक्तप्रवराध्यायगोत्रसूत्रकाण्डानामाद्यं परिभाषासूत्रकाण्डं व्याख्यानमिति ॥

उक्तानि सूत्रकाण्डानि सम्यग्ज्ञातवतां सताम् ।
गोत्रप्रवरकाण्डेषु वक्ष्यमाणेष्वधिक्रिया ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां परिभाषासूत्रकाण्डानि व्याख्यातानि समाप्तानि.

---

अतः परं भृगूणां गोत्रप्रवरकाण्डानि क्रमेण वक्ष्यन्ते ॥

अत्र श्लोकः—

बोधायनादिमुनिपुङ्गवपादपद्मप्रणामधर्शलिशिरसा पुरुषोत्तमेन ।
प्रारभ्यते प्रवरगोत्रविवाहतत्त्वप्रकाशनाय विदुषां भृगुगोत्रकाण्डम् ॥

इति तत्र प्रथमं तावद्बोधायनीयं भृगुगोत्रकाण्डमुदाहरिष्यामः—

भृगूणामादितो व्याख्यास्यामो वात्स्या मार्कण्डेया मांडूकेया मांडव्याः कांसय आलेखना दार्भायणाश्शार्कराक्षा देवतायनाश्शौनकायना माधूकेयाः पार्षिकास्साम्प्रभायनाः पैलाः पैङ्गलायना दाभ्रेषकयो वाह्यकयो वैश्वानरयो वैहीनरयो विरोहिता बाह्या गौञ्जायनाः ष्टैकयः कासकृत्स्ना वाद्धूतका ऋतभागा ऐतिशायना जानायनाः पाणिनिर्वाल्मीकिस्थौलपिण्डयस्सैषातवा जीहितयस्सावर्णिर्वाकायना वालायनास्सौकृतयो मण्डवस्सौविष्टयो हस्ताग्रयस्सौद्धकयो वैकर्ण्या द्रोणजिह्वय अरसयः काम्बरोदरयः काम्बोरकृद्दैहलिर्विरूपाक्षा वृकाश्वा उच्चैर्मन्यवो द्वैमत्या अर्यायणा माकायणाः काह्वायना वायवा वयनीनश्शङ्खवाः खण्डवश्चान्द्रमसो गाङ्गेया नोपेया याज्ञीया जाबालिर्बाहुमित्रायणा आपिशलयो वैष्टपुरेया लोहितायना उष्ट्राक्षामालायनश्शारद्वन्तायना राजतवाहा वासा

वात्स्याना* इत्येते वत्साः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता । जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः ॥

इति महाप्रवरे तृतीयोऽध्यायः ।

विदाऽऽशैला अवटाऽऽशैलाः प्राचीनयोग्या अभवदाताः काण्डरथयो वैतभृतयः पुलस्तय आर्कायणास्ताम्रायणाः क्रौञ्चायना लामला§ इत्येते विदाः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानौर्ववैदेति होता । विदवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः ॥

इति महाप्रवरे चतुर्थोऽध्यायः ।

आर्ष्टिषेणा नैरथयो याम्यायनयः काणायना गौराम्बी राभि†रित्येते आर्ष्टिषेणास्तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति होता । अनूपवदार्ष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः । एते पञ्चावर्त्तिनः ॥

इति महाप्रवरे पञ्चमोऽध्यायः ।

यस्का मौना मूको वाधुलो वर्षपुष्यो मातलयो राजिततायिनो दुर्दिनो भास्करो दैवतायनो वाकलयो माध्यमेया वासयः कौशाम्बेयाः

---

* शृं—मार्कण्डेया माढका माण्डव्या...शार्कराक्ष्या दैवन्त्यायनास्सौनकायना माण्डूकेया वार्षिकास्सान्तथायनाः पैलाः पैलायना दध्रेषकयो वैश्वानरयो वैहीतकयो विरोहिता गौश्रायणा यष्टेषकयो काशकृत्स्ना वाद्भुतका ऋतभागा एतिशायनीया आनायनीयः...स्यैलपिण्डयश्यैखवादाजिहीतयस्सावर्णिवाकायना वानायनस्सौकृतयो मण्डविशौ विष्टयो हस्त्यग्नयश्शौद्यकयो वैकर्णा द्रौपजिह्वय औरशयः काम्बोदरयः कठोरकृत्...दवमत्या आर्कायणाः काह्वायना वायवापनयश्शार्ङ्गरवश्चान्द्रमसो गाङ्गेया अनूपेया याज्ञिकाः पारिमाण्डलिबाहुमित्रायणा अपिङ्गलेयो वेष्टपुलेयो रोहितायनाश्शारद्वतायना राजितवाहा वानावात्याः.

§ शृं–अभयदाताः काटेरवयो...आर्कायणा मार्कायणा नाष्ट्रयाणाः कैङ्क्षायना भुजङ्गायना जामालाः.

† शृं–नैरथयो ग्राम्यायणाः पोटकलायनास्सिद्धास्सुमनायना गौराम्भिराम्भि.

कौटिल्यास्सत्यकाश्चित्रसेना भागुरिर्नृप + इत्येते यस्कास्तेषां त्र्यार्षेयः प्रवरो भवति । भार्गववीतहव्यसावेदसेति होता । सवेदोवद्वीतहव्यवद्भृगुवदित्यध्वर्युः ॥

इति महाप्रवरे षष्ठोऽध्यायः ।

मित्रयुवो रौष्ट्यायनस्सापिण्डिनः पुराभिनाया माल्या यावाल्या महावाल्यास्तार्क्ष्यायणा उक्षायणा ओजायना माजाधयः कैतवायना† इत्येते मित्रयुवः । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गववाध्यश्वदैवोदासेति होता । दिवोदासवद्वध्यश्ववद्भृगुवदित्यध्वर्युः ॥

इति महाप्रवरे सप्तमोऽध्यायः ।

वैन्याः पार्था बाष्कलास्तेषां त्र्यार्षेयः प्रवरो भवति । भार्गववैन्यपार्थेति होता । पृथुवद्वेनवद्भृगुवदित्यध्वर्युः ॥

इति महाप्रवरे अष्टमोऽध्यायः ।

शुनकाः गार्त्समदा यज्ञपयः सौगन्धयः खार्दमायना गार्भायनाः मत्स्यगन्धाः श्रोत्रियास्तैत्तिरीया* इत्येते शुनकास्तेषामेकार्षेयः प्रवरो भवति । शौनकेति होता शुनकवदित्यध्वर्युः । गार्त्समदेति होता गृत्समदवदित्यध्वर्युरिति वा ॥

इति महाप्रवरे नवमोऽध्यायः ।

इति बोधायनीये महाप्रवरे भृगूणां गोत्रकाण्डमुदाहृतम् ।

---

+ शृं–...मौको...वर्षपुष्ठो वालेयो राहिततायना उदानो बास्करो रैवन्त्यायनो बालकयो व्याध्यमेया वादायः कौशाम्बेयास्सत्यकचित्रसेना भागन्तकया बार्काश्वकय औक्चा औगचितयो भागुरिरिद्धयः

† शृं–मित्रयूनां रौक्म्यायनानां सायण्डिनां मुरातिनेयः वाल्या बाल्यायमाल्यायमहाबाल्यायास्ताक्षायणा उरक्षायणा वाज्ञायना मान्दशयः कैतवायनः.

* शृं शुनका...यपयस्सौमयः खार्दमायना गाङ्गायना मत्स्यगन्धाश्विक्षाः श्रोत्रियास्तित्तिरयः पत्युलाः.

अथापस्तम्बाद्युक्तं भृगूणां गोत्रप्रवरकाण्डमुदाहरिष्यामः—

भृगूणामेवाग्रे व्याख्यास्यामो जामदग्न्या वत्सास्तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्रवानौर्वजामदग्न्येति । जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । त्र्यार्षेयमुहैके भार्गवौर्वजामदग्न्येति जमदग्निवदूर्ववद्भृगुवदिति । एष एवाविकृतः सावर्णिजीवन्तिजामाल्यैतिशायनवैरोहित्यावटप्राचीनयोग्यानाम् । अथार्ष्टिषेणानां पञ्चार्षेयः भार्गवच्यावनाप्रवानार्ष्टिषेणानूपेति । अनूपवदृष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदिति । त्र्यार्षेयमहैके भार्गवार्ष्टिषेणानूपेति अनूपवदृष्टिषेणवद्भृगुवदिति ॥

इत्यापस्तम्बाद्युक्तप्रवराध्याये प्रथमः खण्डः.

अथ वीतहव्या यास्कवाधूलमौनमौकास्तेषां त्र्यार्षेयो भार्गववैतहव्यसावेदसेति सवेदोवद्वीतहव्यवद्भृगुवदिति । अथ गार्त्समदाश्शुनकास्तेषामेकार्षेयो गार्त्समदेति होता गृत्समदवदित्यध्वर्युः । अथ वाध्र्यश्वा मित्रयुवास्तेषामेकार्षेयो वाध्र्यश्वेति होता वध्र्यश्ववदित्यध्वर्युः । अथ वैन्याः पार्थास्तेषां त्र्यार्षेयो भार्गववैन्यपार्थेति पृथुवद्वेनवद्भृगुवदिति ॥

इत्यापस्तम्बाद्युक्तं भृगूणां गोत्रप्रवरकाण्डमुदाहृतम् ।

अथेदानीं लौगाक्षिकात्यायनप्रणीतं भृगूणां गोत्रप्रवरकाण्डमुदाहरिष्यामः—

भृगूणामादितो व्याख्यास्यामो भृगवो जमदग्नयो वत्सा दार्भिनालायना वागायनानुसातकिजैह्यतिपलशौनकायनजीवन्तिकाम्बलोदरिवैहानरिवैरोहित्यरेखायनिपार्वतिवैश्वानारिवरूपाक्षिपाणिलिवृकाश्वकानामुच्चयमानसात्यकर्णिवैष्टपुरेयिवालाकितौलकेशिनामृतभागार्तभागमार्कण्डेयमण्डमाण्डव्यमाण्डूकेयाजिह्वातिथीनां स्थौमागौरिस्थौलसौखबार्हिशकेराक्षिदेवमतीनां आर्कायणाह्वायनगार्भ्यायनगोह्वायनगोष्ठ्यायनवैशम्पायनसाभेरवगौलवचाणूकेयरैकणिसांकृत्यैतिशायनानां याज्ञेयभ्राष्ट्रेय-

भ्रात्रेयलाक्षेयलाकुश्चिलालाटिपारिमाण्डलीनां मालायनातिगौविसौष्मिकीनां पैंगलायनसात्यकायनकौवहहास्तिचान्द्रमसानुलौमिकौटचक्षुक्रौश्चाक्षिकानां ससारध्वजिवाद्यापलेपयनैवार्षिसाककल्पोष्ट्राक्षिपाकानुमतिजैकजिह्विवैह्याष्मन्याष्मक्रमणिनिराणिवासिमादानस्योषस्यन्दनिकटेरणिलवेरणिसौगौलिकासकृत्स्नमाध्योदा § इत्येतेषामविवाहः, तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । भृगुवच्च्यवनवदप्नवानवदूर्ववज्जामदग्निवदिति ॥

इति प्रथमो गणः.

अथ जमदग्नयो विदाः प्राचीनयोग्याः पौलस्त्या वेदभृतः क्रौञ्चायना अभयजातास्त्रैकायना अवटा भ्राज * इत्येषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति । भार्गवौर्वजामदग्न्येति । भृगुवदूर्ववज्जमदग्निवदिति॥

इति द्वितीयो गणः.

वात्स्यानां त्र्यार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानेति । भृगुवच्च्यवनवदप्नवानवदिति ॥

इति तृतीयो गणः.

भृगवेदियामार्गपथाग्राम्यायनिरध्वनैकासिरापस्ताम्बिभ्रालिः कार्दमायनार्ष्टिषेणगर्दभयानूपा † इत्येतेषामविवाहस्तेषां पञ्चार्षयः प्रवरो

§ शृ—वात्सा....वादायना...कम्वलोदरिवहायन...रेशायनि शार्याति वैश्वानारि...पाणिलि...माण्डूकेयाजिपीतातिथेयानां स्थौमौगोतिस्थौ ऊपिण्डि शखाबाहशाकराक्षि...आकार्यण काल्हायन...वैशम्पायन...शाङ्गर...वाणुकय नैकर्णि...मालायनि आविगोवि सौष्मिकीनां पङ्गलायन सात्यकायन काचहस्ति...कौटिशौकि कौञ्चाक्षिकांससारध्वजिवाटितालेपयनेकार्षिशाकत्याश्राक्षिपानुमतिजैकजिहिजैह्याष्पक्षेमनिरार्णवासिमदनस्यापस्यन्दातिकण्ठेरणि सौगुलिकाशकृत्स्नमध्योदाः.

* क्रौञ्चायना अभजातास्त्रैकायना अवटा भ्राजत्याः.

† भृगवेदायामीर्गपथा॰ ग्राम्यायणिरध्वनेसिरापस्ताम्बिधर्मालिपः कामिः कार्दमायनार्ष्टिषेणिर्गर्दभिरानूपाः.

भवति । भार्गवच्यावनाप्रवानार्ष्टिषेणानूपेति । भृगुवच्च्यवनवदप्रवान-वदृष्टिषेणवदनूपवदिति ॥

इति चतुर्थो गणः.

आश्वलायनाः साकिताक्षामैत्रेयाः अथ साश्वयौ द्रोणायनाः अपिशला आठिकायना हासजिह्वा * इत्येषामविवाहः, तेषां त्र्यार्षेयः प्रवरो भवति । भार्गववाध्र्यश्वदैवोदासेति । भृगुवद्वध्र्यश्ववद्दिवोदासवदिति ॥

इति पञ्चमो गणः.

वीतहव्यायस्कवधूलामाधूनमौद्गलान्त्यायनार्थलेखाः भागलेयभाग-विज्ञेयकौशाम्बेयवृकाश्वविमदौकिवारेयगौरिक्षितदैर्घ्यचितपञ्चालवपौ-स्मावरारमोदायना† इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति। भार्गववैहतव्यसावेदसेति। भृगुवद्वीतहव्यवत्सवेदसवदिति ॥

इति षष्ठो गणः.

याजपयाः सौकरा मांसगन्धाः कर्दमायनाश्रौक्षाःश्रोत्रियाः प्रत्यू-षागृत्समदा‡ इत्येतेषामविवाहः । तेषामेकार्षेयः प्रवरो भवति । गार्त्स-मदेति । गृत्समदवदिति । द्व्यार्षेयो वा । भार्गवगार्त्समदेति । भृगु-वद्गृत्समदवदिति ॥

इति सप्तमो गणः.

इह कात्यायनपाठानुसारेणाध्वर्युप्रवरक्रम उदाहृतः । लौगाक्षिपाठे बौधायनाद्यु-क्ताध्वर्युप्रवरक्रमा अविशिष्टा द्रष्टव्याः ।

इति कात्यायनलौगाक्षिप्रणीतं भृगूणां गोत्रकाण्डमुदाहृतम् ।

* कालयनास्साकिताक्षा मैत्रेया यज्ञशान्तयो द्रोणायना राम्रायणा आपिशला आठिकायना दासजिह्वाः.

† शृं यास्कवाधूलमानमौकयावन्त्यायनार्धलेभिभागलेय कौशाम्बेय वृकाश्वमिक दोकियारेयगौरिहित दैर्घ्यचितपञ्चालवपौष्णावतारमोदयना.

‡ गृत्समदाश्शुनकाः.

अथाश्वलायनोक्तं भृगूणां गोत्रकाण्डमुदाहरिष्यामः—

जामदग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्रवानौर्वजामदग्न्येति । अथ ह्याजामदग्न्यानां भार्गवच्यावनाप्रवानेति । आर्ष्टिषेणानां भार्गवच्यावनाप्रवानार्ष्टिषेणानूपेति । विदानां भार्गवच्यावनाप्रवानौर्ववैदेति । यास्कवाधूलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिजीवन्त्यायनानां भार्गववैतहव्यसावेदसेति । श्यैतान्यां भार्गववैन्यपार्थेति । मित्रयुवां वाध्यश्वेति । त्रिप्रवरं वा भार्गवदैवोदासवाध्यश्वेति । शुनकानां गृत्समदेति । त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति ॥

इत्याश्वालायनोक्तं भृगूणां गोत्रकाण्डमुदाहृतम् ।

अथ मत्स्यपुराणोक्तं गोत्रप्रवराध्यायमुदाहरिष्यामः—

पौलोम्यजनयद्विप्रं देवानां तु कनीयसम् ।
च्यवनं च महाभागमप्रवानं तथाप्यसौ ॥

सर्वस्थिरचरव्यक्तिसृष्टिस्थित्यन्तकर्मणे ।
हृद्यन्तश्शुद्धविज्ञानज्योतिषे ब्रह्मणे नमः ॥
प्रोक्तैषा कल्पसूत्रोक्तगोत्रप्रवरमंजरी ।
वक्ष्ये मत्स्यपुराणोक्तां गोत्रप्रवरमंजरीम् ॥
मनसा वचसा शिरसा सहसा स्थिरकं सगुरुं प्रणिपत्य हरिम् ॥
गुरुणा हरिणा मनवे मुनये गदितान्प्रवरान्प्रवदाम्यधुना ॥

सूत उवाच—

इत्याकर्ण्य स राजेन्द्र ओंकारस्याभिवर्णनम् ।
ततः पप्रच्छ देवेशं मत्स्यरूपं जलार्णवे ॥

मनुरुवाच—

ऋषीणां नामगोत्राणि वंशावतरणं * तथा ।

* वंशानुचरितं.

प्रवराणां तथा साम्यमसाम्यं विस्तराद्वद ॥
महादेवेन ऋषयश्शप्तास्स्वायम्भुवेऽन्तरे ।
तेषां वैवस्वते प्राप्ते सम्भवं मम कीर्तय ॥
दाक्षायणीनां च तथा प्रजाः कीर्तय मे प्रभो ।
ऋषीणां च तथा वंशं भृगुवंशविवर्धनम् ॥

मत्स्य उवाच--

मन्वन्तरेऽस्मिन्संप्राप्ते पूर्वं वैवस्वते तथा ।
अश्वमेधे सुवितते ब्रह्मणः परमेष्ठिनः ।
महादेवस्य शापेन त्यक्त्वा देहान्स्वयं* ततः ॥
ऋषयस्ते समुद्भूता हुते शुक्रे यथेच्छया ।
देवानां मातरो दृष्ट्वा देवपत्न्यस्तथैव च ॥
स्कन्नं शुक्रं महाराज ब्रह्मणः परमेष्ठिनः ।
तज्जुहाव† ततो ब्रह्मा ततो जातो हुताशनः ॥
ततो जातो महातेजा भृगुश्च तपसां निधिः ।
अंगारेष्वंगिरा जातो ह्यर्चिभ्योत्रिस्तथैव च ॥
मरीचिभ्यो मरीचिस्तु ततो जातो महातपाः ।
केशैस्तु कपिशैर्जातः पुलस्त्यस्तु महातपाः ॥
केशैः प्रलम्बैः पुलहस्ततो जातो महायशाः ।
वसुमध्यात्समुत्पन्नो वसिष्ठश्च तपोधनः ॥
भृगुः पुलोम्नश्च सुतां दिव्यां भार्यामविन्दत ।
यस्यामस्मात्सुता जाता देवा द्वादश याज्ञिकाः ॥

---

* देहान्. समं † तज्जहार.

भुवनो भौवनश्चैव सुजन्यस्सुजनस्तथा ।
शुचिः क्रतुश्च मूर्धा च याज्यश्च वसुदश्च ह ॥
प्रभवश्चाव्ययश्चैव दक्षो द्वादशमस्तथा ।
इत्येते भृगवो नाम देवास्तु द्वादशात्मकाः ॥
पौलोम्यजनयद्विप्रं देवानां तु कनीयसम् ।
च्यवनं च महाभागमप्रवानं तथाऽप्यसौ ॥
अप्नवानात्मजश्चौर्वो जमदग्निस्तदात्मजः ।
और्वो गोत्रकरस्तेषां भार्गवाणां महात्मनाम् ॥
तद्गोत्रप्रवरान्वक्ष्ये भृगोर्दीप्तौजसस्त्वहम् ।
भृगुश्च च्यवनश्चैव अप्नवानस्तथैव च ॥
और्वश्च[1] जमदग्निश्च वत्सो दर्भिनैडायनः ।
वैरायनो वीतहव्यः पैलश्चैवानुसारकिः ॥
शौनकायनिर्जीवन्ति[2] काम्बोदाः [3]पार्षतिस्तथा ।
वैहीनरिर्विरूपाक्षो रौहित्यायनिरेव च ॥
वैश्वानरिः कपानीलुर्वासावर्णिविकश्चरुः ।
विष्णुः पैलोपि वलौकि[4]नौलिको नान्तभागिनः ॥
मृतो भार्गोथं[5] मार्कण्डुर्जह्निनो[6] वीतिनस्तथा ।
मण्डुमाण्डव्यमण्डूकरुफेनपागनि[7]भस्तथा ॥
स्थौलपिण्डिश्शिषापत्ति[8]श्शार्कराक्षिस्तथैवच ।
जलुपिध्वजकृत्सन्यौ[9] तथाऽन्यः पौगलायनिः[10] ॥

---

१ वैन्यश्च. २ जीवासि. ३ कार्पि. ४ विष्णुपौलोकिवान्ताकि. ५ सुताभोगोथ. ६ रहितो.
७ पेगभिन. ८ शिखापत्तिः. ९ जालधिस्सैध्वजिः कृच्छः. १० पैङ्गलायनः.

मार्कायणो[1] दिवपतिर्माण्डूमर्वृषभिस्स च ।
लवस्सांकृत्यशालाकिस्तथा चैवानुशातकिः ॥
कोपियज्ञो मित्रयज्ञस्तथा वा मित्रलायनः[4] ।
मार्गायनो[5] ह्वायनिश्च ऋषिर्गौत्सायनस्तथा ॥
गोष्ठ्यायनो[7] ह्वायनिश्च वैशम्पायनगालवौ ।
वैकार्णिनिश्शार्ङ्गरवो यज्ञेयिर्भार्ष्टकायनिः ॥
लालविर्लाभृतिश्चैव लल्यानः परिमण्डलः ।
शाल्यायनिर्मलायनिः कौटिलिः कोचहस्तिकः ॥
सौक्तिस्तकोटरश्चैव साक्षी सान्द्रमणिस्तथा ।
नैकजिह्वो जिह्वशून्यः केसलेर्हिकश्चारिः ॥
सौरद्धतिस्स[11] नैमिश्यो लोष्टाक्षिश्च भवेरणिः ।
वागायनिस्स्वानुमतिः पौर्णसौगन्धिकासिकृत्[12] ॥
सामान्यतस्तथैवैषां पञ्चार्षः प्रवरो मतः ।
भृगुश्च च्यवनश्चैव अप्नवानस्तथैव च ॥
और्वश्च जमदग्निश्च पञ्चते प्रवरा मताः ।
अतः परं प्रवक्ष्यामि शृणु त्वन्यान् भृगूद्वहान् ॥
जमदग्निर्विदश्चैव पौलस्त्यो वैजभृत्तथा ।
ऋषिश्च भवजातश्च कायनिश्शाकटायनः ॥
और्वेया मारुताश्चैव सर्वेषां प्रवराश्शुभाः ।
भृगुश्च च्यवनश्चैव अप्नवानस्तथैव च ॥

१ मार्कायणो. २ माण्डूक. ३ कापिय. ४ चैवानिलायनः. ५ गार्गायनो. ६ गौत्सायनः, ७ गोष्ठायनो. ८ वैकर्णयः. ९ मालयानिः कौठिनिः, १० शौक्तिस्संकोरवः. ११ कह्मालिर्वातकाश्चिरः सारध्वनिः. १२ कासकृत्. १३ सम्भुद्धयन्तः.

परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
भृग्वन्दीयो मार्गपथो ग्राम्यायनिकटायनी[1] ॥
आपस्ताम्बिस्तथा भलिर्वैनैकसिः कसिरेव च[2] ।
आर्ष्टिषेणो गार्दिभिश्च कार्दमायनिरेव च ॥
आश्वाभिरधितायिश्च पञ्चार्षेयाः[3] प्रकीर्तिताः ।
भृगुश्च च्यवनश्चैव अप्नवानस्तथैव च ॥
आर्ष्टिषेणस्तथाऽनूपिः प्रवराः पञ्च कीर्तिताः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
यस्को वचो वीतहव्यो माधवश्चण्डमो दमः ।
जीवन्त्यायनिमौलिश्च पिलिश्चैव खलिस्तथा ॥
भर्गेलिर्भार्गवत्त्विश्च कौशाम्बेयिश्च काश्यपिः ।
बालेयिस्समदागेयिस्सौज्वारिश्च तथैव[5] च ॥
गार्गीयस्त्वथ जाबालिस्तथा पौष्णायनो ह्यपिः ।
ग्रामदश्च तथैतेषामार्षेयाः प्रवरा मताः ॥
भृगुश्च वीतहव्यश्च तथा रवसवैवसौ ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
शालायनिश्शाकटाक्षो मैत्रेयः खाण्डवस्तथा ।
द्रौणायनो रौक्मायनः पिशली चापि कायनिः ॥
हंसजिह्वस्तथैतेषामार्षेयाः प्रवरा मताः ।
भृगुश्चैवाथ वध्र्यश्वो दिवोदासस्तथैव च ॥

---

१ भृग्वंन्दायो...वठायनी. २ कस्रिरेव च. ३ आश्वाभिराततायिश्च. ४ मौनिश्च लिपिश्चैव...भानुवीर्यश्च. ५ दामेयिस्सौरिज्वारिरथैव च.

परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
एकायनो यज्ञपतिर्मत्स्यगन्धिस्तथैव च ॥
प्रत्यूहश्च तथा श्रोण्यश्चक्षुर्वा कार्दमायनिः ।
तथा गृत्समदो राजन् सनयश्च महर्षिकः[२] ॥
प्रवरास्तु तथोक्तानामार्षेयाः परिकीर्तिताः ।
भृगुर्गृत्समदश्चैव आर्षावेतौ प्रकीर्तितौ ॥
परस्परमवैवाह्या इत्येते परिकीर्तिताः ।
एते तवोक्ता भृगुवंशजाता
महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

इति श्रीमत्स्यपुराणे भृगुगोत्रप्रवराध्यायस्समाप्तः.

अथेदानीमेतानि काण्डानि, व्याख्यास्यामः ॥ इहोदाहृतेषु गोत्रगणेष्वप्येकेन सूत्रकारेणान्यैरनुक्तमाधिकं यत्किञ्चित् गोत्रं वा गोत्रगणो वा गणान्तर्भूतानि वा गोत्रान्तराणि गोत्रसङ्ख्या वा प्रवरः ऋषिक्रमविशेषो वा* प्रवरविकल्पो वा तत्कृतौ विवाहाविवाहौ विशेषान्तरं वा सत्सर्वं सर्वैस्सूत्रकारैरुक्तमेवेति मन्तव्यं प्रामाण्याविशेषादेकत्रोक्त्यैवार्थसिद्धेरविरोधाच्च; स्मृतिशास्त्रेषु प्रायश्चित्ताशौचदायविभागव्यवहारकाण्डेषु यद्वत् । तथा—गोत्रगणेषु परिगणितानां ऋषीणां नामधेयानि मात्रासङ्ख्याक्रमेयत्तासन्देहात्सन्दिह्यमानरूपाणि निगमनिरुक्तव्याकरणमन्त्रार्थवादेतिहासपुराणलोकतर्केभ्यः सम्यगवधार्य तत्त्वतो यथाप्रज्ञं विभजनीयानि । तथा—यत्रयत्रैव नामधेयमेकस्मिन्नेव गणे गणान्तरे वा द्विकृत्वस्त्रिकृत्वो वा पठितम्, तत्रतत्र नामधेयैकत्वेऽपि तद्वाच्यस्य ऋषिभेदोऽध्यवसातव्यः, अभेदे सत्यभ्यासानर्थक्यात् एकस्मिन्नेव गणे गणान्तरे च प्रवरभेदात् । न ह्येकस्यैव प्रवरभेदो युक्तो विना वचनेन । दृश्यते च लोके बहूनां पुरुषाणां एकमेव नामधेयं

१ प्रभूतश्च तथा श्रोणाश्चाक्षिर्दाकर्णी. २ शुनकश्च महर्षयः. * प्रवर ऋषिविशेषो वा.

देवदत्तादिवत् । तथा यत्रयत्रैकर्षिनामधेयमेकस्मिन्नेव गणे अक्षरसङ्ख्यामात्राक्रमाणामेकतमेकतमेनैकेन द्वाभ्यां वा विकृतं तेन सूत्रकारेण पठ्यते तत्रतत्र नामैकदेशविकारेऽपि नामैकत्वान्नामवाच्यस्य चैकत्वं द्रष्टव्यं, 'एकदेशविकृतमनन्यवद्भवति इति' न्यायात्। एकत्र एकप्रवरसत्त्वादन्यत्र तस्याध्याहारविपरिणामव्यत्यासव्यवहितकल्पनाभिः करणं†सर्वाणि गोत्रकाण्डानि उक्तानि वक्ष्यमाणानि च समान्येवेति कृत्वा व्याख्यास्यामः—भृगूणामादितो व्याख्यास्याम इति ॥ भृगोः प्राधान्यात् । प्राधान्यं च 'महर्षीणां भृगुरहम्'‡ इति स्मृतेः, मोक्षधर्मेषु च भृगोर्वासुदेवांशतास्मरणात् । आदितो ये भृगवस्तान्वक्ष्यामः, न द्व्यामुष्यायणत्वेन पश्चात् भृगुत्वामापन्नानिति दर्शयितुं वा; द्व्यामुष्यायणानामुत्तरत्र वक्ष्यमाणत्वात् । इह गणाः प्रवराश्च निगदव्याख्याता इति न व्याख्येयाः । जामदग्न्यवत्सा इत्यत्र वत्सानां जमदग्निविशेषणं पञ्चावत्तप्रापणार्थं, 'जमदग्नीनां पञ्चावत्तम्' इत्यापस्तम्बवचनात् । 'वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः । एते पञ्चावत्तिनः' इत्यत्र पञ्चावत्तविधिपरे सूत्रे पूर्वोक्तोऽविवाहश्चोत्रेय इति दर्शयति । इह वत्सादीनां त्रयाणां गणानां परस्परमवि*वाहः, पञ्चार्षेयत्वात्त्र्यार्षेयसन्निपाताच्च । ये च तत्र वैकल्पिकाः वत्सार्ष्टिषेणाः त्र्यार्षेयप्रवरास्तेषां परस्परमविवाहः, त्र्यार्षेयत्वाद्द्व्यार्षेयसन्निपाताच्च । तदुक्तमधस्तात् 'त्र्यार्षेयसन्निपाते अविवाहः पञ्चार्षेयाणां द्व्यार्षेयसन्निपाते अविवाहस्त्र्यार्षेयाणाम्' इति । अत्र श्लोकः—

वत्सार्ष्टिषेणविदगोत्रभाजां पञ्चार्षेयप्रवरत्रये स्वे ।
भृग्वप्रवानच्यवनास्समाना यतस्ततो नास्ति मिथो विवाहः ॥

परेषां यस्कादीनां गणानां स्वंस्वं गणं समानप्रवरत्वाद्विहाय परस्परं पूर्वोक्तैर्वक्ष्यमाणैश्च सह विवाहोऽस्ति, सगोत्रत्वसमानप्रवरत्वयोरभावात् । इति भृगूणां विवाहाविवाहौ व्याख्यातौ ॥

अत्र सूत्रकारैश्चत्वारः प्रवराश्शुनकानामुक्ताः । एकस्तावच्छुनकेत्येकार्षेयः । गार्त्समदेत्येकार्षेयोऽपरः । भार्गवगार्त्समदेति द्व्यार्षेयोऽन्यः भार्गवशौनकहोत्रगार्त्समदेति त्र्यार्षेयश्चतुर्थः । कथमेते प्रवरविकल्पा इति विचारयन्ति बहुविदः । तत्र व्रीहियवयोरिव विकल्पमेके मन्यन्ते वंशव्यवस्थया व्यवस्थितविकल्पमपरे । कथं पुनरत्र वंशव्यवस्था ? अत्राहुः—चतुर्विधाः शुनकाः परस्परं भिन्नास्सन्ति । शुन-

† कल्पनाभिन्नैः. ‡ भगवद्गी. १०-२५. * पूर्वोक्तानामवि.

कादेव जाताः केचित् । गृत्समदादेव जाताः केचित् । केचिद्भृगोरपत्यं शुनकहोत्रः तदपत्यं गृत्समदः तस्मादेव जाता इति । तत्र शुनकनामधेयमात्रमेकं, वंशास्तु भिन्नाः । तेषां चतुर्विधानां शुनकानामिमे प्रवरा इति ॥

नन्वेवं कस्मान्न कल्प्यते—भृगोरपत्यं शुनकः, तदपत्यं शुनकहोत्रः, तदपत्यं गृत्समदः, तदपत्यं शुनक इत्येक एव वंश इति । नैवं युक्तम् । कुतः ? सत्याषाढवचनाविरोधात् । तथाहि सत्याषाढो वदति—'त्रीननन्तरानित ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीते अमुतोर्वाचो होता' इति । अत्रानन्तरानित्यस्यायमर्थो व्याख्यातो भाष्यकारेण मातृदत्तेन—'मन्त्रद्दग्भिरन्यैरव्यवहितान्' इति । तत्रैकवंशत्वे सति मन्त्रद्दग्भिरेव व्यवधानं कल्पितं स्यात् । तस्मादुक्तो व्यवस्थितविकल्पः । एवं वक्ष्यमाणानामपि गर्गहरितकण्वरथीतरशाण्डिल्यादीनां वंशभेदकल्पनया प्रवरविकल्पा व्याख्येयाः ॥ व्याख्याता भृगव इत्युक्तानुभाषणस्य च प्रयोजनं अविद्यमानभृगुशब्दानामपि शुनकमित्रयुवां भृगुत्वं यथा स्यादिति । तेन च प्रयोजनं 'भृगूणां त्वेति ग्रथ्यधानं' 'भार्गवो होता भवति' इत्यादावुपप्रवेशसिद्धिरिति ॥

नन्विह किमर्थं कात्यायनलौगाक्षी तत्रतत्र प्रतिगणं इत्येतेषामविवाह इति न पुनरेकत्रैवाहतुः । असमानप्रवरैर्विवाह इति गौतमवदेकत्रैव युक्तं वक्तुम्, ग्रन्थलाघवात् । अत्र प्रवराध्यायसम्प्रदायविदः परिहारमाहुः—मत्स्यपुराणे मत्स्यरूपं भगवन्तं विष्णुं तत्रतत्र गणानुक्त्वा प्रतिगणमेतेषामविवाह इति वदन्तं श्रुत्वा तत्सम्प्रदायात्कात्यायनलौगाक्षी तथैवाहतुरिति । अन्ये वदन्ति—बोधायनादिभिरन्यैः सूत्रकारैस्समानगोत्राणामविवाह उक्तो न समानप्रवराणामिति तद्दृढीकरणार्थं तत्रतत्राहतुरिति । अपरे वदन्ति—बहुकृत्वोऽपि तथा वेदितव्यमिति । तथाऽन्ये वदन्ति—सूत्रकारयोः शैली सेति । अवश्यमेव हि कस्यचित् काचिच्छैली भवति । यथा बोधायनः प्रथमकाण्ड एव 'इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोर्वाचो होतेत्येष एवोभयोस्सर्वत्रोद्देशः' इत्युक्त्वाऽपि तत्रतत्र प्रतिगणं 'होताऽध्वर्युः' इति वदति ग्रन्थगौरवभयं त्यक्त्वा । तथा चापस्तम्बादयोऽप्येकार्षेयवसिष्ठशुनकादीनां प्रवरेष्वेव होताऽध्वर्युरिति वदन्ति । तथाऽऽश्वलायनः प्रवरमात्रमेव सर्वत्र वदति नान्यत् किञ्चित् । तथा कात्यायनलौगाक्षी चेति । अपरे वदन्ति—यथा भिन्नगोत्रात्समानगोत्रास्सान्निकृष्टा इति कृत्वा तत्रतत्र विवाहे दोषा उक्ताः तथा

सगोत्रादपि समानगोत्रः सन्निकृष्टतरः, एकर्ष्यपत्यत्वेन भ्रातृतुल्यत्वात्; तत्रतत्र विवाहे ततोऽपि गुरुतरो दोष इति दर्शयितुं तत्रतत्राहतुरिति । अपरे पण्डितम्मन्याः स्वमनीषया व्याचक्षते—एतेषामेवाविवाहोऽस्मिन् गणे नान्येषामिति मत्वा तत्रतत्राहतुरिति । एवं तर्हि† सूत्रकारयोः श्रोत्रियत्वमापादितं स्यात् । कथम् ? तथा सति गणान्तरोक्तानां समानगोत्राणामपि सतां तस्मिन्नेव गणे विवाहप्रतिषेधो न स्यात् । इष्यते च प्रतिषेधः । तस्माद्यथोक्त एवाभिप्राय इति ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां भृगुगोत्रप्रवरकाण्डव्याख्यानं समाप्तम्.

अथ आङ्गिरसानां गोत्रप्रवरकाण्डं त्रिविधमुदाहरिष्यामः । तत्र श्लोकः—

बोधायनादिमुनिपादगतप्रणामप्रासादलब्धमतिना पुरुषोत्तमेन ।
व्यक्तीकृतप्रवरगोत्रविवाहतत्त्वं प्रसूयते त्रिविधमंगिरसां च काण्डम् ॥

अत्राह बोधायनः—

अङ्गिरसो व्याख्यास्यामः ॥ आयास्या आणिचयाः काचाक्षयो मूढरथाल्हत्यकयः स्वैदाहाः कौमाश्वत्यास्तौडिर्देभिर्दैवकिस्सात्यको बाह्यबौभ्यानैकऋपिस्तैषिकिः किलालयः कारुणिः कठोरिकासिकाक्षिवा* इत्येते आयास्यगौतमाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसायास्यगौतमेति होता । गौतमवदयास्यवदङ्गिरोवदित्यध्वर्युः ॥

इति महाप्रवरे गौतमगोत्रकाण्डे प्रथमोऽध्यायः.

शरद्वन्ता अभिजिता रौहिण्याः क्षीरकरम्भाः सौमुचयाः सौम्यायना औपबिन्दवो राहूगणाः गणयो माषण्य† इत्येते शरद्वन्ता गौतमास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसगौतमशारद्वन्तेति होता । शरद्वन्तवद्गौतमवदंगिरोवदित्यध्वर्युः ॥

इति महाप्रवरे गौतमगोत्रकाण्डे द्वितीयोऽध्यायः.

---

† एवं यर्हि. * मात्यकयः स्तौदेहाः कौमारवत्यस्तौडिनिर्देवकिस्सात्यमुग्रिकः बभ्या बाध्यानेक ऋष्टिष्टैपिकः किलालयकारुणिः काठोरिः काशानाजापार्थिवाः. † आभिजिता रौहिण्याः क्रीतकरम्भास्सौमुरयः सौर्यामुनिरौपबिन्दवो रहूगणिरायणो माषाण्डः.

कौमण्डा मन्थरेषणा मासुराक्षाः काष्ठरेषय अञ्जायना वाजायना * इत्येते कौमण्डगौतमाः । तेषां च पञ्चार्षेयः प्रवरो भवति । आङ्गिरसौचथ्यकाक्षीवतगौतमकौमण्डेति होता कुमण्डवद्गौतमवत्कक्षीवद्वदुचथ्यवदङ्गिरोवदित्यध्वर्युः ॥

इति महाप्रवरे गौतमगोत्रकाण्डे तृतीयोऽध्यायः.

दीर्घतमसानां पञ्चार्षेयः प्रवरो भवति । आङ्गिरसौचथ्यकाक्षीवतवतगौतमदैर्घतमसेति होता । दीर्घतमवद्गौतमवत्कक्षीवद्वदुचथ्यवदङ्गिरोवादित्यध्वर्युः ॥

इति महाप्रवरे गौतमगोत्रकाण्डे चतुर्थोऽध्यायः.

औशनसा दिश्याः प्रशस्तास्सुरूपास्या महोदराविकंहतास्सुबुध्या निहता इत्येते औशनसा गौतमास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसगौतमौशनसेति होता । उशनोवद्गौतमवदंगिरोवादित्यध्वर्युः ॥ †

इति महाप्रवरे गौतमगोत्रकाण्डे पञ्चमोऽध्यायः.

कारेणपाल्यो वस्तव्याश्श्वेतीयाः पौञ्जिष्ठा औदजायना मान्धुक्षरा अञ्जगन्ध$ इत्येते कारेणपाल्यो गौतमास्तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसगौतमकारेणपालेति होता कारेणपालवद्गौतमवदंगिरोवदित्यध्वर्युः । गौतमानां सर्वेषामविवाहः ॥

इति महाप्रवरे गौतमगोत्रकाण्डे षष्ठोऽध्यायः ।

इति बोधायनोक्तं गौतमगोत्रकाण्डं समाप्तम्.

---

* कौमण्डा मामन्थरेषणा मासुरक्षाः कार्ष्टेषय ओजायना वाशयः.

† औशनसा दिष्ठ्याः प्रशस्ताः सुरूपाक्षा महोदरा यदन्धनानितं हताः सुबुद्धया निहताः गुहा......आङ्गिरसौशनसगौतमे...गौतमवदुशनसवदाङ्गि...

$ श्वेदीयाः पौञ्जिष्ठय औदुञ्जायना औलूक्या राजगन्धयः.

अथापस्तम्बाद्युक्तं गौतमगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अथांगिरस अयास्या गौतमास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसायास्यगौतमेति होता । गौतमवदयास्यवदंगिरोवदित्यध्वर्युः । अथौचथ्या गौतमास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसौचथ्यगौतमेति । गौतमवदुचथ्यवदंगिरोवदिति । अथौशिजा गौतमास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसौशिजकाक्षीवतेति कक्षीवद्वदुशिजवदंगिरोवदिति† । अथ वामदेवा गौतमास्तेषां त्र्यार्षेयः । आंगिरसवामदेवबार्हदुक्थेति । बृहदुक्थवद्वामदेववदंगिरोवदिति ॥

इत्यापस्तम्बाद्युक्तं गौतमगोत्रप्रवरकाण्डमुदाहृतम् ।

अथ कात्यायनलौगाक्षिप्रणीतं गौतमगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अंगिरसो व्याख्यास्यामः । औचथ्या गौतमास्तालेया अभिजितो नैषकिलौगाक्षिः करसोगिण्यः क्षीरकट इति । कटूकराणां सैधवगतवसांकरमौमिलीनां यौपिण्डिभागलतुण्डकुण्डवानां काराटकाराधारिणामुपबिन्दुमान्धर्यो रोहितायन अंगायनकास्तौष्ट्यरुणयः पार्थिवा मौदहायनाः स्कार्दसरावकाटिल्या नरोहित्या नीचयोवा समूलयोवा सपुष्पयोवा सस्तंवयोवा सधूपयः कांचाक्षि क्षपा वीराषि करेल कराली* त्येषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसौचथ्यगौतमेत्यंगिरोवदुचथ्यवद्गौतमवदिति ॥

इति प्रथमो गणः ।

---

†अथ बृहदुक्था गौतमास्तेषां त्र्यार्षेय आङ्गिरसबार्हदुक्थगौतमेति गौतमवद्बृहदुक्थवदाङ्गिरोवदिति. इति वाक्यमापस्तम्बसूत्रे दृश्यमानमत्र प्रवरमञ्जरीकोशेनोपलभ्यते.

*औचिथ्या गौतमास्थौलेया अभिजितो नौकिलौगाक्षिकरभोगिण्याक्षीरकट इति कण्डूकराणां सोधगतवसांकरकौमेलीनां पैपिण्डिभोगलतुण्डकुण्डवानां काठोरव्यारवारिणामुपविन्दुमाधर्षेरोहितायनाङ्गायनकात्सौत्सवयो वासधूपयः काचाक्षिः क्षप्यताराति कचोलिकराचहिी.

दैर्घतमसानां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसौतथ्यदैर्घतमसेति दीर्घतमोवदुतथ्यवदाङ्गिरोवादिति ॥

इति द्वितीयो गणः ।

अयास्या गौतमा इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति। आंगिरसायास्यगौतमेति । गौतमवदयास्यवदंगिरोवदिति ॥

इति तृतीयो गणः ।

अथास्यौशिजा गौतमा इत्येतेषां पञ्चार्षेयः प्रवरो भवत्यांगिरसायास्यौशिजगौतमकाक्षीवतेति । कक्षीवद्गौतमवदुशिजवदयास्यवदंगिरोवदिति ॥

इति चतुर्थो गणः ।

अस्मिन्गौतमकाण्डे तत्रतत्राध्वर्युप्रवरेष्वङ्गिरस्वङ्गिरस्वदिति लौगाक्षिपाठो द्रष्टव्यः ॥

इति कात्यायनलौगाक्षिप्रणीतं गौतमगोत्रकाण्डमुदाहृतम् ।

अथाश्वलायनीयं गौतमगोत्रकाण्डमुदाहरिष्यामः—

गौतमानामांगिरसायास्यगौतमेति । उतथ्यानामांगिरसौतथ्यगौतमेति । राहुगणानामांगिरसराहुगण्यगौतमेति । सौमराजकीनां आंगिरससौमराज्यगौतमेति । वामदेवानामांगिरसवामदेव्यगौतमेति । बृहदुकथानामांगिरसबार्हदुक्थगौतमेति । पृषदश्वानामांगिरसपार्षदश्ववैरूपेति । ऋक्षाणामांगिरसबार्हस्पत्यभारद्वाजबान्दनमातवचसेति । कक्षीवतामांगिरसौचथ्यगौतमौशिजकाक्षीवतेति । दीर्घतमसामांगिरसौचथ्यदैर्घतमसेति।

इदमाश्वलायनोक्तं गौतमगोत्रप्रवरकाण्डमुदाहृतम्.

अथेदानीं एतानि गौतमगोत्रकाण्डानि व्याख्यास्यामः—यदुक्तमधस्तनभृगुगोत्रकाण्डव्याख्याने उपलक्षणमस्माभिः 'इहोदाहृतेषु गोत्रकाण्डेषु' इत्या-

रभ्य 'व्याख्यास्यामः*' इत्यन्तेन भाष्येण तत्सर्वमिहापि गौतमगोत्रकाण्डोपक्रमे द्रष्टव्यं, तुल्यत्वात् । इहोदाहृतानां गौतमगोत्रगणानां मध्ये पृषदश्वानामृक्षाणामाश्वलायनोक्तानां गौतमवरणादर्शनादुत्तरत्र वक्ष्यमाणरथीतरभरद्वाजैश्च सह समानप्रवरत्वश्रवणात्तत्रैवोत्कर्षः, तैश्च सहाविवाहो द्रष्टव्यः; तथैवान्यैस्सूत्रकारैर्वक्ष्यमाणत्वात् । इह तु गौतमगणमध्यपाठे कारणं किमप्याश्वलायनबुद्धिगम्यमस्तीति कल्प्यम् । उत्तरत्र पाठे तु विस्पष्टं कारणमस्तीत्युक्तम् इहापि गणाः प्रवराश्च निगतव्याख्यातत्वान्न व्याख्येयाः । इह च यत्रयत्रकस्मिन्नेव गणे प्रवरऋषीणामेकद्वित्रिसंख्याविषयाक्रमविषया च विप्रतिपत्तिर्दृश्यते सूत्रकाराणां तत्रतत्रोक्तप्रयोगावलम्बिनामेव ते—प्रवरा इति प्रयोगकृतव्यवस्था—द्रष्टव्या ॥ इह गौतमगणानामृक्षपृषदश्वगणौ वर्जयित्वा सर्वेषां स्वंस्वं गणं विहाय परस्परमविवाहो द्रष्टव्यः, कुतः, समानगोत्रत्वात् । समानगोत्रत्वं च गौतमस्य सप्तऋषेरपत्यत्वात् । स्वेषु गणेषु सुतरामविवाहः, समानप्रवरत्वात् ॥ अपि च 'गौतमानां सर्वेषामविवाहः,† इति बोधायनवचनाच्च सर्वेषामविवाहः ॥

अत्र श्लोकः—

गौतमानां न सर्वेषां विवाहोऽस्ति परस्परम् ।
सगोत्रत्वाच्च वाक्याच्च बोधायनमुखोद्गतात् ॥ इति ॥

इति व्याख्यातं गौतमगोत्रप्रवरकाण्डम् ।

---

अतः परं भरद्वाजानां गोत्रप्रवरकाण्डमुदाहरिष्यामः । अत्र श्लोकः—

नमस्कारमष्टाङ्गमग्रे गुरूणामृषीणामतिप्रेमपूर्वं प्रयुज्य ।
भरद्वाजकप्यृक्षगर्गद्विगोत्रप्रभेदं प्रवक्ष्ये भरद्वाजकाण्डम ॥

अत्र बोधायनः—

**भरद्वाजाः क्षाम्यायणा मगण्डा देवाश्वा उद्दहव्याः प्राग्वाशयो वाहलवा द्व्यौगा वासिनायनाः स्तौदेहा आत्रा औक्षा भूरयः परिणद्धेधाः केशस्येयाः सौद्धय उरूढाः खारिग्रीवयः अैसयो वयोक्षिभेदा अग्निवेश्या वेश्याश्शठा गौरिवायनाः श्वेलकास्तनकर्णा ऋक्षा माणभिद्यः काष्ठोदका**

---

* ३४ पृष्ठे. † ३८ पृष्ठे

ज्वलयो वैलाश्वारुडादयो भरुण्डेय भद्राधयः सौरभरा शुगा देवमतयः इषुमता वौदोदमेघयः प्रवाहणेयाः कल्माश्वराजस्तम्भिसद्योपकृतपराह्रयो वलभीकयो रुद्रांगपथः शालाहलयो वेदवेला नृत्यायनाऽऽशलालयः शार्दूलयः काक्षलाः बाष्कलाः सेध्यकैधाः कौण्डायनाः कौण्डिलयाः ब्रह्मस्तम्भा राजस्तम्भा अग्निस्तम्भा वायुस्तम्भास्सूर्यस्तम्भास्सोमस्तम्भा विष्णुस्तम्भा यमस्तम्भा इन्द्रस्तम्भा आपस्तम्भा ये चान्ये स्तम्भस्तम्भ (ब) शब्दा आरणसिन्धुकौमुदगन्धयः शिखायना आत्रेयायणा भामाण्यः कुक्षाः कौर्कक्षयो नैतुतयो दाभयः श्यामेया मत्सकाया कारुणायनाः कारुपथयः कारिषायणाः कावलया इत्येते भरद्वाजास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसबार्हस्पत्यभारद्वाजेति होता । भरद्वाजवद्बृहस्पतिवदंगिरोवदित्यध्वर्युः । रौक्षायणाः कपिलाऽऽशिपिलाऽऽशैपिला वैपिण्डकौतुमोऽग्निजिह्वी च कण्वी च सूतिश्चैते* रौक्षायणास्तेषां पञ्चार्षेयः प्रवरो भवति । आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति होता । मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदंगिरोवदित्यध्वर्युः† । गर्गास्त्रांभरायणास्सखीना यौगन्धरायणा

* भरद्वाजाः...मागण्डा...उद्दालगा...प्राग्वंशयोवाशल...मैत्रेदा आश्वा औक्वामुरयः परिणद्धेयाऽऽशैखेयाऽऽशौद्रयद्रूढाः गार्ग्यीयाः औपशयो...अग्निवेश्याव्यवाया.. मल्कारनुकर्णापरोक्षामाणभिन्दव्याः कांबोदकास्तौज्वलयो वैणा कारुणाश्यो भारुण्डया माद्रपथयः श्रुतोद्गाऽऽशुंगा...इषुमतयो वोदमेघयः...कल्माषराज...सिन्दूपक्ठद्वाराह्वयो वलभीगयो...शैलाहिलिनो देववेला महोवेला कुंजायनाऽऽशालयः...तत्कलाः वात्कलाः सध्यकसिन्धाः...इन्द्रस्तम्भा ये चान्ये...शब्दाऽऽशिष्टा आरुणिसिन्धुकौमुदगन्धिश्शक्तिशाकिकायना आत्रेयणामामं आधूमगन्धाः काप्यायनामृतन्तयो धार्तयो श्यामेयामत्स्यकाथाः कौकायणाः कारुपथयः कारीषायणाः काल्मा इत्येते...शिफिलाऽऽशैफिलाः वैफिडाः कौधुमोः...सूचिश्चैते.

† ध्वर्युः । कपयः वैतालानामैतिशायनानां ताण्डिनां भोजसीनां शार्ङ्गरवाणां खरशस्ताण्डानां मौषान्तकस्संशयः पौष्पयः इत्येते कपयः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसामहय्योरुक्षयेति । उरुक्षयवदमहय्यवदङ्गिरोवादित्यध्वर्युः । इत्यधिकपाठः शृ—कोशे.

बाहुलकयो भ्रष्टयो भृष्टुभिन्दयः क्रोष्टकयस्सौयामुनिर्भाजिताक्षयो होत्रपचयस्सत्यपचयो जायावता वाटाश्शाखायनयस्सांग्रहवान्तुल्योवेणुहानिस्सोहर्ता कारी पौचिको बाभ्याराजवतः पौलय इत्येते‡ गर्गास्तेषां पञ्चार्षेयः त्र्यार्षेयो वा प्रवरो भवति । आंगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति होता, आंगिरसशैन्यगार्ग्येति वा । गर्गवच्छिनिवद्भरद्वाजवद्बृहस्पतिवदंगिरोवदित्यध्वर्युः, गर्गवच्छिनिवदंगिरोवदिति वा भरद्वाजानां सर्वेषामविवाहः ॥

इति बौधायनोक्तं भरद्वाजगोत्रकाण्डमुदाहृतम् ।

अथापस्तम्बोक्तं भरद्वाजगोत्रकाण्डमुदाहरिष्यामः—

अथ भरद्वाजानां त्र्यार्षेयः—आंगिरसबार्हस्पत्यभारद्वाजेति । भरद्वाजवद्बृहस्पतिवदंगिरोवदिति । एष एवाविकृतः कुक्षाग्निवेश्योजायनानां सर्वेषां च स्तम्भस्तम्बशब्दान्तानाम् ॥ अथ द्व्यामुष्यायणानां कुलानां यथा शुंगशैशिरयो भरद्वाजाश्शुंगाः कताश्शैशिरयः तेषां पञ्चार्षेयः प्रवरो भवति । आंगिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति अक्षीलव*त्कतवद्भरद्वाजवद्बृहस्पतिवदिति । अथ ऋक्षाणां पञ्चार्षेयः—आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति । मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदंगिरोवदिति । त्र्यार्षेयमु हैके आंगिरसवान्दनमातवचसेति । मतवचोवद्वन्दनवदंगिरोवदिति । अथ कपीनां त्र्यार्षेयः—आंगिरसमहय्यौरुक्षयेति । उरुक्षयवद्महय्यवदंगिरोवदिति अथ गर्गाणां त्र्यार्षेयः । आंगिरसगार्ग्यसैन्येति । सिनिव†द्गर्गवदंगिरोवदिति । भरद्वाजमु हैके अंगि-

‡ सांभरायणास्सांख्यायना...वाधूलकयो...भ्रष्टबिंदवः क्रौटुकय...भाजितीक्षयो हौत्रपचयस्सत्यापच्चयो दीनवलयः पलाशशाखावन्तः संग्रहवत्तुल्यो वेणुभरिः सौहधाः कारिरोतिः कैवाल्या राजवलोलय इत्येते.

* कात्यात्कालिति, अत्कीलवत्. † गार्ग्यशैन्येति । शिनिवत्.

रसस्थाने भारद्वाजगार्ग्यशैन्येति शिनिवद्गर्गवद्भरद्वाजवदिति ॥

इत्यापस्तम्बोक्तं भरद्वाजगोत्रकाण्डमुदाहृतम्.

अथ कात्यायनलौगाक्षिप्रणीतं भरद्वाजगोत्रकाण्डमुदाहरिष्यामः—

आत्रेयायनिमार्कण्डिवासिनयनिचौपिष्टसौगेययाज्ञवेश्यानां सारावारिवाहिसौंगिगिरुणकर्णिप्रावाहणेयानां आश्वलायनिवावाश्रौगिरधिकारग्रीवाणां मैथुमतिसाज्यांङ्किकाञ्चकिकायनानां त्रैतुटिपौरितौचकीनां सामस्तम्बिब्रह्मस्तम्बितौल्वलिवैयुगोद्वेषीणां सालुटिवालुटिसौबुद्धिकाभरद्वाजौदमेधिपरोपमितिदेवागिरिधिदेवस्थानिहरिकर्णिध्रांगविध्रौगयकौमुदगांधिसात्यमुग्रिमात्स्यक्षीपमालोहरहालोहारगाङ्गवदकिकौरुक्षात्रिद्रोणिजैत्रिजेत्वलायनानां काण्यंविजालिरापस्तम्बिसौजपृश्निपौलिखड्वलायना इत्येषां अविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसबार्हस्पत्यभारद्वाजेत्यंगिरोवद्बृहस्पतिवद्भरद्वाजवत् ॥ कालायनः केशमथौवच्यतरायणाभ्राष्ट्रकृद्राष्ट्रमितिरैन्द्रालिशालङ्कायनाः कौलास्त्रक्रियास्वाक्रिवकालकृन्मातुलयावकृन्मालपरौपक्रमेयः प्रष्यंगाः पैगलायनाश्श्यामाश्शामायना गर्गास्साम्परिवाराः तेषामविवाहस्तेषां पञ्चार्षेयः प्रवरो भवति । आंगिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति । अंगिरोवद्बृहस्पतिवद्भरद्वाजवत्सिनिवद्गर्गवत् ॥ तित्तिरिः कपिभूमिः खन्दिनो गर्गा इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरससैन्यगार्ग्येत्यंगिरोवत्सिनिवद्गर्गवत् । कपिस्तित्तिरिर्विदिर्दण्डिश्शक्तिः पतञ्जलिर्भूयसीतिवरधिश्चैतकिरध्वासूराजकेशिकलानिकटङ्कोरीरयो वान्यायनः कात्यायन इत्येतेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसामहय्यौरुक्षयेति । अंगिरोवदमहय्यवदुरुक्षयवदिति ॥ संकृतिपूतिमाषताण्डिसाम्बसैपठनजान-

किंतैराघातरव्यऋषिभीवारायणीसाहेगांगिलौक्षिताल्गाः * इत्येषामवि-वाहस्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरससांकृत्यगौरिवीतेति। अंगि-रोवत्संकृतिवद्गुरुवीवत् । लोगायनाहरितकौत्सपैंगदाल्भ्यशङ्खहैमगव-हास्त्यदासिवात्स्यपाणिमाद्रिकाभिलवेणा इत्येतेषामविवाहः तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसाम्बरीषयौवनाश्वेति, मान्धात्रम्बरी-षयौवनाश्वेति वा । मान्धातृवदम्बरीषवद्युवनाश्ववदिति । अथ विष्णु-वृद्धाः शतपत्रिणिजत्रिणिकत्रिणिपुत्रिणिबादरायणा इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसपार्षदश्वराथीतरेति । अंगिरोव-त्पृषदश्ववद्रथीतरवत् । रथीतराणां त्र्यार्षेयः प्रवरो भवति । आंगिरसवै-रूपराथीतरेति । अंगिरोवद्विरूपवद्रथीतरवत् । पुरुकुत्सानां त्र्यार्षेयः प्रवरो भवति । आंगिरसपौरुकुत्सत्रासदस्यवेति । अंगिरोवत्पुरुकुत्स-वत्त्रसदस्युवत् । बृहदुक्था वामदेवः इत्येतेषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसबार्हदुक्थवामदेवेति । अंगिरोवद्बृहदुक्थवद्वाम-देववत् । हिरण्यस्ताम्बिसात्यमुग्रिमौद्गला इत्येतेषामविवाहः तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसभार्म्यश्वमौद्गल्येति । अंगिरोवद्भर्म्य-श्ववन्मुद्गलवत् ।

भरण्डाश्च हिरण्डाश्च तृतीयाशाकटायनाः ।
ततः प्रागदसौनारि मर्कटो रमणश्शणः ॥

* ...वासिनायनि...शौंगितुषकर्णप्रवाहेरयानां आश्वलायनिवार्श्रोमि...रथिकारग्रीवाणां...माजम्भिकार्द-रूककाय...तुतियोत्रिनेचकानां समस्तवितौल्वलित्रयुगाद्रेपाणां...सांबुधिसानरद्धारद्राजो...पटेपुमतिदेववन्ति-देवस्थानिहरितकर्णिवाङ्गविधौगेय...मात्स्यक्राथसरहरलोहारगांगोहाकि...कार्ष्णिपिंजलि......मौशपृश्निवौलि ...रौपर्कनैषध्टथगाः...स्यामायनाः...गार्ग्याः...शैन्यगार्ग्येति...शिनिवत्...भूमिस्त्वंगिरोवादिनां गर्ग इत्ये... भूयसातिरथिश्वैतकि...कलाशिकटङ्कारीरावोवात्यायना अमावास्यायनाः...सांकृतिपूतिमाषतण्डिशम्बुशैबुगवान-किराधारतव्यऋषिमिवारायणिसत्त्वाहिलेगांगिलौगाक्षिनारामह इत्येतेषां.

कण्वा मात्कटयारमणा इशाणायणा इत्येतेषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसाजमीढकाण्वेति अंगिरोवदजमीढवत्कण्ववत् ॥ अथेमानि द्व्यामुष्यायणकुलानि भवन्ति । भरद्वाजाः ग्राधाइशौंगाइशैशिरा इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आंगिरसबार्हस्पत्यभारद्वाजशौंगइशैशिरेति । अंगिरोवद्बृहस्पतिवद्भरद्वाजवच्छुंगवच्छिशिरवत् ॥ कपिलाश्च शबराश्च विभिण्डकौथुमाग्निजिह्वी च कर्णश्च सूतश्च बृहद्भरद्वाजा इत्यतेषामविवाहः । तेषा पञ्चार्षेयः प्रवरो भवति । आंगिरसबार्हस्पत्यभरद्वाजवान्दनमातवचसेति । अंगिरोवद्बृहस्पतिवद्भरद्वाजवद्वन्दनवन्मतवचावत् ।

इति कात्यायनलौगाक्ष्युक्तं भरद्वाजगोत्रकाण्डमुदाहृतम् ।

अथाश्वलायनोक्तं भरद्वाजगोत्रकाण्डमुदाहरिष्यामः आहाश्वलायनः—

भरद्वाजाग्निवेश्यानामांगिरसबार्हस्पत्यभारद्वाजेति । मुद्गलानामांगिरसभार्म्याश्वमौद्गल्येति । तार्क्ष्यं हैके ब्रुवतेऽतीत्यांगिरसं तार्क्ष्यभार्म्याश्वमौद्गल्येति । विष्णुवृद्धानामांगिरसपौरुकुत्सत्रासदस्यवेति । गर्गाणामांगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । आंगिरससैन्यगार्ग्येति वा ॥ *हरितकुत्सपिंगशंखदर्भभैमगवानामांगिरसाम्बरीषयौवनाश्वेति । मान्धातारं हैके ब्रुवतेऽतीत्यांगिरसं मान्धात्राम्बरीषयौवनाश्वेति । संकृतिपूतिमाषतण्डिशाम्बुशैवगवानामांगिरसगौरिवीतसांकृत्येति । शक्तिर्वा मूलं शाक्त्यगौरिवीतसांकृत्येति ॥ कण्वानामांगिरसाजमीढकाण्वेति । घोरमुहैके ब्रुवते अवकृष्याजमीढमांगिरसघौरकाण्वेति । कपीनामांगिरसामहय्यवौरुक्षयसेति । अथ य एते द्विप्रवचना यथैतच्छौंगशैशिरयो

* भरद्वाजाः काता... भार्म्यश्वमौद्गल्येति... आङ्गिरसगार्ग्यशैन्येति वा.

भरद्वाजाश्शौंगाः कताश्शैशिरयस्तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः द्वौ वेतरस्त्रीनितरतो न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणम् । आंगिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ॥

इत्याश्वलायनोक्तं भरद्वाजगोत्रकाण्डमुदाहृतम् ।

अथ मत्स्यपुराणोक्तं त्रिविधमंगिरसां गोत्रप्रवरकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

मरीचितनया राजन्सुरूपा नाम विश्रुता ।
भार्या साऽगिरसो देवास्तस्याः[1] पुत्रा दश स्मृताः ॥
आत्मा ह्यायुर्मनो दक्षो दमः प्राणस्तथैव च ।
हविष्मांश्च गविष्ठश्च[2] क्रतुस्सत्यश्च ते दश ॥
इत्येतेऽगिरसो नाम देवा वै सामगायिनः ।
सुरूपा जनयामास ऋषीन्सर्वेश्वरानिमान् ॥
बृहस्पतिं गौतमं च संवर्तं च महाऋषिम् ।
अयास्यं वामदेवं च उचथ्यमुशिजं तथा ॥
इत्येते ऋषयस्सर्वे गोत्रकाराः प्रकीर्तिताः ।
तेषां गोत्रसमुत्पन्नान्गोत्रकारान्निबोध मे ॥
उचथ्यो गौतमश्चैव नैलेयो[3]ऽभिजितस्तथा ।
बौधिर्नगस्सौगमाक्षिक्षीरयो रिकिरेव च[4] ॥
राहोः[5] कर्णिस्सौपत्रिश्च कैरातिस्सामलोमकिः ॥
पैष्कजतिर्भार्गवो[6] ह्युपिश्चण्डान्तकंस्तथा ।
करोटस्सुतपा वीर उपबिन्दसुरैषिणः ॥

---

१ देवी तस्याः. २ हविष्मान्सहाविष्यश्च. ३ पललेयो. ४ बोधिर्नगस्मगोसाक्षिकिरटोटिः.
५ रौहौकर्णिस्सपात्रि. ६ पैष्पजित्रिर्भातयो ऋषिश्चण्डाण्डक...रूपाविन्दवः.

रौहिणेयानिचोराणिः कोष्ठश्चे[1] वारुणायनिः ।
सोमोदयनिकासोरुकौशिल्याः पार्थिवास्तथा[2] ॥
रौहिणेयानिरोधान्ममूल्यो वासुरेव च ।
कापाक्षिपुष्पवश्चैव क्षारकारण्डिरेव च[3] ॥
क्षयो विश्वन्तिरेविश्च पाचिकारेविरेविवत्[4] ।
त्र्यार्षेयप्रवरा ह्येते तेषां वा प्रवरान् शृणु ॥
अंगिराश्च वचोतिश्च[5] उशिजश्च महानृषिः ।
परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥
आत्रेयायनिसाविष्टयौ अग्निवेशाइशिलास्थलिः ।
वालिशायनिश्चि कपिर्वाराहिर्वाष्कलिस्तथा[6] ॥
सौटिश्च तृणवर्णिश्च प्रवाहिश्च लभायनि[7] ।
वाह्यगच्छश्च दिष्टाकिः स्मारग्रीविस्तथैव च ॥
व्यटाकिर्जित्यद्रोणिश्च जैश्रलायनिरेव च ।
आपस्ताम्बिर्माजवृष्टिर्गोस्वापिंगलिरेव च[8] ॥
पैलश्चैव महातेजाइशालङ्कायनिरेव च ।
त्र्यार्षेयः प्रवरश्चैव सर्वेषां प्रवरो मतः ॥
अंगिराः प्रथमस्तेषां द्वितीयश्च बृहस्पतिः ।
तृतीयश्च भरद्वाजः प्रवराः परिकीर्तिताः ॥
परस्परमवैवाह्या इत्येते परिकीर्तिताः ।

---

१ तारार्णः काष्टश्चे. २ सोमोदयानिकाष्टोर...र्थिव. ३ निरोयाम्र...काणाक्षि...क्षीरकरंसिरे ४ जयविश्वंभरे विश्वपालिकारिविरेव च. ५ वरोतिश्च. ६ साविष्टावग्निवेशाशिलायनिःयनिस्त्विकि.........
७ सौहिश्च तृणकार्णिश्च प्रभाहिश्च लभार्यनिः. ८ चोरग्रीवि......वटाकिर्नित्यरोगिश्च जजिला.

काण्वायनाः कौजवथः तथा वात्स्यतरायणः ॥
भ्राष्ट्रकृद्राष्ट्रविष्णी च लैत्यालिश्शाकलायनः ।
क्रौडिश्चाक्री च वार्ष्णिश्च लातकृन्मधुरावहः ॥
लायकृद्दालविद्रोषौ मर्कटः पैलिकायनः ।
मृत्संगश्च तथा दामी भागिश्श्यामायनिस्तथा ॥
बालाकिस्साहनिश्चैवं पञ्चार्षेया प्रकीर्तिताः ।
अंगिरास्तु महातेजा देवाचार्यो बृहस्पतिः ॥
भरद्वाजस्तथा गर्गस्सैन्यश्च भगवानृषिः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
कपैतरस्वदौतरो दिक्षशौक्तिः पतञ्जलिः ।
भूयसी जलसिम्बिश्च बिन्दुर्दाडः कुशीदकिः ॥
ऊर्ध्वस्तराजकेशी च रोजटी सासविस्तथा ।
सलिश्च कलसी कण्वा ऋषिः कारीरयस्तथा ॥
क्ष्वजो वान्यायनिश्चैव सावस्यायनिरेव च ।
ञ्यार्षेयः प्रवरस्तेषां प्रवरो भूमिपोत्तम ॥
अंगिराश्चामहय्यश्च तथा चैवाप्युरुक्षयः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
ज्ञात्वायनो हरिवाश्यः पौलगश्च तथैव च ।
हस्तिवासो वास्यमालिर्माण्डिमालिर्गवेरणिः ॥

---

१ मौद्गृ...... कौजवथा...... वात्स्यांभरा. २ भ्राष्ट्र... भ्रष्टविष्मा च...... कौण्डिश्चाकिश्च वार्ष्णिश्च...... ३ लावकृद्दालविद्रावो... मृत्सङ्गश्च... दामाभङ्गारया... ४ वालकिस्साहविश्चैव. ५ कपिस्तपखितेतरोदिक्ष्व. ६ भूयसाजलसिंविश्च भिन्दुर्दाशः कुसीदनिः. ७ ऊर्ध्वास्ति... जविस्ससविस्था. ८ सालिश्वकलला; ९ क्ष्वज्या... सावास्यायनि. १० हरितकौत्सः पैङ्गलश्च त. ११ हस्तिदासो वत्समालिर्गाण्डिमालिः.

क्षीमवेगः शाखदर्भिस्[1]सर्वे त्रिप्रवरा मताः ।
अंगिराश्चाम्बरीषश्च युवनाश्वस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
बृहदुक्थो वामदेवस्तथा त्रिप्रवरा मताः ॥
अंगिरा बृहदुक्थश्च वामदेवस्तथैव च ।
परस्परमवैवाह्या गोत्रे ते परि[2]कीर्तिताः ॥
कुम्भगोत्रोद्भवश्चैव तथा त्रिप्रवरा मताः ।
अंगिरास्त्रसदस्युश्च पुरुकुत्सस्तथैव च ॥
कुत्साः कुत्सैरवैवाह्या एवमाहुः पुराविदः ।
रथीतराणां प्रवरस्त्र्यार्षेयः परिकीर्तितः ॥
अंगिराश्च विरूपश्च तथैव च रथीतरः ।
रथीतरा अवैवाह्या नित्यमेव रथीतरैः ॥
विष्णुवृद्धिस्सतोमद्रिर्जनृणः कतृणस्तथा[3] ।
अत्रिवश्च महातेजास्तथा चैषो परायणाः ॥
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरश्शुभः ।
अंगिराश्च विरूपश्च पृषदश्वस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
सत्यमुग्रिर्महातेजा हिरण्यस्ताम्बिमुद्गलौ ॥
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरो नृप ।
अंगिराश्चैव भार्म्याश्वो मुद्गलश्च महातपाः ॥
परस्परमवैवाह्या इत्येते परिकीर्तिताः ।

१ क्षभिवैगश्शासदार्भिः. २ ऋषयः परिकीर्तिताः. ३ विष्णुवृद्धश्शठो...जतृप्मः...अत्रिपश्च...तथात्वैवा.

हंसजिह्वो देवजिह्वा आलवालविडादयः ॥
आयाग्रेयास्सुग्रयश्च पाराण्यांतनिमौद्गलाः[1] ।
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरश्शुभः ॥
अंगिराश्चैव ताविश्च मौद्गलश्च महांस्तथा[2] ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
आर्षादयश्चतुरायः तृतीयश्शकटायनः[3] ।
ततः प्रागादसौनारी मर्कटो रमणस्सणः ॥
कण्वामर्कटयश्चैव तथा गादायनो[4] रथिः ।
श्यामायनिस्तथैवेषां त्र्यार्षेयः प्रवरो मतः ॥
अंगिराश्चाजमीढश्च कण्वश्चैव महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
तित्तिरिः कपिभूश्चैव गार्ग्यश्चैव महानृषिः ।
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरश्शुभः ॥
अंगिरास्तित्तिरिश्चैव कपिभूश्च महाऋषिः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
अश्वरिष्कभरद्वाजौ[5] ऋथिश्चान्मानवस्तथा ।
ऋषिर्मन्त्रवरश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥
अंगिराश्च भरद्वाजस्तथैव च बृहस्पतिः ।
ऋषिर्मैत्रवरश्चैव[6] ऋषिरात्मभवस्तथा ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।

१ पौराण्येतानि माद्गलाः. २ भार्म्यश्च मौद्गल्यश्च महातपाः. ३ पार्षदश्चस्तुरयः... शाकटायनः.
४ कर्मण्वामर्कटयश्चैव... मादायनो. ५ अम्बरीषभरद्वाजौ. ६ ऋषिर्मानवरः.

भारद्वाजो हुतश्शौंगश्शौशिरेयस्तथैव च ॥
इत्येते कथितास्सर्वे द्व्यामुष्यायणगोत्रजाः ॥
पञ्चार्षेयास्तथा ह्येषां प्रवराः परिकीर्तिताः ।
अंगिराश्च भरद्वाजस्तथैव च बृहस्पतिः ॥
मौद्गल्यश्शौशिरश्चैव प्रवराः परिकीर्तिताः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः‡ ॥
एते तवोक्तांगिरसस्त्रिधोक्ता महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्ना परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणे प्रवरानुकीर्तने त्रिविधानामङ्गिरसां प्रवराध्यायो द्वितीयः ।

इह मत्स्यपुराणोक्ते त्रिविधाङ्गिरसां प्रवरकाण्डे परिकीर्तितानां गोत्राणां मध्ये येषां प्रवरेषु गौतमः सप्तर्षिर्म्रियमाणतया सत्तया वाऽनुवर्तते तेषां परस्परमविवाहः, समानगोत्रत्वात्, "गौतमानां सर्वेषामेवाविवाहः" इति बोधायनवचनाच्च । तथा येषां गोत्रगणानां प्रवरेषु भरद्वाजः सप्तर्षिर्म्रियमाणतया सत्तया वाऽनुवर्तते तेषां परस्परमविवाहः; समानगोत्रत्वात्*, "भरद्वाजानां सर्वेषामविवाहः" इति बोधायनवचनाच्च † ॥ इतरेषां सप्तर्षिबाह्यानां केवलाङ्गिरसां हरितकुत्सकण्वरथीतरपृषदश्वमुद्गलविष्णुवृद्धादीनां परस्परं विवाहः, सगोत्रत्वाभावात्, स्वे स्वे गणे चाविवाहः, समानप्रवरत्वादिति समुदायार्थः ॥

इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
मत्स्यपुराणोक्तप्रवराध्याये त्रिविधाङ्गिरसां गोत्रप्र-
वरकाण्डमुदाहृत्य व्याख्यातम्.

अथेमानि काण्डानि पिण्डीकृत्य व्याख्यास्यामः—

यदुक्तमधस्ताद्भृगुगोत्रकाण्डव्याख्यानारम्भे सति "इहोदाहृतानाम्" इत्यारभ्य "व्याख्यास्यामः" +इत्येवमन्तेन ग्रन्थेन तत्सर्वमिहापि स्मर्तव्यम् । अत्रोदा-

‡ अत्र कुण्डलितो ग्रन्थः कालिकातामुद्रितमत्स्यपुराणे दृश्यते, न क्वचिदप्यस्मिन्प्रवरमञ्जरीकोशे.

* इदं पद्यम्यन्तं शृं–कोशे नास्ति. † अत्र चकारः शृं–कोशे नास्ति. + ३३–पृष्ठे.

हृतेषु सूत्रकाण्डेषु सूत्रकाराणां पाठक्रमव्यत्यासो महानस्ति; विशेषतश्चाश्वलायनसूत्रपाठे। कथं? । बोधायनकात्यायनाश्वलायनादिभिः शुङ्गशैशिरयोऽन्ते पठिताः । आपस्तम्बादिभिः भरद्वाजगणमध्ये पठिताः । ऋक्षाः पुनराश्वलायनेन गौतमकाण्डमध्ये पठिताः इहोत्कृष्यन्ते । कपयस्त्वङ्गिरोभ्यो वा ऋक्षेभ्यः परत उक्ता आपस्तम्बादिभिः । इतरैस्सर्वैरुत्तरत उक्ताः । तथा—सांकृत्यादयोऽपि बोधायनादिभिरन्ते पठिताः । वसिष्ठगणान्तस्त्वापस्तम्बादिभिरुक्ताः । तथा—हरितमुद्गलादीनामपि तत्रतत्र पाठक्रमेण भेदः । एवम्भेदे सिद्धे सत्यपि बोधायनापस्तम्बकात्यायनादीनां बहूनां पाठक्रमानुसारेण विवाहाविवाहौ वक्ष्यामः—तत्र केवलभरद्वाजानां प्रथमपठितानां शुङ्गशैशिरीणां भरद्वाजग्राथादीनां द्व्यामुष्यायणादीनां परस्परमविवाहः* कुतः ? समानगोत्रत्वात् । समानगोत्रत्वं च सर्वेषामेषां भरद्वाजस्य समर्षपत्यत्वात् वरणाच्च । ‘ भरद्वाजानां सर्वेषामेवाविवाहः ’ इति बोधायनवचनाच्चाविवाहः । गर्गाणां भरद्वाजत्वं भरद्वाजवरणा†देव सिद्धम् । ‘ त्र्यार्षेयगर्गाणां भरद्वाजर्क्षाणां चाविवाहः’ इति गार्ग्यवचनाच्चाविवाहः । कपीनां भरद्वाजत्वं भरद्वाजवर‡णाभावादसिद्धमिति चेत्—नासिद्धम्; आपस्तम्बादिभिर्भरद्वाजगणमध्ये प्रसिद्धभरद्वाजानां ऋक्षाणां गर्गाणां च मध्ये पठितत्वात्, पराशरवचनाच्च। तथाहि विष्णुपुराणे चतुर्थेऽंशे एकोनविंशाध्याये पूरोर्वंशानुकीर्तनप्रस्तावे ‘दुष्यन्ताच्चक्रवर्ती भरतो बभूव’ § इत्यारभ्य यन्नामानो यत्क्रमका यावन्तश्च कपीनां प्रवरर्षयोऽत्र श्रुताः तन्नामानः तत्क्रमकाः तावन्तश्च पराशरेणोपदिष्टाः वंशानुपूर्व्यात्. तत्र प्रथमोऽङ्गिराः, ततो बृहस्पतिः, ततो भरद्वाजः, ततो भरद्वाजादामहय्यः, तत उरुक्षयः, ततः कपिरुत्पन्नः’ इति। तत्र सत्स्वेव बहुषु मन्त्रदृक्षु त्रयाणामेव वरणं सूत्रकारैरुक्तं रथीतराणामिवेत्यदोषः । तथाहि व्यासवचनम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ इति ॥

द्व्यामुष्यायणाः शुङ्गशैशिरय इति पुरातनद्विगोत्रकुलं दृष्टान्तत्वेनोदाहृतं इदानीन्तनानां द्विगोत्राणां द्वयोरपि गोत्रयोरविवाहं वक्तुम् । भरद्वाजाश्शुङ्गाः, भरद्वाजगणमध्ये पठितत्वात् । तेषां चायं प्रवर उक्तः—आङ्गिरसबार्हस्पत्यभारद्वा-

* ग्राथादीनां च परस्परमविवाहः. इति शृ. पा. † द्वाजगणत्वादेव. इति शृ. पा.
‡ भरद्वाजगणा, शृ. पा- § ४-१९-१०.

ज्ञेति । कताइशैशिरयो विश्वामित्राः; विश्वामित्रगणमध्ये पठितत्वात् । तेषां चायं प्रवरो वक्ष्यते—वैश्वामित्रकात्यात्कीलेति । तत्र च—

अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः † ॥

इति याज्ञवल्क्यवचनात् द्व्यामुष्यायणानां उभयत्र प्रवरे कर्तव्ये सति षण्णां मन्त्रदृशां चतुर्णां च "न चतुरो वृणीते न पञ्चाति वृणीते" इति वरणप्रतिषेधात् पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरः कर्तव्यः । तत्र च द्विप्रवरसन्निपाते पूर्वप्रवर उत्पादयितुरुत्तरः परिग्रहीतुरिति कात्यायनलौगाक्ष्योरुत्तरत्र वचनात् भारद्वाजस्य शुङ्गस्य बीजात् वैश्वामित्रस्य कतस्य क्षेत्रोत्पन्नाः शुङ्गशैशिरय इत्युच्यन्ते । तत्सन्ततिजानां पञ्चार्षेयः प्रवरो द्रष्टव्यः—आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति । त्र्यार्षेयमपि प्रवरमाहुरापस्तम्बादयः—आङ्गिरसकात्यात्कीलेति । अयमेव दृष्टान्तो द्रष्टव्यः सत्स्वपि बहुषु मन्त्रदृक्षु कतिपयानामेव च वरणमस्तीत्यत्र । एवं पुत्रिकापुत्रदत्तक्रीतपुत्रादीनामपि द्वयोरपि गोत्रयोरविवाहः प्रवरश्च द्रष्टव्यः, शुङ्गशैशिरीणां दृष्टान्तत्वेनोक्तत्वात् । 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च' * इत्येतद्गौतमवचनं द्व्यामुष्यायणादन्यविषयं द्रष्टव्यम् । द्व्यामुष्यायणानां तु पितृगोत्रमेवोभयमपीत्युभयत्राविवाह एव । संकृत्यादीनामिहाङ्गिरसां गणेपूक्तानां उत्तरत्र आपस्तम्बादिभिः वसिष्ठगणान्ते वक्ष्यमाणत्वात् वासिष्ठस्यापि शक्तेरङ्गिरसां प्रवरेषूपदेशाच्च + किं वसिष्ठास्संकृतयः ? किं वाऽङ्गिरसः ? इत्यत्र सन्देहेऽन्यतरपक्षनिश्चयहेतोरभावात् द्व्यामुष्यायणास्संकृतय इत्यवसातव्यम्; कात्यायनेनोत्तरत्र द्व्यामुष्यायणगणमध्ये प्रसिद्धद्व्यामुष्यायणैः शुङ्गशैशिरिभिस्सह वक्ष्यमाणत्वात् । द्व्यामुष्यायणत्वे च संकृतीनां स्वगणोक्तैरुपमन्युपराशरकुण्डिनादिभिर्वासिष्ठैस्सर्वैस्सह विवाहो नास्ति ‡ । तस्मादिह भरद्वाजकाण्डे केवलभरद्वाजानां, ऋक्षाणां कपीनां गर्गाणां द्विगोत्राणां च पञ्चानां गणानां परस्परमविवाहः; सगोत्रत्वात्, बोधायनवाक्याच्च इति व्याख्यातं भरद्वाजगोत्रकाण्डम् ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां भरद्वाजगोत्रप्रवरकाण्डं समाप्तम्.

---

† २-१२७. * गौतमधर्मसू-४-३-४. + वरणोपदेशाच्च इति पाठान्तरम्. ‡ विवाहोऽस्ति, इति पा.

उक्तमंगिरसां मध्ये सप्तर्षेर्गौतमस्य च ।
भरद्वाजस्य चाखण्डं गोत्रकाण्डमतः परम् ॥
सप्तर्ष्यपत्यबाह्यानां केवलांगिरसामपि ।
अधुना वक्ष्यते काण्डं विवाहप्रवरैस्सह ॥
हरितानथ कुत्सांश्च कण्वानपि रथीतरान् ॥
मुद्गलान् विष्णुवृद्धांश्च सप्तर्षिभ्यो बहिष्कृतान् ।
क्रमेणानेन वक्ष्यामः केवलांगिरसां गणान् ॥

अत्र बोधायनोक्तं केवलांगिरसां काण्डमुदाहरिष्यामः—

हरितास्साङ्ख्योदभ्यः सौभागा भैरवा ममनायुर्लोबादरो महोदरो नैमिश्रया मिश्रोदराः कौतपाः कारीपयः कौलयः पौलयः पौडलोमाधूयो-मान्धातुमण्डिकारय * इत्येते हरिताः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसाम्बरीषयौवनाश्वेति होता । युवनाश्ववत् अम्बरीषवत् अंगिरोव-दित्यध्वर्युः । कण्वा औपमर्कटचायकाः कलाः पौलहलिनो माञ्जिमाजयो मौञ्जिगन्धाविजवाजयावाजश्रवसा‡ इत्येते कण्वाः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसाजमीढकाण्वेति होता कण्ववदजमीढवदंगिरोवदित्वध्व-र्युः । रथीतरा हस्तिदासिः काह्वायनाः नैतिरक्षयः शैलालयोभिलैभिली-भायनसावह्वाः भैरुवाहाः हेमगवाः +इत्येते रथीतराः तेषां त्र्यार्षेयः प्र-वरो भवति । आंगिरसवैरूपराथीतरेति होता आंगिरसवैरूपपार्षदश्वेति वा । रथीतरवद्विरूपवदंगिरोवदित्यध्वर्युः । पृषदश्ववद्विरूपवदंगिरोवदिति वा । मुद्गला हिरण्याक्षा ऋषभामिता गयोविश्वायना दीर्घजंघा जंघास्तरणबि-

* हरिताः कात्प्रसांख्यो दार्भ्यो भैजो भैमगवो गममनायुर्लावो माहोदरो नैमिश्रवो मिश्रोदरः कीलपाः कौ-लल: पौलल: पौण्डरलो माधूपो…मांद्रकारः.

‡ मर्कठायनाः वात्कारोशेला…मौजिमौंजियोमोमोजिगन्धावाजिवाजयो वाजिश्रवग:.

\+ दासिः कामधेयनाः…कशालपोलैलैभिलैभायनाः…भैरुमगवाः.

न्दव इत्येते मुद्गलास्तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसभार्म्यश्वमौद्ग-ल्येति होता । मुद्गलवद्भर्म्यश्ववदंगिरोवदित्यध्वर्युः । विष्णुवृद्धाः शठ-मर्षणाः भद्रणामद्रणा बादरायणामत्सप्रायणास्सात्यकिः सत्यङ्कायनः नैतुद्यास्तुत्याभरण्या वैमाडादेवस्थातय‡ इत्येते विष्णुवृद्धाः । तेषां त्र्यार्षेयः प्रवरः आंगिरसपौरुकुत्सत्रासदस्यवेति होता । त्रसदस्युवत् पुरुकुत्सवत् अंगिरोवदित्यध्वर्युः । संकृतयः मलकाः पौलस्ताण्डिशम्बु-शैम्भवयः परिभावास्तारकाद्या हारिग्रीवाः पैणायाः श्रौतायना आग्रायणा आग्रापयः पूतिमाषाः * इत्येते संकृतय । तेषां त्र्यार्षेयः प्रवरो भवति आंगिरससांकृत्यगौरुवीतेति होता । गुरुवीतवत् संकृतिवदङ्गिरो-वदित्यध्वर्युः । कपयः वैतलानामैति शायननां पतञ्जलानां तरस्विनां ताडिनां भोजासिनां कासवराणां करासिखण्डानां आमौखितकिसागसख-पोष्पय† इत्येते कपयः । तेषां त्र्यार्षेयः प्रवरो भवति । आंगिरसामहय्यौ-रुक्षयेति होता । उरुक्षयवत् अमहय्यवत् अंगिरोवदित्यध्वर्युः ॥

इति बोधायनोक्तं केवलाङ्गिरसां प्रवरकाण्डमुदाहृतम् ।

अथ आपस्तम्बोक्तं केवलाङ्गिरसां प्रवरकाण्डमुदाहरिष्यामः—

अथ हरितानां त्र्यार्षेयः आंगिरसाम्बरीषयौवनाश्वेति युवनाश्ववदंबरी-षवदंगिरोवदिति मान्धातारमु हैकेंगिरसस्थाने मान्धात्राम्बरीषयौवना-श्वेति युवनाश्ववदम्बरीषवत् मान्धातृवदिति । अथ कुत्सानां त्र्यार्षेयः आंगिरसमान्धात्रकौत्सेति कुत्सवन्मान्धातृवदंगिरोवदिति । अथाजमी-

‡ शठामठा भद्रणाः...शाबरायणावात्मप्रायणबादरायणा...सात्यकायनः नैतुन्द्यास्तुन्द्यावारुण्या वै पोड्डा देवस्थानयः. * लमकाः पौस्त्यस्ताण्डि शम्भुशैभवः. परिभवस्तारकाद्या हारिद्राः चैततियारश्रौतायनाश्वारायणा आन्त्यायना आर्षभयश्चान्द्रायणा अवघ्रापयः पूतिभाष्याः. † वैतालायनामै...ताण्डिनां बोजसीनां शाङ्गरवाणां तरसिखण्डीनां सौषीनकिः सांशयः पौषाः

ढाः कण्वाः तेषां त्र्यार्षेयः आंगिरसाजमीढकाण्वेति । कण्ववदजमीढवदंगिरोवदिति । अथ विरूपा रथीतराः तेषां त्र्यार्षेयः । आंगिरसवैरूपपार्षदश्वेति । पृषदश्ववद्विरूपवदङ्गिरोवदिति । अष्टादंष्ट्रमु हैकेंगिरसस्थाने ब्रुवते—आष्टादंष्ट्रवैरूपपार्षदश्वेति । पृषदश्ववद्विरूपवदष्टादंष्ट्रवदिति । अथ मुद्गलानां त्र्यार्षेयः आंगिरसभार्म्यश्वमौद्गल्येति मुद्गलवद्भर्म्यश्ववदंगिरोवदिति । तृक्षमुहैकेंगिरसस्थाने । तार्क्षभार्म्यश्वमौद्गल्येति । तृक्षवद्भर्म्यश्ववन्मुद्गलवदिति । अथ विष्णुवृद्धानां त्र्यार्षेयः आंगिरसपौरुकुत्सत्रासदस्यवेति । त्रसदस्युवत् पुरुकुत्सवदंगिरोवदिति । एष एवाविकृतः शठमन्द्रणभद्रणमन्द्र * बादरायणापामित्यौपगाविसात्याकिसात्यकाम्यारुणिनितुन्दादीनामिति ॥

इत्यापस्तम्बोक्तं केवलाङ्गिरसां गोत्रप्रवरकाण्डम् ।

लौगाक्षिकात्यायनाश्वलायननिरुक्तानि केवलाङ्गिरसां प्रवरकाण्डान्यधस्तादेवोदाहृतानि †

अथेमानि काण्डानि व्याख्यास्यामः—यदुक्तमधस्तात् भृगुगोत्रकाण्डव्याख्यानारम्भे 'इहोदाहृतानाम्' इत्यारभ्य 'व्याख्यास्यामः' इत्येवमन्तेन भाष्येण तत्सर्वमिहापि स्मर्तव्यम्, प्रयोजनगौरवादिति । अत्रोदाहृतानां मध्ये हरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धव्यतिरिक्तानां द्व्यामुष्यायणकण्वादीनां ||भरद्वाजगणेन्तर्भावात् भरद्वाजैस्सह अविवाह उक्तः । बृहदुक्था रथीतरा एवेत्येके ‡मन्यन्ते । अपरे—बृहदुक्थानां रथीतराणां च भेदेन गणमुपादिश्य मत्स्यपुराणे एकप्रवरोपदेशात् रथीतरेभ्योऽन्ये पृषदश्वा इति मन्यन्ते । तस्मिन्नपि पक्षे रथीतराणां पृषदश्वानां परस्परमविवाहः, त्र्यार्षेयाणां द्व्यार्षेयसन्निपातात् । संकृतीनां तु द्व्यामुष्यायणत्वाद्वसिष्ठगणोक्तेः स्वगणोक्तेश्चाविवाद उक्तः ॥

अथेदानीं हरितानां विवाहं+ वक्ष्यामः—हरितानां कुत्सानां च परस्परमवि-

* शृं—शठमर्षणमरणमद्रण. † ४३-४६ पुटेषु द्रष्टव्यम्

|| शृं—द्व्यामुष्यायणजलणानाम्. ‡ उक्तः । रथीतरा एवं चेत्येके. + हरितादीनां.

वाहः; त्र्यार्षेयाणां द्व्यार्षेयसन्निपातात्, आपस्तम्बपाठे आश्वलायनपाठे च हरितकुत्सापिङ्गशङ्खेत्यादिना समानप्रवरोपदेशात् । इतरेषां कण्वरथीतरमुद्गलविष्णुवृद्धानां परस्परं च पूर्वोक्तैः वक्ष्यमाणैश्चात्र्याभिस्सह विवाहोऽस्ति, सगोत्रसमानप्रवरत्वयोरभावात् । इति व्याख्यातं केवलाङ्गिरसां प्रवरकाण्डम् ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां केवलाङ्गिरसां प्रवरकाण्डानि समाप्तानि.

---

अथात्रीणां गोत्रप्रवरकाण्डान्युदाहरिष्यामः—

बाधायनादिमुनिवृन्दपदारविन्दप्रादुर्भवत्प्रवरगोत्रविवाहभेदम् †

तत्पादपङ्कजदलस्मरणप्रसादादत्रेश्च गोत्रगणकाण्डमहं प्रवक्ष्ये ॥

यथोक्ता भृग्वङ्गिरसां गोत्रप्रवरमञ्जरी ।

कल्पसूत्रपुराणोक्ता तथात्रीणां च वक्ष्यते ॥

अत्रादौ बोधायनोक्तमत्रिकाण्डमुदाहरिष्यामः—

**अत्रीन् व्याख्यास्याम अत्रयो भूरयस्थादिस्थादोगि पौष्टिका मौद्गुलयः सैपारस्थप्रालाइछागलाः तृणबिंदुर्भार्गपथोमालरुचो व्यालयः सांवच्यानयोकार्मर्यायनयोदाक्षिस्तैदेहाः गाणिपटयऔद्दालकिः द्रोणभावा गौरिग्रीवयो गाविष्ठिराशिशुपालाः कृष्णात्रेयाः गौरात्रेयाः रक्तात्रेयाः नीलात्रेयाः * श्वेतात्रेयाः श्यामात्रेयाः महात्रेयो गात्रेया वैलेयास्सौभ्रेया वामरथीना वैतभावाइशौद्रेयाः कौण्डेया गोपवनाः कालापचया अनीलायनाः आनङ्गिर्मानाङ्गिगौराङ्गिष्योराङ्गिसौराङ्गिपुष्पयः सैष्पयः साकेतायनाः भारद्वाजनय इन्द्रातिथिरित्येतेऽत्रयः तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेयार्चनानसश्यावाश्वेति होता । श्यावाश्ववदर्चनानसवदत्रिवदित्यध्वर्युः । वाग्भूतकानां त्र्यार्षेयः प्रवरो भवति आत्रेयार्चनानसवा-**

---

† प्रादुर्भवात्. * शु–' अत्रयो भूरययस्शान्तिरछान्दोगिपौष्टि कामांदुरियः शैवाच्छगलाश्छागला... भागंतकयोमातवकुचयो व्यालयस्सांभाव्यायणः कार्मार्यायणावेदाक्षिस्तैदेहा मणिः शान्तय औद्दालकिः... कृष्णात्रेयो ' इत्यादि.

ग्भूतकेति होता । वाग्भूतवदर्चयनानसवदत्रिवदित्यध्वर्युः । गाविष्ठिराणां त्र्यार्षेयप्रवरः आत्रेयार्चनानसगाविष्ठिरेति होता । गविष्ठिरवदर्चनानसवदत्रिवदित्यध्वर्युः । मुद्गलाः व्याधिसन्धिस्वर्णवाबोधाक्षगविष्ठिरावैतवाहास्सिरीषयश्शालिमनोगौरित्रौ गोरकयो वायवना इत्येते मुद्गलाः* तेषां त्र्यार्षेयप्रवरो भवति । आत्रेयार्चनानसपौर्वातिथेति होता । पूर्वातिथिवदर्चनानसवदत्रिदित्यध्वर्युः । अत्रीणां सर्वेषामविवाहः ॥

इति बोधायनोक्तं अत्रिगोत्रकाण्डमुदाहृतम् ।

अथापस्तम्बाद्युक्तमत्रिगोत्रकाण्डमुदाहरिष्यामः—

अथात्रीणां त्र्यार्षेयः आत्रेयार्चनानसश्यावाश्वेति । श्यावाश्ववदर्चनानसवदत्रिवदिति । अथ गविष्ठिराणां त्र्यार्षेयः आत्रेयार्चनानसगाविष्ठिरेति । गविष्ठिरवदर्चनानसवदत्रिवदिति । अथातिथीनां त्र्यार्षेयः आत्रेयार्चनानसातिथेति । अतिथिवदर्चनानसवदत्रिवदिति । एष एवाविकृतो वामरथ्यसुमङ्गलबीजवापानाम् ॥

इत्यापस्तम्बाद्युक्तं अत्रिगोत्रकाण्डमुदाहृतम् ।

अथ कात्यायनलौगाक्ष्युक्तमत्रिगोत्रकाण्डमुदाहरिष्यामः—

कार्मर्यायनिशाखलयश्चार्षसाहरयश्च ये आहायनाः वामरथ्याः पयनाश्शाकिर्दिविकिमौद्गलाकिः शौनकर्णिः अथो सौश्रुतयश्च ये कौरग्रीविकैरंजी अथो जैत्रायणा ये च विबाहुतन्त्रा‡ वाहा मित्रश्चाजानकि-

* महात्रेयो हालेया बालेयालयो वामरथिनो वीतभावनाश्शौद्रेया स्तान्द्रेया...कारावयश्शौभेया आनीषायणाः...द्वैरांगिसौरांगिपुष्पयश्शौखयः......भारद्वाजायन इन्द्रा...वाद्भुतकानां...मुद्गलाः व्यानिसन्धिश्शूर्णबोधवाजकिवैततवश्लेषयः शालिमतो बार्हीगौरिवायो वा वायुपोशः.

‡ कार्मर्यायिशाखलयोपवाहरयश्चय आप्यायना वामरथ्या गौपवनास्तार्णबिन्दव औद्दालनः किः शौनकार्णिः... यश्चकौग्मीविकारंजिरधो...णाश्चथष्वानौ चिद्वाहुतत्रि.

तौलेयवौलेयात्रेयपतञ्जनानां भा‡गमादयनसौपुष्पयः छान्दोगिरित्येते-षामविवाहः तेषां त्र्यार्षेयः प्रवरः आत्रेयार्चनानलश्यावाश्वेति अत्रिवद-र्चनानसवत् श्यावाश्ववदिति । दक्षव्यालिखदार्णकृद्दालवना अर्णनाभिवै-वेयवैजवा।पिश्रिमिश्वमौञ्जकेशो †गविष्ठिरा इत्येते दश गविष्ठिराः एतेषाम विवाहः । तेषां त्र्यार्षेयः प्रवरो भवति आत्रेयगाविष्ठिरपौर्वातिथेति अत्रिवद्गविष्ठिरवत्पूर्वातिथिवत् ॥ पुत्रिकापुत्रान्व्याख्यास्यामः——हादे-यवावेयकौणेयवामरथ्यपुत्रिके *त्येषामविवाहः । तेषां त्र्यार्षेयप्रवरो भवति । आत्रेयवामरथ्यपौत्रिकेति अत्रिवद्वामरथ्यवत्पुत्रिकवत् ।

इति कात्यायनलौगाक्ष्युक्तमत्रिगोत्रकाण्डमुदाहृतम ।

अथाश्वलायनोक्तमत्रिगोत्रकाण्डमुदाहरिष्यामः—

आहाश्वलायनः—

अत्रीणामात्रेयार्चनानसगाविष्ठिरेति ॥ पूर्वातिथीनां आत्रेयार्चनानस-+पौर्वातिथेति ॥

इति आश्वलायनोक्तमत्रिगोत्रकाण्डम ।

अथ मत्स्यपुराणोक्तमुदाहरिष्यामः—

मत्स्य उवाच——

अत्रिवंशसमुत्पन्नान् गोत्रकारान्निबोध मे ।
कर्मर्यायनिसांख्येयस्तथा सारायणाश्च ये ॥
उद्दालकश्शौनकर्णिरथो सौतवराश्च ये ।
गौरग्रीविश्च कैरंजिरथो जैत्रायणाश्च ये ॥

‡ बाहुतवेन्द्रालिसालर्किमित्रश्च जातुकिढोलेयात्रेयतंजनानां भागा.

† दक्षिव्यालिखरार्णकृतद्दालन्दना और्णनाभिः सन्धिरबैजवापि संजिश्चमौजकेशोगा.

* हालेयबालेयकौद्रेयशौभेयरथ्यपुत्रिके. + अर्चनानसश्यावाश्वेति । गविष्ठिराणामात्रेयगाविष्ठिरपौर्वा.

आर्षपथा वामरथ्यो गौर्यैन्यस्तृणबिन्दवः ।
कानजिह्वो ह्युरुग्रीविवैंडालिश्शकलायनिः ॥
तैलपश्च सवैलेय आत्रिगोणिपतस्तथा ।
प्रलगो भगपादश्च सौपुष्टिश्च महातपाः ॥
छन्दो * गेयस्तथैतेषां त्र्यार्षेयः प्रवरो मतः ।
श्यावाश्वश्च तथाऽत्रिश्च तथा चैवार्चनानसः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
दाक्षिर्बलिः पर्नेलिश्च ऊर्णनाभिश्शिलार्दनिः ॥
बीजवपी शिरीषश्च मौञ्जकेशो गविष्टिरः ।
भलन्दनस्तथैतेषां त्र्यार्षेयः प्रवरा मताः ॥
आत्रिर्गविष्टिरश्चैव तथा पूर्वातिथिस्स्मृतः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
अत्रेश्च पुत्रिकापुत्रानत ऊर्ध्वं निबोध मे ।
कालेयश्च सवालेयो वामरथ्यस्तथैव च ॥
सैत्रेयश्चैव सौधेय+ स्त्र्यार्षेयाः परिकीर्तिताः ॥
अत्रिश्च वामरथ्यश्च पौत्रिश्चैव महानृषिः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
इत्यत्रिवंशप्रभवास्तवोक्ता महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणोक्ते प्रवराध्याये अत्रिवंशानुवर्णनं नामाध्यायः ।

---

* कार्मर्यायनिसांख्येया...शारायणाश्च...औद्दालाकिश्शैलकार्णि...करवाश्च...गौरिग्रीविश्च...अयंपन्थावामरथ्यो...,कावजिह्वो...बडालिश्शकटायनिः...तैलवश्च...रात्रिगोणिपथः...अलदो भगपालश्च सौपुष्टिश्च...छांदो...

\+ सबालेयो वामदथ्यस्तथैव च । सौभ्रेयश्च वसौभ्रेया.

एतेषामत्रिगोत्राणां गणानां ‡ परस्परमविवाहः । समानगोत्रत्वात् । समानगोत्रत्वं च सप्तर्षेरत्रेस्सर्वेषु त्रिप्रवरेषु प्रवरणात् । द्व्यार्षेयसन्निपाताच्च । पुत्रिकापुत्राणामुभयोर्गोत्रयोरविवाहः, स्वस्वगणे च सुतरामविवाहः, समानप्रवरत्वाद्वचनाच्चेति । व्याख्यातान्यत्रिगोत्रकाण्डानि समाप्तानि ॥ अत्र श्लोकः—

समानमुनिबाहुल्यात्सगोत्रत्वाच्च नात्रयः ।
विवाहं कुर्वतेऽन्योन्यं नोभयोरपि पौत्रिकाः ॥

इति पुरुषोत्तमपण्डितविरचितायां प्रवरमञ्जर्यां अत्रिगोत्र-
प्रवरकाण्डं व्याख्यातम्.

भृग्वङ्गिरोत्रिगोत्राणां प्रोक्ता प्रवरमञ्जरी ।
विश्वामित्रगणानां च ब्रुवे प्रवरमञ्जरीम् ॥

अत्र बोधायनोक्तं विश्वामित्रगोत्रकाण्डमुदाहरिष्यामः—

आह बोधायनः—

विश्वामित्रान्व्याख्यास्यामः कुशिकाः पार्णजङ्घाः पारक्या औदलिर्माणिर्बृहदग्निरालर्विराध्यहिरापर्ध्यैय्यकामन्तका बद्धकयश्चिकिता लाभकायनाः शालङ्कायनाः साङ्कायनाः रौकागौरास्सौगन्तयो यमहूता आनभिन्नास्तारकायणाश्चौवला जाबालयो याज्ञवल्क्या विदडानुवलयस्सौश्रय औपदहनय उदंपरिभांष्ट्रयाश्श्यामेयाश्चैत्रेयास्तालावता * मयूरास्सौमित्याश्चिवन्तवयस्स्येतन्तायना अनूनतन्तवो ये चान्ये वशब्दाबाभ्रव्यकालाया उत्सरय इत्येते †कुशिकाः तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रदैवरातौदलेति होता । उदलवद्देवरातवद्विश्वामित्रवदित्यध्वर्युः । लोहितारण्डकयश्चात्रवर्णायना वञ्जायना वासय

‡ एतेषामत्रिगोत्रजानां. * पारिणजंघाः वालूक्या औदारि...रानर्चिराघट्टिरापद्यापाः कामस्तकार्बेद्यकयस्सिकिणलामनाः सांगतायनाश्शालंकायना लौकांगारा यमदूता आनत्रिम्लातास्तारकायणाश्चौबाला... वितण्ड्याभुवनयः सौश्रयः औपदहन औदुम्बारिर्भ्राष्ट्रेयाश्श्यामेयाश्चैत्रेयास्सारावता. † रास्सामत्यांश्चित्रंतायनाश्चेतुन्दायना मनुजयो मातंगयो ये चान्ये अन्तशब्दा बाभ्रव्यः कारवान्मुरय इत्येते.

*इत्येते लोहितास्तेषां त्र्यार्षेयप्रवरो भवति । वैश्वामित्राष्टकलौहितेति होता । लोहितवदष्टकवद्विश्वामित्रवदित्यध्वर्युः । रौक्षकास्सोहद्दला रेवणाश्च †तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्ररौक्षरैवणेति होता । रेवणवद्रक्षवद्विश्वामित्रवदित्यध्वर्युः । वैश्वामित्रदैवश्रवसदैवतरसमतिज्योतिज्यामकायनाः कालकायनिनस्तेषां त्र्यार्षेयः प्रवरः । वैश्वामित्रदैवश्रवसदैवतरसेति । देवतरसवद्देवश्रवसवद्विश्वामित्रवदित्यध्वर्युः । कतास्सैरिध्राः करभाया जायनाश्शिशिराः कौकृत्यः पिण्डिग्रीवा नारायणा रास्या इत्येते कतास्तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रकात्यात्कीलेति होता । अत्कीलवत्कतवद्विश्वामित्रवदित्यध्वर्युः । धनञ्जयाः कारिवातयः आश्वावतायनाः कौरव्यास्सैन्धवायनयः पुष्टाक्षा महाक्षा इत्येते धनञ्जयास्तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रमाधुच्छन्दसधानञ्जयेति होता । धनञ्जयवन्मधुच्छन्दोवद्विश्वामित्रवदित्यध्वर्युः । अजायनानां त्र्यार्षेयः प्रवरः । वैश्वामित्रमाधुच्छन्दसाजेति । अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति । अघमर्षणाः कौशिकाः तेषां त्र्यार्षेयः प्रवरः । वैश्वामित्राघमर्षणकौशिकेति । कुशिकवदघमर्षणवद्विश्वामित्रवत् । पौरणाः परिधापयन्तस्तेषां द्व्यार्षेयप्रवरः । वैश्वामित्रपौरणेति । पूरणवद्विश्वामित्रवदिति । इन्द्रकौशिकाः तेषां त्र्यार्षेयप्रवरः । वैश्वामित्रैन्द्रकौशिकेति । कुशिकवदिन्द्रवद्विश्वामित्रवदिति ।

इति बोधायनोक्तं विश्वामित्रगोत्रकाण्डमुदाहृतम् ।

---

अथापस्तम्बाद्युक्तं विश्वामित्रगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अथ विश्वामित्राणां देवराताश्चिकितमनुतंत्वालंकिराराकियाज्ञव-

---

* रण्डकयश्चाक्रवर्मायणा वावायना वाशयः. † तौक्षकाश्चौद्रुहला मालाश्चेति.

ल्कयौलुकबृहदग्निबभ्रुशालावतशालकायनकालभवाः तेषां त्र्यार्षेयः । वैश्वामित्रदेवरातौदलेति उदलवद्देवरातवद्विश्वामित्रवत् । अथ श्रौतस्कामकयनानां त्र्यार्षेयः वैश्वामित्रदैवश्रवसदैवतरसेति । देवतरसवद्देवश्रवोवद्विश्वामित्रवत् । अथ कात्यायनानां त्र्यार्षेयः । वैश्वामित्रकात्याक्षीलेति । *अक्षीलवत्कतवद्विश्वामित्रवदिति । अथाघमर्षणाः कुशिकास्तेषां त्र्यार्षेयः—वैश्वामित्राघमर्षणकौशिकेति । कुशिकवदघमर्षणवद्विश्वामित्रवदिति§ ॥

इत्यापस्तम्बाद्युक्तं विश्वामित्रगोत्रकाण्डमुदाहृतम.

अथ कात्यायनलौगाक्षिप्रणीतं विश्वामित्रगोत्रकाण्डमुदाहरिष्यामः—

विश्वामित्रान्व्याख्यास्यामो विश्वामित्रदेवराताश्वैकितगालवतान्तकैः कुशिका वतण्डश्च शलंकुवाघो आश्वतायनाश्श्यामायना याज्ञवल्क्या जाबालास्सैन्धुवायना बाभ्रव्याः प्ययश्चकापिसम्मत्याः अथ सौश्रुताः आलोप्यापगहनय पापेदिरयः पार्णयः क्षरपापादोलीत्येषा‡ मेवाविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रदैवरातौदलेति । उदलवद्देवरातवद्विश्वामित्रवत् । देवरातदेवश्रसदेवतरसः सौमुककौमुहायनाः कुशिकास्ते इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति वैश्वामित्रदैवश्रवसदेवतरसेति । विश्वामित्रवद्देवश्रवोवद्देवतरोवदिति । अथाजा माधु-

---

* अत्कीलवत्. § "अथ विश्वा...मनुतंत्वौराकिवाराकियाज्ञवल्क्योलूक...शाललिशालावतशालंकायनकालववाः ...अथ सौमतकामकायनानां...विश्वामित्रवत् । अथाज्यानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसाज्येति । अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति । अथ माधुच्छन्दसा एव धनञ्जयाः—तेषां त्र्यार्षेयो विश्वामित्रमाधुच्छन्दसधानञ्जयेति । धनञ्जयवन्मधुच्छन्दोवद्विश्वामित्रादिति । अथाष्टका लोहिताः—तेषां द्व्यार्षेयो वैश्वामित्राष्टकेति । अष्टवकद्विश्वामित्रवदिति । अथ पूरणाः परिधापयन्त्यः तेषां द्व्यार्षेयो वैश्वामित्रपौरणेति । पूरणवाद्विश्वामित्रवदिति" "अथ कात्यायनानां" इत्यत प्राक् पाठः शृं—कोशे ॥

‡ व्ययश्च कार्षिगसंकृत्या...ओलोप्या ओपगहनयः पार्योदरयः पार्णायः भाः पाजाला इत्येतेषां.

च्छन्दसो मार्गमित्ययः कुशिका इत्येतेषा†मविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रमाधुच्छन्दज्येति । विश्वामित्रवन्मधुच्छन्दोवदजवदिति । अथ कमदकधनंजयपरिकूटपार्थिवपाणिनीकौशिकाः इत्येषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रमाधुच्छन्दसधानंजयेति । विश्वामित्रवन्मधुच्छन्दोवद्धनंजयवदिति । अथाश्मरथ्याः कामुकायनिनो बन्धुलाः कुशिका इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्राश्मरथ्यवाधूलेति । वधूलव§दश्मरथ्यवद्विश्वामित्रवत् । अथाघमर्षणाः कौशिकाः तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्राघमर्षणकौशिकेति । विश्वामित्रवदघमर्षणवत्कुशिकवदिति । पूरणाः पारिधावन्त इत्येतेषामविवाहः । तेषां द्व्यार्षेयः प्रवरः वैश्वामित्रपौरणेति । पूरणवद्विश्वामित्रवदिति । लोहिता अष्टका इत्येतेषामविवाहस्तेषां त्र्यार्षेयः प्रवरः । वैश्वामित्रलौहिताष्टकेति । अष्टकवल्लोहिवद्विश्वामित्रवत् । अथोदुम्बरिशै‡शिलीढैकाकायनितैयानिस्त्रैकायनितार्क्ष्यायणितारुष्यायणिकात्यायनिकारिलादिलावकीनां सालङ्कायनमौजहायनाः कता इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रकात्यात्कीलेति अत्कीलवत्कतवद्विश्वामित्रवत् ॥ त्रीणि रैवणकुलानि भवन्ति अथ कास्वैतरत्यनखोद्गहयश्वेत्ये‡षामविवाहः॥ तेषां त्र्यार्षेयप्रवरः । वैश्वामित्रगाधिनैरैवणेति । रेवणवद्गाधिनवद्विश्वामित्रवत् ॥

इति लौगाक्षिप्रणीतं विश्वामित्रकाण्डमुदाहृतं, न कात्यायनप्रणीतं, तयोरध्वर्युप्रवरेषु सर्वेषु विशेषज्ञापनार्थम् ।

---

† अथाज्यमाधु:...मित्रेय. § वान्धूलेति । वन्धूलवत. ‡ शैशिरि...स्तैकायनिस्तेकायनि... तार्घ्यायणि...कारीलादि...त्रीणि रैवेरवणकलानि कुलानि भवन्ति अथ काश्वेतरेणवाश्वेतहर्यश्वेत्येते.

अथाश्वलायनोक्तं विश्वामित्रकाण्डमुदाहरिष्यामः—

चिकितगालवकालववमवतरुकुशिकानां वैश्वामित्रदेवरातौदलेति ॥ श्रौमतं कामकायनानां वैश्वामित्रदैवश्रवसदैवतरसेति । धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति ॥ अजानां वैश्वामित्रमाधुच्छन्दसाज्येति । रोहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति ॥ अष्टकानां वैश्वमित्रमाधुच्छन्दसाष्टकेति । पूरणपरिधापयन्तानां वैश्वामित्रदैवरातपौरणेति । कतानां वैश्वामित्रकात्यात्कीलेति । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । रेणूनां वैश्वामित्रगाधिनरैणवेति । शालंकायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रशालंकायनकौशिकेति ॥

इत्याश्वलायनोक्तं विश्वामित्रप्रवरकाण्डमुदाहृतम्.

अथ मत्स्यपुराणोक्तं विश्वामित्रगोत्रप्रवरकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

अत्रेरेवापरं वंशं तव वक्ष्यामि पार्थिव ।
अत्रेस्सोमस्सुतश्श्रीमान् तस्य वंशोद्भवो नृपः ॥
विश्वामित्रस्सुतपसा ब्राह्मण्यं समवाप्तवान् ।
तस्य वंशमहं वक्ष्ये तन्मे निगदतश्शृणु ॥
विश्वामित्रो देवरातस्तथा वैकृतिगालवः ।
वतण्डश्च शलङ्कश्च अथो आश्वा वृतायनः ॥
श्यामायना याज्ञवल्क्या जाबालास्सैन्धवायनाः ।
बाभ्रव्यायश्च कारीषी संसृत्या अथ संसृताः ॥
औलोप्या ओपगवयः पायोंदरयपार्षयः ।

१ कालवमनुतन्तु...सौमत.

क्षरपापाभलीभावास्साधिता वास्तुकौशिकाः ॥
त्र्यार्षेयप्रवरस्तेषां सर्वेषां परिकीर्तितः ।
विश्वामित्रो देवरात उद्दालश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
विश्वामित्रस्तथाऽजाश्वो मधुच्छन्दस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
धनञ्जयः कर्मधयः परिकूटस्सपार्थिवः ॥
पाणिनिश्च त्र्यार्षेयास्सर्वे ते परिकीर्तिताः ।
विश्वामित्रो मधुच्छन्दास्तथा चैवाघमर्षणः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
कामलायनिनश्चैव आश्मरथ्यस्तथैव च ॥
माधुलाः कौशिकास्तेषां त्र्यार्षेयः प्रवरो मतः ।
विश्वामित्रश्चाश्मरथ्यो बन्धुलिश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः[2] ।
विश्वामित्रो लोहितश्च अष्टकः पूरणस्तथा ॥
विश्वामित्रः पूरणश्च तयोर्द्वौ प्रवरौ स्मृतौ ।
परस्परमवैवाह्याः पुराणाश्च परस्परम्[2] ॥
लोहिता अष्टकाश्चैषां त्र्यार्षेयः परिकीर्तितः ।
विश्वामित्रो लोहितश्च अष्टकश्च महातपाः ॥
अष्टका लोहितैर्नित्यमवैवाह्याः परस्परम् ।

---

१ ढश्च कर्ताकुश्च...कारिषा संसृत्य...अलिप्या आपदहनयः...हरपापा भलाभावा...उदलश्च महातपाः ।

२ एतच्चिह्नमध्यपतितग्रन्थस्थाने ' पारिधापयन्तो न वैवाह्याः पूरणाश्च परस्परम् ' इत्येव पठ्यते शृ-कोशे.

उदवेणुः कथकश्च ऋषिश्चोद्दालकिस्तथा ॥
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरश्शुभः ।
ऋणवान्ग्रंथिनश्चैवं विश्वामित्रस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
उदुम्बरिस्सैसवटिः इषिस्ताक्ष्यायणिस्तथा ॥
कात्यायनिः करीरामिशालङ्कायनिलावकाः ।
मौञ्जायनिश्च भगवान् त्र्यार्षेयः परिकीर्तितः ॥
सतिस्तथासुविद्धारिर्विश्वामित्रस्तथैव च ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

एते तवोक्ताः कुशिका नरेन्द्र महानुभावास्सततं द्विजेन्द्राः ।
येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणे विश्वामित्रगोत्रप्रवराध्यायः ।

एतानि सूत्रकाण्डानि यदर्थमृषयोऽब्रुवन् ।
विवाहगोत्रप्रवरान् तानर्थान्ब्रूमहे वयम् ॥

अत्रोक्तेषु विश्वामित्रगणेषु ये देवरातादयः परिगणिताः तेषां सर्वेषां परस्परमविवाहः; स्वेस्वे गणे तु सुतरामविवाहः, समानप्रवरत्वात् ॥ इति व्याख्यातानि विश्वामित्रप्रवरकाण्डानि ॥ अत्र श्लोकः ।

यावतां प्रवरेष्वेको विश्वामित्रोऽनुवर्तते ।
न तावतां सगोत्रत्वाद्विवाहोऽस्ति परस्परम् ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां विश्वामित्रकाण्डं समाप्तम्.

---

१ ऋणवा गाथिनश्चैव. २ उदुम्बरशैशिरश्च कृषिः...लावकिः ।...दासानिश्च सुविद्यारिः.

अथेदानीं कश्यपगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अथ कश्यपगोत्राणामखण्डं काण्डमुच्यते ।
पिण्डितैः पण्डितैर्विद्यामण्डितैश्श्रूयतामिदम् ॥

अत्रादौ बोधायनोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

कश्यपान् व्याख्यास्यामः कश्यपाश्वांगिरयो मठरा ऐतिशायना आभूत्या वैशिप्रा धूम्रायणाः सौम्या आम्यायणास्त्रौववृक्षा राम्रायणाः पैन्धुकयः प्राचर्या हृद्रोगाश्शाम्भयाः पाञ्चायनिकाः मेषांतकिस्साममयो मागसरा पयस्सौधवयस्सायस्या आसुरायणाश्छगव्यास्सौनव्रस्स्थौलकेश्ययोवार्धकय औपव्या लाक्षणाः क्रौष्टजीवनयस्स्वाद्रायणा रोहितायना मितकुम्भाः पिंगाक्षय औढलयः मारयणाः पञ्च च वैकर्णेयाः कौशितकयाः धूमलक्ष्मणयः सुरागौरिवायनाः महावक्रेयाः पैठीनस्याः पानस्याः विपागणाः दाक्षमाणयो भालदंताः शाश्वमित्रेया हरित्या जारमात्स्योरमाणिसाविश्रवसोवैशंपायनाः स्वैरंकिकासलयः उच्छ्रायनिमार्जलायनाः कांसलायनाः देवोहोतसुचयः स्वरेभायस्थूणाभागुरयः पाथिकाया गोमायावा हिरण्यवायाग्निदेविस्तथासौर्यास्सुसला आविश्रेण्या उत्तरतोगण्डे मादलासन्विता वैकर्णयस्थूलसिंदव * इत्येते निध्रुवाः कश्यपास्तेषां त्र्यार्षेयप्रवरः काश्यपावत्सारनैध्रुवेति होता ।

* कश्यपाश्छागलब्योदरा...आभूत्या...धूम्रा धूम्रायणाः सौम्या दाम्यायणाः ओधजिराम्रायणाः पैवकयः प्रावार्या हृद्रोगयः कारिण्यानाः पांचामित्राः सोपीतकिः शांडयो मागशरा न्यग्रौपसौतवयः सामथ्यां आसुरायणाश्छागव्यास्सौनव्या स्थौलकेश्यो वाधकय औपव्या लाक्षण्याः कोष्टाजीवनयः स्वार्द्रायनाः गांगायनाः रोहितायनामितकुम्भाः पिंगलाक्षयः औडलयः नारायणा एव च वैकर्णेयाः कौषीतकेयाः धूमलक्ष्मणयः सुरागौरिवायणाः विसव्यानामिशर्मायणाः औकायनयः कारोदयः देवयाता वेदोना पैलागहावक्रेयाः पैठीनसाः पानध्याः वृषगणाः दीक्षमाणयो भालंदनयः शांकमित्रेया हारिम्याः पांचाला राजमान्यो वार्षगणि-साविश्रवसो वैशंपायनाः स्वैरंकिकांसलयः औकायनिर्माजायनाः कांसायना देवोहोदशुचयः...पाथिकार्या गोमयाताहिरण्यपापा अग्निदेविन्तथा...मुसला...नोखण्डमाना सन्नावता वैरणयश्शूलसिन्दवः.

निध्रुववदवत्सारवत्कश्यपवदित्यध्वर्युः । रेभाणां त्र्यार्षेयप्रवरः—काश्यपावत्साररैभेति होता । रेभवदवत्सारवत्कश्यपवदिध्वर्युः । शंडिलाः कौहलाः पायकाः पायिका औदमेघास्सौदनवा सावचसः कारेयः कौकंठयः स्तैक्षिमहाकयो माहोदकयः कोषयः मौंजायनाः जाणवंशाः खार्वमानया गांगयना वात्सभालयः गोभिलाः वेदायनाः वाश्ययनाः बहूदरयो भागुरिः खादंतीमुखाहिरण्यबाहुस्तेदेहाः गोमूत्रा वाक्यशठाः * जानंधरिर्जालंधरिर्धन्वंतरिरित्येते शण्डिलास्तेषां त्र्यार्षेयः प्रवरः । काश्यपावत्सारशाण्डिल्येति होता । काश्यपावत्सारदैवलेति वा । काश्यपावत्सारासितेति वा शाण्डिल्यासितदैवलेति वा । शण्डिलवदवत्सारवत्कश्यपवदित्यध्वर्युः । देवलवदवत्सारवत्कश्यपवदिति वा । असितवदवत्सारवत्कश्यपवदिति वा । देवलवदसितवच्छण्डिलवदिति वा । लौगाक्षयो दार्भायणा मैत्रवादिर्वैहकालेयः कापुटिस्तथा कलयश्च कंसपात्रश्च भाल्लकायनिपरस्ताविरोदकिकौनामिसौतयः सैतिकिष्टिभेरोनिष्टिष्टैसिकिसासुकिश्चैरन्ध्रिश्चोप्यणायोधकालकिकलो लौगाक्षयो वाचया जया‡ इत्येते लौगाक्षयः अहर्वसिष्ठा नक्तंकश्यपाः । तेषां त्र्यार्षेयः प्रवरः । काश्यपावत्सारवासिष्ठेति होता । वसिष्ठवदवत्सारवत्कश्यपवदित्यध्वर्युः । वासिष्ठवत्सारकाश्यपेति होता । कश्यपवदवत्सारवद्वसिष्ठवदित्यध्वर्युः इति वा एतेषामविवाहः ॥

इति बोधायनोक्तं कश्यपगोत्रकांडमुदाहृतम् ।

---

*...पार्थका औदमेघयः सौदालवत्यावयसः कालेयाः काकुण्डेयः श्रेषकयो महाकायो महोजकयः कोश्रायनिः मार्जायनाः कामशयो दाणवत्साः खार्दमायणाः गांगायनाः मात्स्यबाल्याः गेविलाः......वात्स्यायनयो बहूदरयो भागुरिर्गार्दभिः मखाहिरण्यवाहिस्तैदेहाः वाक्यशुण्ठाः. ‡ चामंत्रःबाहिर्वेधा कालेयः...तथा त्रयश्च कांसपत्राश्च वालुकायनिसमस्ताविभेदाकिः सौनामिसैतयः सेलगिः साम्भरणिरारिष्टैप गिसासुणिश्चैरण्डिशुब्रिश्चोल्वण योजाकालीककलोकाक्षयो जाबालयः.

अथापस्तम्बाद्युक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

अथ कश्यपानां त्र्यार्षेयः काश्यपावत्सारनैध्रुवेति । निध्रुववद्वत्सा-रवत्कश्यपवदिति । अथ रेभाणां त्र्यार्षेयः । काश्यपावत्साररैभेति । रेभ-वद्वत्सारवत्कश्यपवदिति । अथ शण्डिलानां द्व्यार्षेयो दैवलासितेति असितवद्देवलवदिति । त्र्यार्षेयमु हैके काश्यपदैवलासितेति । असितव-द्देवलत्कश्यपवदिति । द्व्यार्षेयास्त्वेवं न्यायेनेति ॥

'द्व्यार्षेयस्त्वेवं न्यायेन' इत्येतत्सूत्रमेके व्याचक्षते—द्व्यार्षेया एव सर्वे शण्डिला भवितुमर्हन्ति न त्र्यार्षेया इति । तदनुपपन्नम्, अत्र्यार्षेयस्य हानं स्याद-धिकागात्' * इति जैमिनीयन्यायविरोधात् । तस्मादयमर्थः । द्व्यार्षेयास्तु एव-मनेन प्रकारेण त्र्यार्षेया एव न्यायेन भवितुमर्हन्ति, न शण्डिला एव । तस्माद-ष्टकानां लोहितानां द्व्यार्षेयाणां त्र्यार्षेयत्वमेव द्रष्टव्यमिति§ ॥

इत्यापस्तम्बाद्युक्तं काश्यपगोत्रकाण्डमुदाहृतम् ।

अथ कात्यायनलौगाक्षिप्रणीतं काश्यपगोत्रकाण्डमुदाहरिष्यामः—

कश्यपान्व्याख्यास्यामः—आत्रायणा विषगणा मौषकरातिकायना औषप्रतिमासरा गोजावीरधरा वृषिसारा हरेयाः कैरंजाशवैतैता आसु-रायणा मातृत्या वैवकयः प्रैकयो भौवनाः पैठीनसास्सधवाश्च प्रगाधा-ह्वगायका देवपातास्सोमयागा अथोपश्वायाश्येदुदगव्यायनाश्शत्रुहयो ह्द्योगाः काचायनाश्चक्रधर्मी महाचक्रधर्मी श्रैययणा हार्करथो दक्षपाणयो हास्तिदासिवात्स्यपाणिहास्तलायनान्यक्रुतवौमूलधूम्रायणा स्वबभृस्वाथो आश्ववातापनाः कौसीदकाः खगादा अथो आग्निशर्मा-

* मी. सू. ६-१-४३.

§ इदं व्याख्यानं कपर्दिभाष्यगतम् । "...लोहितानां वैश्वामित्रलोहिताष्टकेति स्मृत्यन्तरस्य विद्यमानत्वात् त्र्यार्षेयत्वमेव स्यात् । पूरणानां पारिधापयन्तीनां वैश्वामित्रदैवरातपौराणेति स्मृतेस्त्र्यार्षेयत्वमेव... । तत्र सर्वेषां शण्डिलानां ऋषिबाहुल्यादविवाहः । विश्वामित्रपक्षेऽपि आज्यानां धनञ्जयानां चाविवाहः । अनुक्तानां सह विवाहः ।" इत्यधिकं दृश्यते कपर्दिभाष्यकोशे.

यणाश्च ये मौद्गल्याः कैकशयः काश्वहायनो द्विवायनो हस्त्यकश्यपसानुश्रुतहरितायनमाङ्गसोमभूवा इत्ये * तेषामविवाहः । तेषां त्र्यार्षेयप्रवरो भवति । काश्यपावत्सारनैध्रुवेति । कश्यपवदवत्सारवन्निध्रुववदिति ॥ शाश्वमित्रयो रैभा इत्येषामविवाहः ॥ तेषां त्र्यार्षेयप्रवरो भवति काश्यपावत्साररैभेति । कश्यपवदवत्सारवद्रैभवदिति ॥ संप । चलुभिश्चोभे उपलोधजलम्बबहुभिडोहैर्युरः पर्या मौजीमो गर्दबीमुखो हिरण्यबाहुश्चैरनाभः केशीलकोकिलौ कुहलो वृकखण्डश्चेत्येते देवजातपाः । उदमेघतृणबिंदुसुदानुकौवलयश्चोत्तरश्च सुकेतुश्चेत्येते कौरडजाः शकिला वैदानवसौदानवपैल्यलायूपरिवारीत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरः । काश्यपासितदैवलेति शांडिलासितदैवलेति वा । कश्यपवदसितवद्देवलवदिति । शाण्डिलवदसितवद्देवलवदिति वा ॥ आनष्टायोप्यकुलयश्शाकलयो रावपालजस्सैकीराजवाहिश्चसौरन्ध्रिराजसैवकिसासुचिकापुटपिंगाक्षिलौगाक्षिसरतब इत्ये+ते प्रातर्वासिष्ठा नक्तं कश्यपा इत्येतेषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति । काश्यपावत्सारवासिष्ठेति । वसिष्ठवदवत्सारवत्कश्यपवदिति ॥

इति कात्यायनलौगाक्षिप्रणीतं कश्यपगोत्रप्रवरकाण्डमुदाहृतम्.

---

* आग्रायणा वृषगणा सप्किकायना ओपप्रतिमामरश्च गोजारिटिर्वारध्वरावणिशालावनेयाः कारञ्जाश्चेकेता असुरायणा माद्रव्या वैधुलकयः स्वैकयो...सैंधवास्स्वैध्रका आह्वगायका देवयाता सोमयाता अथोपश्चायावणश्चेदगव्या...काचकायनाः...त्रैषायणा हाकिरयो दाक्षपाणयो... फलमूलधूम्रायणाश्श्वतश्चायो आश्वलायनाः कौषीतकाः खगदा आश्वो वाग्मिशर्मायणाश्च ये माण्डव्याः कैकयशः काष्ठकायनो जहीयनो हस्त्य...सौगभुवा इत्ये.

\+ जलम्ब वहभिद्योहैः पुरुपयो माचमम्मो गर्दभामुखो हिरण्यबाहुश्चैरभानुः जाकेउकोकिलाकहनावृकखण्डश्चेत्येते देवरातयः उदमेघतृणबिन्दुमुदानुकैवलश्चौ...कौरद्राजाः शम्बिला...पैप्युलायूपरीवरीत्ये...आनष्टयोफाकुलयश्शाक्तयो रावफाल्यः सैकीराजवाहश्च सैरन्ध्रिराजस्तवाकि...सरभव इत्ये.

अथाश्वलायनोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

आहाश्वलायनः—

काश्यपानां काश्यपावत्सारासितेति ॥ नैध्रुवाणां काश्यपावत्सारनैध्रुवेति । रेभाणां काश्यपावत्साररैभेति । शण्डिलानां शाण्डिलासितदैवलेति । काश्यपासितदैवलेति वा ॥

इत्याश्वलायनोक्तं कश्यपगोत्रकाण्डमुदाहृतम्.

अथ मत्स्यपुराणोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

मरीचेः कश्यपः पुत्रः कश्यपस्य महाकुले ।
गोत्रकारानृषीन्वक्ष्ये तेषां नामानि मे शृणु ॥
आग्रायणा विषगणा मेषाविरिटिकायनाः ।
भवनन्दी महाचक्री दाक्षपायण एव च ॥
ग्राष्टेयना ह्याकिरयो हस्तिदस्तु तथैव च ।
वात्स्यायनानि कृतजा ह्याश्वलायनिनस्तथा ॥
प्राग्रायणः पैलमौलिराश्ववातायनस्तथा ।
कौषीतकास्त्वावतका अग्निशर्मायणिश्च ये ॥
मेषपाः कैकरसपास्तथा चैव सुचभ्रयः ।
यौलयो ज्ञानराधश्च अज्ञावस्सर्व एव तु ॥
श्यामोदरा वैवशपास्तथा वैलत्वलायनः
कष्टायनाश्च मारीचा आजिहायनहास्तिकाः ॥
वैकर्णेयाः कश्यपाश्च सासिसाहारितायनाः ।
मतंससावभृगवस्त्र्यार्षेयाः परिकीर्तिताः ॥
वत्सरः कश्यपश्चैव निध्रुवश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्ति

नैहास्यसांख्यामित्राश्च त्र्यार्षेयाः परिकीर्तिताः ।
वत्सरः कश्यपश्चैव निध्रुवश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
अतः परं प्रवक्ष्यामि द्व्यामुष्यायणगोत्रजान् ॥
अनुष्टेयाभिकुरयास्तानयो राजवन्नयः ।
सैरुषी रोदबर्हिश्च सैरन्ध्री रूपवत्साकिः ॥
साम्राकिस्साद्दपिंगाक्षिस्सचाताम्बिस्तथैव च ।
दिवा वसिष्ठा इत्येते नक्तं ज्ञेयाश्च कश्यपाः ॥
त्र्यार्षेयश्च तथैतेषां प्रवरः परिकीर्तितः ।
कश्यपो वत्सरश्चैव वसिष्ठश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
संपातिश्च बलिश्चोभौ पिप्पलोऽथ जलन्धरः ॥
सुंजोतमानः पर्वश्च कर्दमो गर्दभीमुखः ।
हिरण्यबाहुकैरातावुभौ कश्यपशोभनौ ॥
कुलहो वृषखण्डश्च मृगकेतुस्तथोत्तरः ।
तदपासस्ववसवोमहाकैरलयाश्च ये ॥
शाण्डिला वैदानवसोदनवो वेदपातयः ।
पिप्पलादिस्तौवरिव ऋषिर्वा परिकीर्तिताः ॥
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरश्शुभः ।

---

१ आम्रायणा वृषगणा मेषकिरिटि...दाक्षमाणयः...श्रेष्ठेयवाह्यकिरयो हस्तिदासिस्तथैव च । वात्सताल्म-लिकृद्रुतसश्वलायनिनस्तथा ।...राश्वबाणायनिस्तथा । कौशान्तका आश्ववीता...। मौपीरपि कैकिपया...शुचि-भ्रयः । पैलयो...अम्रावस्सर्वः...। श्यामाताशिशियश्चैव तथा ये शाद्वलायनः । कष्टायनाश्च नारी वा...विक-र्णैयाः...शासिसा...गतंससाव...अवत्सारः कश्यपश्च...आनुष्टयो भाकुरयः तातकोपाजवत्रयः । सौपत्रिरोद वाहिश्च...रोधसावकिः । साम्राक्षिस्साद...काश्यपावत्सारश्च...

असितो देवलश्चैव कश्यपश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
ऋषिप्रधानस्य तु कश्यपस्य दाक्षायणीभिस्सकलं प्रसूतम् ।
जगत्समग्रं मनुसिंहमुख्य किं ते प्रवक्ष्याम्यहमुत्तरं नृप ॥

इति मत्स्यपुराणे प्रवरानुकीर्तने कश्यपगोत्रप्रवराध्यायः.

एतेषु काण्डेपूक्तानां निध्रुवरेभशाण्डिललौगाक्षिगणानां परस्परमविवाहः सगोत्रत्वात् । गोत्रत्वं च, सर्वेपु प्रवरेपु व्रीयमाणतया सत्तया च कश्यपानुवृत्तेः । त्र्यार्षेय प्रवरेषु द्व्यार्षेयसन्निपाताच्च । लौगाक्षीणां तु द्विगोत्रत्वात्कश्यपैसवैर्वसिष्ठैश्चाविवाहः । इह शण्डिलानां चत्वारः प्रवरा विकल्पेन बोधायनोक्ताः । काश्यपावत्सारशाण्डिल्येति प्रथमः । काश्यपावत्सारदेवलेति द्वितीयः । काश्यपावत्साराप्सितेति तृतीयः । शाण्डिलासितदेवतेति चतुर्थः तथाऽऽपस्तम्बाभिरुक्तौ विकल्पेन द्वौ प्रवरौ । देवलासितेति प्रथमः । काश्यपदेवलेति द्वितीयः । तत्रैतेषु प्रवरेपु षट्सु पञ्च मन्त्रदृशः प्रतीयन्ते—कश्यपावत्सारशण्डिलदेवलासिताः । ततः शण्डिलानां पञ्चार्षेयः प्रवरो वक्तव्यः काश्यपावत्सारशाण्डिल्यदेवलासितेति, ‘ यथर्षि मन्त्रकृतो वृणीते’ ‘यावन्तो वा मन्त्रदृशो वृणीते’ इति श्रुतिभ्याम तथा यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि, इत्युक्त्वा ‘ यावन्तो वा मन्त्रकृतस्तावन्तो वृणीते’ इति कात्यायनवचनाच्च । तथाऽपि पञ्चार्षेयप्रवरः केनापि सूत्रकारेण नोपदिष्टः । तस्मात्समानायामपि शण्डिलसमाख्यायां वंशभेदिकल्पनया व्यवस्थिता एते विकल्पा द्रष्टव्याः । वंशैक्ये सति पञ्चार्षेयवरणं प्रसज्यत इत्युक्तम् । तस्माद्यथोक्त एवार्थः ॥

शुंगशैशिरिरित्येको द्विगोत्रः प्रोच्यते मुनिः ।
तद्वंशप्रभवाः प्रोक्ताश्शुंगशैशिरयो यथा ॥
तथैकोहर्वसिष्ठत्वं नक्तंकश्यपतां गतः ।
मुनिर्द्विगोत्रस्तद्वंश्या लौगाक्ष्याद्या द्विगोत्रजाः ॥

---

* संपातिश्च बलिश्चाथ...मृजोघपूर्वः पूर्वश्च गर्दभिर्गर्दभामुखः । कुलिजो वृषगण्डश्च मृगेतुश्च तथोत्तरम् । तदपोश्चसत्वत्सोममहः कौरणयाश्च ये...वेदयातयः । पैप्पलादिश्चोदुम्बरीषतृपिर्वा...ऋषिप्रधानं त्वथ कश्यपस्य...प्रसूते ।

द्वयोरपत्यसामान्यादग्नेर्वरणमेतयोः ।
विकल्पेनाहुराचार्या विकल्पो नान्यथा भवेत् ॥
प्रथमः प्रवरः प्रोक्तः पितुरुत्पादकस्य यः ।
प्रतिग्रहीतुः पाश्चात्यश्शुंगशैशिरि [री] णां यथा ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
कश्यपगोत्रप्रवरकाण्डानि व्याख्यातानि.

---

अथ वसिष्ठगोत्रप्रवरकाण्डं व्याख्यास्यामः—
अतः परं वसिष्ठानां गोत्रप्रवरविस्तरम् ।
विवाहगोत्रप्रवरव्यक्त्यर्थमधुनोच्यते ॥
तत्र प्रथमं बोधायनोक्तं उदाहरिष्यामः—

वसिष्ठानेकार्षेयान् व्याख्यास्यामः वैतलकिर्वाठरकिसाश्वलागौरिश्रवस आश्वलायना वपिस्वान् सौविवृक्षाः व्याघ्रपादो वाह्यकायनि गायनिः नयाप्ताः जातूकर्ण्यां औध्रोमेकोभोजिकोलायनाः सुन्दहरिताः काण्डेवृद्धिः सोपवत्साज आलम्भायना लोमन्याः स्वस्त्याः कपिताः पार्णकायनाः पार्णवल्कोदवनगौरव्याश्च विश्वावनाः वाहकथय आवकितयो वस्वपाजयाः पूतिमाषाः सप्तवेला वसिष्ठा इत्येते वसिष्ठाः । तेषामेकार्षेयः प्रवरो भवति । वासिष्ठेति होता वसिष्ठवदित्यध्वर्युः ॥ कुण्डना लोहायना गुग्गुलिरश्वत्थो वैकर्णय आविश्वबदरोऽश्मरथ्यः वाहवः क्रौंकोल्यसांगलिनः कापटवः पेठका नवग्रामा हिरण्याक्षयाः पैप्पलादयो भाज्यकिर्माध्यन्दिनिश्शान्तिस्सौपक्षीरित्येते कुण्डिनाः । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठमैत्रावरुणकौण्डिन्येति होता । कुण्डिनवन्मित्रावरुणद्वसिष्ठवदित्यध्वर्युः ॥ उपमन्यवः औपगवा मण्डलेखयः कपिंजला जालागतः जयो लोकास्त्रैवर्णाश्च वपास्तागिरिसाराक्षरा मोलायो महाकर्णायनाः बालशिखा औदाहमानयो बल-

यना भागुरिस्थायनाः कुण्डोदरायणाः लक्ष्मणेयाः कावान्धयो वार्कश्वय आसक्षरय आलवयः कपिकेश * इत्येते उपमन्यवः । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठेन्द्रप्रमदाभरद्वसव्येति होता । आभरद्वसुवदिन्द्रप्रमदवद्वसिवष्ठदित्यध्वर्युः ॥ पराशराः कुहुंशयो वाजयो वाजिमन्तयो वैमतायनग्रावाविरेषां पञ्चम एते कृष्णाः पराशराः परोकर्थौ वैकरयः खादायः प्रामुदात्तयो हर्यश्व एषां पञ्चमः गौरा पराशराः तुल्योयनयो गोपयः स्यातयो वारुणिरेषां पञ्चमः एतेऽरुणाः पराशराः भालुक्या वाजरिश्चैव क्राह्वयनाः क्रौकुलयः क्रौमतिरेषां पञ्चमः एते नीलाः पराशराः । कृष्णाजिनाः कतिमुखा स्वास्यापनयः श्वेतयूपयः पौष्करसादिरेषां पञ्चम एते श्वेताः पराशराः । गार्ग्यायनयो वार्ष्ण्ययः श्यामेया श्लोनुहिस्सहवौलि+रेषां पञ्चमः एते श्यामाः पराशराः । कृष्णा गौरा अरुणा नीलाः श्वेताः श्यामाःपराशराः । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठशाक्त्यपाराशर्योति होता । पराशरवच्छक्तिवद्वसिष्ठवदित्यध्वर्युः । वसिष्ठानां सर्वेषामविवाहः ॥

इति बोधायनोक्तं वसिष्ठगोत्रकाण्डमुदाहृतम्.

---

* वैकलिर्वांशरकिशाकलायना...कपिष्ठलाश्शौचिवृक्षा....वाह्वाकायनिः नाहव्या जतुकर्णा औतुललोमिः पौलायनाः मुन्दहारिताः काण्डवृद्धिः साधुसायना जालम्भायना लोमन्या...कारुरक्षिताः योलक्रायनाश्चोलपाणवाह्लिः देवनकोनुठ्यावहापयः आक्षिपयो वय्यपटपयो प्रतिमाष्या...कुण्डिना ताजायना गुल्मुलितापश्चव्यौ वैकर्णय आविलबदरो...हिरण्याक्षाः पैप्पलादौभाः कक्षिमाद्यन्दिनाश्शान्तिस्सौबदरिरित्येते...जालागवहयो लोकाक्षैवर्णाश्वाह्वा वहयाङ्गारास्स्वराक्षराश्शैलाहलिनोमुहाकर्णयो दाबाखा औद्दाहमानयो...भागवित्तायनाः... लाक्ष्मणेयाः वित्थायनाः कासावयोवर्कांश्वकियः अनृक्षरवा आरववाः तर्षिकेशः.

+ पराशराः कद्रुशयो वाजिजियो मैमतायानिर्गोपायनिरेषां...खलापयनो गोपायनयः स्यातय आतय आरुणि... । वाल्क्या वादरिश्चैव काह्वायनाः कानुशातयः क्षौमतिरेषां...श्यामायनयश्श्वेतरूपयः वात्स्यायनयो वर्ष्णेयः श्यामेयाश्शौगिलिस्सहचोलि.

अथापस्तम्बाद्युक्तं वसिष्ठगोत्रमुदाहरिष्यामः—

एकार्षेया वसिष्ठा अन्यत्र पराशरेभ्यः† वासिष्ठेति होता । वसिष्ठवदिति । त्र्यार्षेयमु हैके वासिष्ठेन्द्रप्रमदावरद्वसव्येति आभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदिति ॥ अथ पराशराणां त्र्यार्षेयो वासिष्ठशाक्त्यपाराशर्येति । पराशरवच्छक्तिवद्वसिष्ठवदिति ॥ अथ कुण्डिनानां त्र्यार्षेयो वासिष्ठमैत्रावरुणकौण्डिन्येति । कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदिति ॥ अथ संकृतिपूतिमाषाणां त्र्यार्षेयः शाक्त्यसांकृत्यगौरिवीतेति । गौरिवीतवत्संकृतिवच्छक्तिवदिति ॥

इत्यापस्तम्बाद्युक्तं वसिष्ठगोत्रकाण्डमुदाहृतम.

अथ कात्यायनलौगाक्षिप्रणीतं वसिष्ठगोत्रमुदाहरिष्यामः—

वसिष्ठान्व्याख्यास्यामो वसिष्ठानामेकार्षेयः प्रवरः येऽन्यत्रोपमन्युपराशरकुण्डिनजातूकर्णेभ्यः । व्याघ्रपदा औपवना औपगवा वैगलाः सात्वलायनाः कपिष्ठलाः औदलोमाः आश्वलायनाः वटीकराः गोपायनाः बौधयश्च वाकव्यः अथ सत्वबाह्यकृत्कीलीव्ययः पलाशयो हरितयो वाकुरयश्च ये आयस्थूलाः शितिवृक्षाः लोमायन्या ब्रह्मपुरेयाः स्वस्तिकराः काण्डेविद्धिमाण्डुलिगौधिलिबौविविमालोहधिसौ मनसायनब्रह्मवलि चौ पौरिश्रवसयाज्ञवल्क्याः पार्णवल्क्या ‡इत्येतेषामविवाहः तेषां

† एकार्षेयास्सर्वे वासिष्ठा अन्यत्रोपमन्युकुण्डिनपराशरेभ्य इति हिरण्यकेशमतिः । उपमन्यून् कुण्डिनान्पराशरान्वर्जयित्वेत्यर्थः । किमर्थमुपमन्युप्रभृतीनां प्रतिषेधः क्रियते त्र्यार्षेयवत्सिद्धमनेकार्षेयत्वम् । सत्यं सिद्धं । नियमार्थं एतेभ्योऽन्येषां तद्वैकल्पिकमिति । तेन जातुकर्णिकानां वैकल्पिकत्र्यार्षेयसंबन्धो न तु सर्वेषामेव त्र्यार्षेयमु हैके इत्ययं प्रवर उक्तो नोपमन्यूनां पराशराणां कुण्डिनानां च प्रवरान्तरमेव वासिष्ठेन्द्रप्रमदाभरद्वसव्येति । इति कपर्दिभाष्यम.

‡ ...नैगला आश्वलायनाः...औडुलोमा...वठीकराः मौपायना बोधयश्च शकटव्याजवशत्यवाह्यकृतकारावयवपाराशयो हरितकयो वांकुरयश्च य जयमालाः शिनिवृक्षाः तामायन्याः...काण्डविद्धिमाण्डुलिवेडलिगौधिलिगैविलिगालोहदि...ब्रह्मवलिगौरिश्रवस...पार्णवल्क्याः पौर्णवल्क्याः...

एकार्षेयः प्रवरो भवति । वासिष्ठेति वसिष्ठवत् । शैलालयो महाकर्णि-कौरव्यावत्रैवणाः कपिञ्जलाः दावालसेविभागवित्तायनाश्चैकोमारायणा लागहयः कौरकृत् भागुरायणाः शार्कयाः सावेषाः अथो औलपयश्चाथ सङ्क्चायनास्तदुहितरथोमापसरावयो दानकायना बाह्यवाक्यो गौरथ-श्चौण्डावरय आलवायनाः प्रालवायनाः औपमन्यवाः नद्यायन्योदसेरकाः पादकायनाः औद्गाहमतय औपलेखयो ब्राह्मवलयः पार्णगारिः इत्येते†-षामविवाहः तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठाभरद्वास्विन्द्रप्रमदेति । इन्द्रप्रमदवदाभरद्वसुवद्वसिष्ठवदिति । औपस्वस्थाः स्वस्थयः स्वलोका लोहयश्च अक्षतयः पैप्पलादिविधङ्कपित्रैश्शृङ्गा मौद्गललुलायमित्रावरुणाः‡ कुण्डिना इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठमैत्रावरु-णकौण्डिन्येति । कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदिति । जातूकर्ण्या बोधा-यनाःपाटलय इत्येतेषामविवाहः तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठात्रि-जातूकर्ण्येति । जातुकर्ण्यवद्वसिष्ठवदत्रिवत् । काण्डूशयो वाहरमो जेमयो-भैमयनागोपाणिरेषां* पञ्चम एतेऽरुणाः पराशराः आविष्ठायना वा-र्शिड्यामेया श्लोकयाश्च इषीकहस्तः एतेषां पञ्चम एते कृष्णाः पराशराः । प्रारोहयो वाहयः प्रायः कोर्कचादयः पोष्करसादिरेषां पञ्चम एते गौराः पराशराः पाठिका बादरश्चैव स्कौम्भिन्याः कौकवादयः क्षौमिरेषां पञ्चम एते श्वेताः पराशराः । कृष्णाजिनाः कपिग्रोथाः आकयः शातपाः हय-

† कौरव्यात्रैणवाः कपिंजलोदावालसिचिः भाग...गालग्रहयः गौरकृत् भागुरायणाः...शामेयाः अथो-...स्वदुहितरथो माषशरावया शशकायना व्याह्यकायना वाक्योगौरथश्चान्द्रोदय आलवायनाः पालवायना औजाहमानय औपलेखयो ब्राह्मबलयः पाणिगालिः इत्ये.

‡ औस्वसाः स्वस्तयश्च लोहालोहयश्च ये माध्यन्दिना अक्षितयः पैप्पलादिवाचक्षुपिशुङ्गामुद्गमौद्गलकुण्डिना मित्रावरुणाः.

* काण्डूषयो वाहयो तयो जेमयो भैमकायनारोगायानिरेषां.

श्रीरेषां पञ्चम एते नीलाः पराशराः । व्याप्यायनिर्वैरिणेया बैल्वयूपयस्तरणिरेषां † पञ्चम एते धूम्राः पराशराः । त्रिंशत्पराशरा इत्येतेषामविवाहः तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठशाक्त्यपाराशर्येति । वसिष्ठवच्छक्तिवत्पराशरवत् ॥

इति लौगाक्षिपाठानुसारेण वसिष्ठगोत्रकाण्डमुदाहृतम् ।

अध्वर्युक्रमविशेषज्ञापनार्थम् ।

अथाश्वलायनोक्तं वसिष्ठगोत्रकाण्डमुदाहरिष्यामः—

वासिष्ठेति वसिष्ठानां येऽन्य उपमन्युपराशरकुण्डिनेभ्यः । उपमन्यूनां वासिष्ठाभरद्वस्विन्द्रप्रमदेति । पराशराणां वासिष्ठशाक्त्यपाराशर्येति । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति ॥

इति आश्वलायनोक्तं वसिष्ठगोत्रकाण्डमुदाहृतम् ।

अथ मत्स्यपुराणोक्तं वसिष्ठगोत्रप्रवराध्यायमुदाहरिष्यामः—

मत्स्य उवाच—

वसिष्ठवंशजान् विप्रान् निबोध गदतो मम ।
एकार्षेयस्तु प्रवरो वसिष्ठानां प्रकीर्तितः ॥
वसिष्ठा एव वासिष्ठा अविवाह्या वसिष्ठजैः ।
व्याघ्रपादा औपगवा वैष्णवास्सातुलायनाः ॥
कपिष्ठला औमलोमा अध्वला वनटाः कराः ।
गोपायनाथोवयश्च दासव्या अथ वाह्यकृत् ॥
तालीनयः पालिनयाः ततो वायथयश्च ये ।
आयस्थूणास्सितिवृक्षाः तथा ब्रह्मपुरेयकाः ॥

---

† वार्ष्णिश्योमयशोकयाश्च...पाक्षयःकौमुदायः पौष्करसादि...कृष्ण जिनाः कापिग्रीवाः आर्कर्यः शालशाहयः...काल्यायनिः क्रौख्यायनिः त्रैर्णयो बैल्बियूपस्तरणिरेषां.

लोमायनस्स्वास्तिकाश्च चाण्डालिगौण्डलिस्तथा ।
व्यलोहपिस्तु सुनाश्वस्सुयाविर्विद्धिरेव च ॥
थौलिजाली ब्रह्मबलः पौलिश्रवस एव च ।
पौडुवो यज्ञवल्क्यश्च एकार्षेया महर्षयः ॥
वसिष्ठ एषां प्रवरस्त्ववैवाह्याः परस्परम् ।
सेलालयो महाकण्वः कौरव्यः क्रोकिनस्तथा ॥
कपिञ्जलो वालशिखी भार्गविर्नायकाश्च ये ।
कौमारो रावणात्कालल्काः कृष्णास्तराजणाः ॥
शाकाह्वयाश्शाकधियः कण्वा उपलयाश्च ये ।
शाकायनास्तुहागाश्च अथ माषशरावयः ॥
दाकायना बालवयो बाकयो गौरथास्तथा ।
लम्बायनाश्यामवयो ये च क्रोडोदरायणाः ॥
प्रलम्बनाश्च ऋषय औपमन्यव एव च ।
सांख्यायनाश्च ऋषयो तथा ये च दसेरकाः ॥
पालकायन उद्गाहा ऋषयश्च बलेखलाः ।
मातेया ब्रह्मबलयः पर्णागारिस्तथैव च ॥
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरश्शुभः ।
भरद्वसुवसिष्ठश्च इन्द्रप्रमद एव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
औपस्वस्था स्वस्थलयो यालोहा लोहयश्च ये ॥

१...वैबाह्या सालुलायनाः ।...औललामा अध्वरावलटीकराः...धौवयश्च दासह्या अथ...ततो वा प्रथययश्चये । तथा ब्रह्मपुरशायाः...चण्डालिगौडिलिस्तथा । व्यालोहारिन्तु सूनाश्वस्सु श्राबिश्विद्धिरेव च । थौलिवौली शौललयो...कोधिनस्तथा.

माध्यन्धिको माक्षितयाः पैप्पलादिर्विचत्कषी ।
त्रैसिङ्गायनसौगूलुस्त्रिवांगुढिनसातमाः ॥
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरश्शुभः ।
वसिष्ठमित्रावरुणौ कुण्डिनश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
जातुकर्ण्यो वसिष्ठश्च जादयाश्च तथैव च ॥
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरश्शुभः ।
जातूकर्ण्यो वसिष्ठश्च तथैवात्रिश्च पार्थिव ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
वसिष्ठवंशेऽभिहिता मयैते ऋषिप्रधाना नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥
इति मत्स्यपुराणे प्रवरानुकीर्तने वसिष्ठगोत्रप्रवराध्यायः.

मत्स्य उवाच–
वसिष्ठस्तु महातेजा निमेः पूर्वपुरोहितः ।
बभूव पार्थिवश्रेष्ठ यज्ञस्तस्य समन्ततः ॥
शान्तात्मा पार्थिवश्रेष्ठ विशश्राम ह्लदा गुरुः ।
तं गत्वा पार्थिवश्रेष्ठो निमिर्वचनमब्रवीत् ॥
भगवन्यष्टुमिच्छामि तन्मां याजय मा चिरम् ।
तमुवाच महातेजा वसिष्ठः पार्थिवोत्तमम् ॥
कंचित्कालं प्रतीक्षस्व तव यज्ञैर्भृशं नृप ।
श्रान्तोऽस्मि राजन् विश्रम्य याजयिष्यामि ते नृप ॥

१ रावणात्कीरो लाकौः कृष्णा...शाकायनाक्तुह्यकाश्च...आभरद्वसुर्वसिष्ठश्च...माध्यन्दिनो माक्षितयाः... त्रैस्तिगायन–सौगुल्लुर्वांगुर्विशांमतः. २ विशश्राम तदा पुरा.

एवमुक्तः प्रत्युवाच वसिष्ठं नृपसत्तमः।
पारलौकिककार्यें तु कः प्रतीक्षितुमुत्सहेत् ॥
न च मे सौहृदं ब्रह्मन्कृतान्तेन बलीयसा।
धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ॥
धर्मपथ्याशनो जन्तुर्मृतोऽपि सुखमश्नुते।
श्वःकार्यमद्य कुरुते पूर्वाह्णे चापराह्णिकम् ॥
न हि प्रतीक्षते मृत्युः कृतं वाऽपि न वाऽकृतम्।
क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् ॥
वृकीवोरणमासाद्य मृत्युरादाय गच्छति।
नैकान्तेन प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते ॥
आयुष्ये कर्मणि क्षीणे प्रसह्य हरते कुलम्।
प्राणो वायुश्चलत्वं च वायोर्विदितमेव ते ॥
यदत्र जीव्यते ब्रह्मन् क्षणमात्रं तदद्भुतम्।
शरीरं शाश्वतं मन्ये विद्याभ्यासे धनार्जने ॥
अशाश्वतं धर्मकार्ये ऋणवानस्मि सङ्कटे।
सोऽहं सम्भृतसम्भारो भवन्मूलमुपागतः ॥
न चेद्याजयसे मां त्वमन्यं यास्यामि याजकम्।
एवमुक्तस्तदा तेन निमिना ब्राह्मणोत्तमः ॥
शशाप तं निमिं क्रोधाद् विदेहस्त्वं भविष्यसि।
श्रान्तं मां त्वं समुत्सृज्य यस्मादन्यं द्विजोत्तमम् ॥
धर्मज्ञस्तु नरेन्द्र त्वं याजकं कर्तुमिच्छसि।
निमिस्तं प्रत्युवाचाथ धर्मकार्यरतस्य मे ॥

विघ्नं करोषि नान्येन यजनं च तथेच्छसि ।
शापं ददासि यस्मात्त्वं विदेहोऽद्य भविष्यसि ॥
एवमुक्ते तु तौ जातौ विदेहौ द्विजपार्थिवौ ।
देहहीनौ तयोर्जीवौ ब्रह्माणमुपजग्मतुः ॥
तावागतौ समीक्ष्याथ ब्रह्मा वचनमब्रवीत् ।
अद्य प्रभृति ते स्थानं निमेर्जीव ददाम्यहम् ॥
नेत्रपक्ष्मसु सर्वेषां त्वं वसिष्यसि पार्थिव ।
त्वत्सम्बन्धात्तथा तेषां निमेषस्सम्भविष्यति ॥
चालयिष्यन्ति तु तदा नेत्रपक्ष्माणि मानवाः ।
एवमुक्ते मनुष्याणां नेत्रपक्ष्मसु सर्वशः ॥
जगाम निमिजीवस्तु वरदानात्स्वयम्भुवः ।
वसिष्ठजीवं भगवान् ब्रह्मा वचनमब्रवीत् ॥
मित्रावरुणयोः पुत्रो वसिष्ठस्त्वं भविष्यसि ।
वसिष्ठेति च ते नाम तत्रापि च भविष्यति ॥
जन्मद्वयमतीतं च तत्रापि त्वं स्मरिष्यसि ।
एतस्मिन्नेव काले तु मित्रश्च वरुणस्तथा ॥
बदर्याश्रममासाद्य तपस्तेपतुरव्ययौ ।
तपस्यतोस्तयोरेव कदाचिन्माधवे ऋतौ ॥
पुष्पितद्रुमसंस्थाने शुभे दयितमारुते ।
ऊर्वशी तु वरारोहा कुर्वती कुसुमोच्चयम् ॥
सुसूक्ष्मरक्तवसना तयोर्दृष्टिपथं गता ।
तां दृष्ट्वा सुमुखीं सुभ्रूं नीलनीरजलोचनाम् ॥

उभौ चुक्षुभतुर्धैर्यात्तद्रूपपरिमोहितौ ।
स्कन्नं रेतस्ततो दृष्ट्वा शापभीतौ परस्परम् ॥
चक्रतुः कलशे शुक्रं तोयपूर्णे मनोरमे ।
तस्मादृषिवरौ जातौ तेजसाऽप्रतिमौ भुवि ॥
वसिष्ठश्चाप्यगस्त्यश्च मित्रावरुणयोर्द्वयोः ।
वसिष्ठस्तूपयेमेऽथ भगिनीं नारदस्य तु ॥
अरुन्धतीं वरारोहां तस्यां शक्तिमजीजनत् ।
शक्तेः पराशरः पुत्रस्तस्य वंशं निबोध मे ॥
यस्य द्वैपायनः पुत्रस्स्वयं विष्णुरजायत ।
प्रकाशो जनितो येन लोके भारतचन्द्रमाः ॥
पराशरस्य तस्य त्वं शृणु वंशमनुत्तमम् ।
काण्डर्षयो वाहनपो जैह्मपो भौमतापनः ॥
गोपालिरेषां पञ्चम एते गौराः पराशराः ।
प्रागेहया बाह्यतयाः पार्येयाः कौतुजातयः ॥
हर्यश्व एषां पञ्चमो नीला ज्ञेयाः पराशराः ।
कार्ष्णायनाः कपिश्रेष्ठाः कार्कैयस्यानयातयाः ॥
पुष्करः पञ्चमश्चैषां कृष्णा ज्ञेयाः पराशराः ।
आविष्ठायनवालेयस्वायस्वाश्चौषयश्च ये ॥
इषीकहस्तः पञ्चम एते श्वेताः पराशराः ।
पठिका बादरिश्चैव स्तम्भत्याः कौञ्चका वकाः ॥
क्षौमिरेषां पञ्चम एते श्यामा पराशराः ।
खल्वायना वार्ष्णायनास्तैलेयाः खलु यूथपाः ॥

भाल्विरेषां पञ्चम एते धूम्राः पराशराः ।
पराशराणां सर्वेषां त्र्यार्षेयः प्रवरो मतः ॥
पराशरश्च शक्तिश्च वसिष्ठश्च महातपाः ।
परस्परमवैवाह्यास्सर्वे एव पराशराः ॥
उक्तास्तवैते नृप वंशमुख्याः पराशरास्सूर्यसमप्रभावाः ।
येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणे प्रवरानुकीर्तने वसिष्ठगोत्रप्रवराध्यायो द्वितीयः.

व्याचक्ष्महे वसिष्ठानां गोत्रकाण्डान्यमूनि च ।
विवाहगोत्रप्रवरस्वरूपप्रतिपत्तये ॥

उक्तानामिह पञ्चानां वसिष्ठगणानां परस्परमविवाहः, समानगोत्रत्वात् । समानगोत्रत्वं च पञ्चसु प्रवरेषु वसिष्ठस्य सर्वैस्सत्तया ध्रियमाणतया चानुवृत्तेः । संकृत्यादीनां तु वसिष्ठैः पूर्वैः स्वगणोक्तैश्च सहाविवाहः इति पूर्वमेवोक्तमाङ्गिरसकांडे । कुण्डिनानां तु प्रवरे वासिष्ठमैत्रावरुणकौण्डिन्येत्यत्र मित्रावरुणसंज्ञकावृषी मन्त्रदृशौ द्रष्टव्यौ । न देवताविशेषौ प्रसिद्धौ ग्राह्यौ । कुतः ? "न देवैर्न मनुष्यैरार्षेयं वृणीते । ऋषिभिरार्षेयं वृणीते" इति श्रुतेः । तयोश्च मित्रावरुणयोरत्र संहतमृषित्वं द्रष्टव्यम् । न प्रत्येकम् । कुतः । 'न चतुरो वृणीते' इति चतुर्णां वरणप्रतिषेधात् । मत्स्यपुराणे च मित्रावरुणयोः बदर्याश्रमे तपस्यतोरागतां ऊर्वशीं दृष्टवतोः शुक्रं स्कन्नं क्वचित्तोयपूर्णे कलशे गृहीतम्; ततो वसिष्ठो जातो वसिष्ठात् कुण्डिन इति दृष्टत्वात् तयोः ऋषित्वं तयोः पितृत्वं संहतं सिद्धमिति ॥

अत्र श्लोकः—

वसिष्ठानां न सर्वेषां विवाहोऽस्ति परस्परम् ।
भ्रातर्वसिष्ठसंकृत्योर्न द्वयोरपि गोत्रयोः ॥

इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
वासिष्ठगोत्रप्रवरकाण्डानि समाप्तानि.

---

१ स्तैलेयाः श्वेतरूपयः । आरुणिरेषां पञ्चमः.

अथागस्तिगोत्रप्रवरकाण्डमुदाहरिष्यामः—

सप्तर्ष्यपत्यकुलसन्ततिगोत्रजानां काण्डानि सप्त विवृतानि गतान्यमूनि ।
व्यक्तीकृतप्रवरगोत्रविवाहतत्त्वं प्रस्तूयते स्मृतिपदैस्तदगस्तिकाण्डम् ॥

अत्रादौ बोधायनोक्तमगस्तिगोत्रकाण्डमुदाहरिष्यामः—

अगस्तीन्व्याख्यास्यामः । अगस्तयो विशलाद्यास्कालायनाः औपदहयनः कुल्माषदण्डिः लावर्णाः लाप्यः बवदयो वैरणयो बुधोदयः सैवपथयः शैशालवातपाः मौजकयः पाथोहताः द्वारिग्रीवाः रोहिष्या मौशलय * इत्येते अगस्तयः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्यदार्ढच्युतैध्मवाहेति होता । इध्मवाहवद्दृढच्युतवदगस्तिवादित्यध्वर्युः । सम्भवाहानां त्र्यार्षेयः प्रवरो भवति । आगस्त्यदार्ढच्युतसाम्भवाहेति होता । सम्भवाहवद्दृढच्युतवदगस्तिवदित्यध्वर्युः । सोमवाहानां त्र्यार्षेयः प्रवरो भवति । आगस्त्यदार्ढच्युतसौमवाहेति होता । सोमवाहवद्दृढच्युतवदगस्तिवदित्यध्वर्युः । यज्ञवाहानां त्र्यार्षेयः प्रवरो भवति । आगस्त्यदार्ढच्युतयाज्ञवाहेति होता । यज्ञवाहवद्दृढच्युतवदगस्तिवदिवदित्यध्वर्युः ॥

इति बोधायनोक्तमगस्तिकाण्डमुदाहृतम्.

अथापस्तम्बाद्युक्तमगस्तिगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अगस्तीनामेकार्षेयप्रवरो भवति । आगस्त्येति होता अगस्तिवदित्यध्वर्युः । त्र्यार्षेयमु हैके आगस्त्यदार्ढच्युतैध्मवाहेति होता इध्मवाहवद्दृढच्युतवदगस्तिवदित्यध्वर्युः ॥

इत्यापस्तम्बाद्युक्तमगस्तिगोत्रकाण्डमुदाहृतम् ।

---

१ शृ—स्मृतिमदेतदगस्तिकांडम् । * कल्माषदण्डिः धावणिः लावणिः लप्यावुधो वैरणः सैवपथथः कारण्याताः माञ्जिकिः पाथिकार्याः प्राचार्याः हृद्योगयः कांडहृता हारिग्रीवा रो[illegible]या मौपसलयः.

अथ लौगाक्षिकात्यायनोक्तमगस्तिगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अथागस्त्यान्व्याख्यास्यामोऽथोपकुलसुकलापकारिणिधारिणिमो-क्षतिवैरिणिकल्माषदारुतापायनास्सौरिभागगोव्यवहैभवहामुदानामेदि-नीपश्चपादावतानामगदध्यहारिग्रीवाणां सौरिश्यावत्तमयोरवतानामित्येते-षामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्यदार्ढच्युतध्मवाहेति होता । इध्मवाहवद्दृढच्युतवदगस्तिवदित्यध्वर्युः । अगस्तयः करम्भयः कुनाडाः कौशाल्याः खमेवसो* मयोभुवो गान्धारायणाः पौलस्तयः पुलहः क्रतुरित्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य-माहेन्द्रमायोभुवेति होता मयोभुववन्महेन्द्रवदगस्तिवदित्यध्वर्युः । पौर्ण-मासाः पौरणा इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आग-स्त्यपौर्णमासपौरणेति होता पूरणवत्पूर्णमासवदगस्तिवदित्यध्वर्युः ॥

इति लौगाक्ष्युक्तमगस्तिगोत्रकाण्डमुदाहृतम्, अध्वर्युक्रमविशेषज्ञापनायैव ।

अथाश्वलायनोक्तमगस्तिगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अगस्तीनामागस्त्यदार्ढच्युतेध्मवाहेति । सोमवाहो वोत्तमः । आग-स्त्यदार्ढच्युतसोमवाहेति ॥

इत्याश्वलायनोक्तमगस्तिगोत्रप्रवरकाण्डमुदाहृतम्.

अथ मत्स्यपुराणोक्तमगस्तिगोत्रप्रवरकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

अतः परमगस्त्यस्य वक्ष्ये वंशोद्भवान् द्विजान् ।
अगस्तयः करम्भयः कौशाल्याः करटास्तथ[1] ॥
सुमेधसो मयोभुवस्तथा गान्धारकायणाः ।

* अथोपंकुलसुकलापकारिणि धारिणि मौजिकिवैरिणि...मेहिन्यनिष्पक्षपरांडावातानामगदध्य...सौरिण्या-वत्तयोरवतानां...कुनाढाः कौशल्यश्वमेधसो.  १ करयस्तथा.

पौलस्त्याः पौलहाश्चैव क्रतुवंशभवास्तथा ॥
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरश्शुभः ।
अगस्त्यश्च महेन्द्रश्च ऋषिश्चैव मयोभुवः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
पौर्णमासाः पौरणाश्च त्र्यार्षेयाः परिकीर्तिताः ॥
अगस्त्यः पौर्णमासश्च पौरणश्च महातपाः ।
परस्परमवैवाह्याः पौर्णमासास्तु पौरणैः ॥
एवमुक्त ऋषीणां तु वंश उत्तमपूरुषः ।
अतः परं प्रवक्ष्यामि किं भवानद्य कथ्यताम् ॥

मनुरुवाच—

पुलहस्य पुलस्त्यस्य क्रतोश्चैव महात्मनः ।
अगस्त्यस्य तथा चैव कथं वंशस्तदुच्यताम् ॥

मत्स्य उवाच—

क्रतुः खल्वनपत्योऽस्मिन् राजन्वैवस्वतेऽन्तरे ।
इध्मवाहं स पुत्रत्वे जग्राह ऋषिसत्तमः ॥
अगस्त्यपुत्रं धर्मज्ञं आगस्त्याः क्रतवस्ततः ।
पुलहस्य तथा पुत्रास्त्रयश्च पृथिवीपते ॥
तेषां ते जन्म वक्ष्यामि उत्तरत्र यथाविधि ।
पुलहस्तां प्रजां दृष्ट्वा नातिप्रीतमनास्स्वकाम् ॥
अगस्त्यजं दृढच्युतं पुत्रत्वे वृतवांस्ततः ।
पौलहाश्च तथा राजन्नागस्त्याः परिकीर्तिताः ॥
पुलस्त्यान्वयसंभूतान् दृष्ट्वा रक्षस्समुद्भवान् ।

**अगत्स्यस्य सुतं धीमान् पुत्रत्वे वृतवांस्तथा ॥**

**पौलस्त्याश्च तथा राजन्नागस्त्याः परिकीर्तिताः ।**

**एते तवोक्ताः प्रवरा द्विजानां महानुभावा नृप वंशकाराः ॥**

**येषां तु नाम्नां परिकीर्तनेन पापं समग्रं पुरुषो जहाति ॥**

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां मत्स्यपुराणोक्तो भृग्वङ्गिरसामगस्त्याष्टमसप्तर्षीणां प्रवराध्यायः समाप्तः ।

---

एतेष्वगस्तिगोत्रकाण्डेषु उदाहृतानामगस्तिगोत्रगणानां सर्वेषां परस्परं विवाहो नास्ति, सगोत्रत्वात् । समानगोत्रत्वं चाष्टमस्यागस्तेः सर्वेषु प्रवरेष्वनुवृत्तेः, त्र्यार्षेयाणां द्व्यार्षेयसन्निपाताच्च ॥

इति व्याख्यातमगस्तिगोत्रकाण्डम् । अत्र श्लोकः—

न विवाहोऽस्त्यगस्तीनां सर्वेषामितरेतरम् ।
समानमुनिबाहुल्यात्सगोत्रत्वाच्च कारणात् ॥ इति ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यामगस्तिगोत्रप्रवरकाण्डं समाप्तम्.

---

इह जमदग्निगौतमभरद्वाजविश्वामित्रात्रिकश्यपवसिष्ठागस्तीनामष्टानां गोत्रकाराणां ऋषीणामपत्यवर्गेषु अष्टसु समानगोत्रत्वात् परस्परमविवाहमुक्त्वा तदनन्तरमापस्तम्बसूत्रभाष्यकारेण कपर्दिस्वामिनापरं किञ्चिदुक्तम्; किं तदिति चेत् ? तदीयभाष्यं पठामः—इह भृग्वङ्गिरसो भिन्नविवाहं कुर्वते । न चेत्समानार्षेया बहवस्स्युरिति मतं बोधायनस्येत्येतत्सर्वेषां प्रवराचार्याणां मतम्, न केवलं बोधायनस्यैव । वसिष्ठानां कश्यपानां विश्वामित्राणां भृग्वङ्गिरसामिव भिन्नविवाहं गर्ग इच्छति । कठानां प्रवरे चैवम् । अन्ये तेषां भिन्नविवाहं नेच्छन्ति । तत्रैवं त्रेषां ऋषिपक्षाणां स्वेस्वे पक्षे न विवाहः । कुतः ? द्वयोर्बहूनां च मतविरोधे सति भूयसां मतमनुष्ठेयम्, विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मतेति न्यायात् । ये तु पञ्चानां ऋषिपक्षाणां भिन्नविवाहमिच्छन्ति तेषां वसिष्ठपक्षेऽप्यसमानप्रवरैः सह स्यात् । कश्यपपक्षेऽपि निध्रुवासितरेभलक्ष्मणाहर्वसिष्ठनक्तंकश्यपानां परस्परतो देवलासितशण्डिलानां च न विवाहः । विश्वामित्रपक्षेप्यजानां चाविवाह इति । एतत्परीक्ष्यं विद्वद्भिरिति ॥

---

अतः परं क्षत्रियवैश्ययोश्च क्रमेण वक्ष्ये प्रवराविवाहौ ।
पुरोहितानां प्रवराश्रयित्वं पुरोहितापत्यतया च वक्ष्ये ॥

अत्राह बोधायनः—

क्षत्रियाणां त्र्यार्षेयो भवति । मानवैलपौरूरवसेति होता । पुरूरवोवदिलवन्मनुवदित्यध्वर्युः । वैश्यानां त्र्यार्षेयः प्रवरो भवति । भालन्दनवात्सप्रिमांकीलेति होता । मंकीलवद्वत्सप्रिवद्भलन्दनवदित्यध्वर्युः ॥

अत्राहुरापस्तम्बादयः—

अथ क्षत्रियाणां यद्युह स्वान्प्रवृणीते एक एवैषां प्रवरो मानवैलपौरूरवसेति । पुरूरवोवदिलवन्मनुवदित्यध्वर्युः । येषामुह मन्त्रकृतो न स्युः सपुरोहितप्रवरास्ते प्रवृणीरन् । अथ येषां स्युरपुरोहितप्रवरास्ते सपुरोहितप्रवरास्त्वेवं न्यायेन । एकार्षेया विशो वात्सप्रीति होता । वत्सप्रिवदित्यध्वर्युः ॥

आहतुः कात्यायनलौगाक्षी—

पुरोहितप्रवरो राज्ञामेतेनैव वैश्यप्रवरो व्याख्यातो यदि स ऋषीन् प्रवृणीयात् मानवैलपौरूरवसेति ब्रूयादिति ॥

आहाश्वलायनः—

पुरोहितप्रवरो राज्ञामथ यदि सार्षं प्रवृणीरन्मानवैलपौरूरवसेति ॥

सार्ष सहार्षेयमित्यर्थः ॥

इत्युक्तानि क्षत्रियवैश्यविषयाणि प्रवरसूत्रकाण्डानि.

---

तत्र द्विविधाः क्षत्रियाः केषांचिन्मन्त्रकृतो न सन्ति । केषांचित्सन्ति । येषां सन्ति आत्मीयमेव ते प्रवृणीरन् । येषां तु न सन्ति ते पुरोहितप्रवरान्प्रवृणीरन्निति पक्षद्वयमुपन्यस्य पुरोहितप्रवरानेव सर्वे क्षत्रियाः प्रवृणीरन्निति सिद्धान्तमाह—सपुरोहितप्रवरास्त्वेवं न्यायेनेति ॥ कः पुनः न्यायोऽभिप्रेतः ? सोऽयमुच्यते—सर्वेषां पुरोहितस्य विद्यमानत्वात् तेन च विना कर्मानधिकारात् पुर एनं हितमेव सर्वे

नयतीति पुरोहितशब्दव्युत्पत्तेः आत्मीयप्रवरपक्षे सर्वेषां समानप्रवरत्वादविवाहः प्रसज्यत इति न्यायः । अयमेव न्यायो वैश्यानामपि द्रष्टव्यः; तेषां च पुरोहितस्य प्राड्विवाकस्य दार्विहोमिकस्य विद्यमानत्वात्, आत्मीयप्रवरपक्षे समानप्रवरत्वाद-विवाहप्रसक्तेश्च । राजशब्दस्याभिषिक्तमात्रवचनत्वात् ब्राह्मणाश्च राज्यं प्राप्ताः पुरोहितप्रवरेणैव प्रवृणीरन्नित्येके मन्यन्ते तेषामपि पुरोहितस्य विद्यमानत्वात् । एतस्मिन्पक्षे पुरोहितसमानगोत्रैश्च सहाविवाहश्च ॥

इति व्याख्यातमिदं क्षत्रियवैश्यकाण्डद्वयमपि ।

अत्र श्लोकः—

राज्ञां विवाहप्रवरस्तु कार्यः पुरोहितैर्यः क्रियते स एव ।
येषां न कार्या प्रवराः कथंचित्कुतस्समानप्रवरत्वदोषात् ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां क्षत्रियवैश्यप्रवरकाण्डद्वयं समाप्तम् ।

---

अथ स्वगोत्रप्रवरानभिज्ञद्विजोत्तमानामधुना प्रवक्ष्ये ।
स्वाचार्यगोत्रप्रवराविवाहानाचार्यपुत्रत्वबलेन लभ्यान् ॥
स्वगोत्रं प्रवरं वा स्वं ये विप्रा नैव जानते ।
तेषां विवाहप्रवराः कथं स्युरिति संशये ॥
आपस्तम्बादयः प्राहुः सर्वज्ञाः संशयच्छिदः ॥

**अथासंप्रज्ञातबन्धुराचार्यामुष्यायणमनुप्रब्रवीताचार्यप्रवरं वृणीत ।**

इति । अस्यायमर्थः—बन्धुर्गोत्रं प्रवरो वा सम्यगप्रज्ञातो येन सोऽसंप्र-ज्ञातबन्धुः सत्यकामादिः । यथा सत्यकामो जाबालो गौतमाचार्यं 'उपेयां भगवन्तं' इत्युक्त्वा शरणं प्रपन्नो गौतमेन च 'किं गोत्रो नु सोम्यासि' इति च गोत्रं पृष्टस्सन्नाह—'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' इति । एवमसंप्रज्ञातबन्धुराचार्यामुष्यायणमाचार्यगोत्रं प्रवरं वाऽनुब्रवीत आनु-पूर्व्याद्ब्रूयात् । 'आचार्यप्रवरं वृणीते' इत्यनेनापि तथाऽर्थमाह ॥ ननु 'यो वा अन्यस्सन्नन्यस्यार्षेयं प्रवृणीते स वा अस्य तद्दपिरिष्टं वीतं ग्रह' इत्याद्या दोष-श्रुतयो बाध्येरन् । नेत्याहुः—औरसपुत्रादपि शिष्यस्य श्रेष्ठपुत्रत्वात् । यथाऽऽहा-पस्तम्बः—'एवमस्मै धर्मानाचिनोति स आचार्यस्तस्मै न द्रुह्येत कदाचन स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः' इति ॥ बोधाय-

नोऽप्याह—'यानुत्पादयते यानुपनयते यानध्यापयते यान्याजयते ते तस्य पुत्रा भवन्ति' इति ॥ सति चैवमाचार्यगोत्रैः शिष्याणां न विवाहः समानगोत्रत्वात्समानप्रवरत्वाच्च ॥

इति व्याख्यातं एतदसंप्रज्ञातबन्धूनां गोत्रप्रवरकाण्डम्.

अत्राहुः—

असंप्रज्ञातबन्धूनामाचार्यप्रवरास्स्मृताः ।
पक्षे चास्मिन्विवाहोऽपि तद्गोत्रैस्सह नेष्यते ॥

इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यामसंप्रज्ञातबन्धूनां गोत्रप्रवरकाण्डस्समाप्तः.

---

उक्तेषु गोत्रप्रवरेषु सत्सु सर्वेषु तेषां विनियोगमाहुः ।
बोधायनाद्याश्श्रुतितुल्यवाचः किंचित्क्वचित्कर्मणि तं प्रवक्ष्ये ॥

अत्राह बोधायनः—

नाराशंसान्व्याख्यास्यामः—आत्रेयवाध्र्यश्ववाधूलवासिष्ठकण्वशुनकयस्कराजन्यवैश्या इत्येते नाराशंसाः कीर्तिताः । तनूनपादितरेषां गोत्राणां उभयेषां क्षत्रियवैश्यानां पुरोहितप्रवरो भवतीति विज्ञायत इति ॥

आहुरापस्तम्बादयः—

नाराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् । तनूनपादितरेषां गोत्राणामिति । तथा—'वसिष्ठो ब्रह्मा ज्योतिष्टोमे यो वा कश्चित्' इति । तथा—'आत्रेयाय प्रथमाय हिरण्यं ददाति द्वितीयाय तृतीयाय च' इति । तथा—'न भीतो कण्वकश्यपेभ्यो दाक्षिणां दद्यात्' इति । तथा—'शक्त्या षट्त्रिंशत्संवत्सरं भरतः पुरोडाशं कार्याध्वर्यव अगस्त्यगृहपतिकमेव' इत्येवमादीनि कल्पसूत्रवाक्यानि सन्ति । तथा स्मृतिवाक्यान्यपि, यथाऽऽहापस्तम्बः—'सगोत्राय दुहितरं न प्रयच्छेत्' इति आह गौतमः—असमानप्रवरैर्विवाह इति । तथा—'सखिसयोनिसगोत्रासु स्नुषायां गवि च गुरुतल्पसमं गमनम्' इति । आह बोधायनः—'सगोत्रां गत्वा चान्द्रायणं कुर्यात्' इति ।

---

१ क्वचित्क्वचित्. २ कण्वसंकृतियस्कशुनकराजन्य.

आह यमः

आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः ।
सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ॥

अथाह याज्ञवल्क्यः—

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
उद्वहेदिति ॥

एवमादीनां गोत्रप्रवरसंबद्धानां श्रुतिस्मृत्युदितानामुदाहरणानामानन्त्यात् प्रदर्शनार्थमेतावन्मात्रमुदाहृत्य ग्रन्थगौरवभयादुपसंहृतम् । एतावता प्रदर्शितेन सर्वकर्मानुष्ठानात्प्रत्यवायपरिहारफलावाप्तिश्चेत्यादिकं गोत्रप्रवरतत्त्वज्ञानायत्तं सिध्यतीत्याचार्याणामभिप्रायः ।

अत्राहुः—

गोत्रप्रवरविज्ञानं स्वधर्मफललिप्सुभिः ।
आपाद्यमाहुर्धर्मज्ञाः प्रत्यवायजिघांसुभिः ॥

इति पुरुषोत्तमपण्डितविराचितायां गोत्रप्रवरमञ्जर्यां गोत्रप्रवरतत्त्वज्ञानमाहात्म्यप्रतिपादनपरं सूत्रकाण्डं समाप्तम् ।

---

गोत्रप्रवरविज्ञानं[1] प्रोक्तं सर्वफलप्रदम् ।
किं तन्मातुः पितुर्वेति द्वयोरित्यत्र संशयः ॥
संशयेऽस्मिन्मनुः प्राह सर्वज्ञश्श्रुतितुल्यवाक् ।
तद्धि भेषजमित्याहुश्श्रुतयोऽपि मनोर्वचः ॥

आह मनुः—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा द्विजानां प्रशस्ता स्त्री दारकर्मणि मैथुने ॥

अत्र हि मातृपक्षे सपिण्डमात्रैः विवाहप्रतिषेधात् मातृगोत्रे विवाहाभ्यनुज्ञाऽवगम्यते । यदि च मातृगोत्रे विवाहाभ्यनुज्ञा न स्यात्पितृगोत्रवत् 'असगोत्रा च या मातुरसगोत्रा च या पितुः' इत्यवक्ष्यत् । न चैवं वदति । तस्मादस्ति मातृगोत्रे विवाह इत्येकः पक्षः ॥

---

1 यद्गोत्रप्रवरज्ञानम्.

पक्षान्तरमाहुः परे स्मृतिकाराः—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

इदं स्मृत्यन्तरवचनं स्मृतिभाष्यकारैरुदाहृतं व्याख्यातं च । पुत्रिकापुत्रविषयमिदं वचनमित्येके व्याचक्षते । तस्य द्विगोत्रत्वादुभयत्रापि विवाहासंभवादिति । तदपेशलं व्याख्यानम् । यतस्तस्य पुत्रिकापुत्रस्योभयमपि पितृगोत्रमेवेति वचनानर्थक्यं स्यात् । 'असगोत्रा च या पितुः' इत्यनेनैव अविवाहसिद्धेः । ननु च मातृगोत्रविवाहप्रतिषेधेनैव मातुलसुताविवाहप्रतिषेधसिद्धेर्वचनानर्थक्यमत्रापि स्यात् । उच्यते—मातुलग्रहणं मातृगोत्रदोषादपि दोषगौरवख्यापनार्थं सन्निकृष्टतरत्वादित्यदोषः । अपि च—'अगस्त्याष्टमसप्तऋषीणामपत्यं गोत्रम्' इत्युत्तरत्र वक्ष्यते । तच्चापत्यं मातापित्रोर्द्वयोरप्यविशिष्टं, जन्यजनकसंबन्धस्योभयोरविशेषात् । अतो मातृगोत्रमपि स्वगोत्रमेवेत्युभयत्राप्यविवाह एव युक्तः । ननु चोभयगोत्रत्वे सति पुत्रस्य द्व्यामुष्यायणानामिवोभयत्र प्रवराः प्रसज्यन्ते, विवाहप्रतिषेधवत् । अत्र ब्रूमः—अत्र हि सर्वे प्रवराचार्यास्सर्वगोत्राणां मध्ये शुङ्गशैशिरिप्रभृतीन्येव कानिचिद्गोत्राणि द्व्यामुष्यायणान्युदाहृत्य तेषामेव द्वयोर्गोत्रयोः प्रवरानाहुः । नान्येषाम् । पितृगोत्रप्रवरानेवान्येषामाहुः । अतस्सत्यपि मातृगोत्राभिप्रायेण द्विगोत्रत्वे प्रवराः पितृगोत्रविषया एवेत्यवगच्छामः । यद्यपि मनुस्मृतेस्स्मृत्यन्तरस्य च तुल्यबलत्वात्सान्दिग्धो मातृगोत्राविवाहः तथाऽपि न कर्तव्यः, दोषप्रायश्चित्तयोर्गुरुत्वात् । पाक्षिकोऽपि दोषः परिहर्तव्य इति न्यायविदः ॥

तदाहुः—

सन्दिग्धेऽपि परे लोके त्याज्यमेवाशुभं नरैः । इति ।

ननु शिष्टाः केचिदाचरन्ति । सत्यमाचरन्ति मातुलसुताविवाहमप्याचरन्ति, केचिच्छिष्टास्स्मृतिद्वयं पठन्तो व्याचक्षाणाश्च । किंच—सर्वज्ञस्य मनोर्वाक्यं मातृगोत्रविवाहसूचकं पठतामस्माकं स्मृत्यन्तरं च मातृगोत्रविवाहप्रतिषेधकं दृष्ट्वाऽपि संशयवतामाचारमात्राद्व्यामोहमूलतया सम्भाव्यमानात्कथमिव संशयापनोदः । तस्मात् पितृगोत्रवन्मातृगोत्रेऽप्यविवाह एवेति ॥

व्याख्यातमिदमपि काण्डम्.

अत्र श्लोकौ भवतः—

पित्रोर्द्वयोरसमानत्वादपत्यानां द्वयोरपि ।
गोत्रयोर्न विवाहोऽस्ति प्रतिषेधस्मृतेरपि ॥
दूषितो बहुभिश्शिष्टैरिष्टोऽन्यैः कैश्चिदेव सः ।
संभाव्यमानदोषत्वाद्वर्जनीयो द्वयोरपि ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
मातृगोत्रविवाहप्रतिषेधकाण्डं समाप्तम्.

एकैकवर्णप्रवरोपदेशात्परं त्रिवर्णप्रवरं प्रवक्ष्ये ।
विवाहमेषां प्रवरे समानेऽप्यवर्जनीयत्वकृतं च वक्ष्ये ॥

अत्राह बोधायनः—

**मनुवदिति सर्वेषां गोत्राणाम् । 'मानव्यो हि प्रजा इति च विज्ञायते' इति ।**

आहुरापस्तम्बादयः—

**अथ ताण्डिन एकार्षेयं सार्ववर्णिकं समामनन्ति । मानवेति होता मनुवदित्यध्वर्युः । मानव्यो हि प्रजा इति हि ब्राह्मणमिति ॥ हि ब्राह्मणमिति ॥**

हि यस्मादेवं तैत्तिरीयाणां ब्राह्मणं प्रत्यक्षमेव पठ्यते "मानव्यो हि प्रजाः" इति । जातः सामर्थ्यमर्थित्वं शास्त्रापर्युदासश्चयेषां ते त्रैवर्णिकाः प्रजाशब्देनोच्यन्ते । द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्थं मङ्गलार्थं वा ॥

आहतुः कात्यायनलौगाक्षी—

**अपि हैके मानवेति मनुवदित्येकैकमार्षेयं सार्ववर्णिकं प्रवृणीते । कस्य हेतोरिति । मानव्यो हि प्रजा इति । तदेतन्नोपपद्यते । न देवैर्न मनुष्यैरार्षेयं प्रवृणीते । तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानामुक्तं भवतीति ॥**

व्याख्यातमेतदेव सूत्रमादौ परिभाषाकाण्डे ॥ तथा—दर्शपूर्णमासप्रकरणे चापस्तम्बः—प्रतिवर्णं प्रवरविशेषान् प्रवरदोषं चोक्त्वा पश्चादिदमाह—'अपि वा नार्षेयं वृणीते मनुवदित्येवं ब्रूयात्' इति ॥ अत्र हि मानवे प्रवरकाण्डे सूत्रकाराणामभिप्रायाः पूर्वापरविरोधात्परस्परविरोधाच्चात्यन्तदुरवबोधा इवावभान्ति। कथमिति चेत्—बोधायनेन तावदिमं सार्ववर्णिकं प्रवरमुक्त्वा न प्रतिषिद्धो वैशिकः प्रवरः। कात्यायनादिभिस्सार्ववर्णिकं प्रवरं दूषयित्वा वैश्यविषयत्वेनोक्तस्सः। आपस्तम्बाद्यैस्तु दर्शपूर्णमासयोरिह वैशेषिकप्रवरानुक्त्वांऽते सार्ववर्णिकं प्रवरमुक्त्वा न प्रतिषिद्ध इति। पूर्वापरविरोधाच्च भवति बहुविदां व्यामोहः। अतो दुरवबोधो गोत्रसूत्रकाराणामभिप्राय इति। अपि च सार्ववर्णिके प्रवरेऽभ्युपगम्यमाने सति सर्वेषां वर्णानां समानप्रवरत्वाद्विवाहासंभवाद्वर्णसङ्करप्रसङ्गान्मूलोच्छेदः प्रसज्यते ॥ अत्र सूत्रकाराणामभिप्रायविदः परिहरन्ति—यदेतदापस्तम्बाद्युक्तं प्रातिवर्णं प्रवरप्रातिषेधपरं न भवति। किं परं तर्हि ? वक्ष्यमाणसार्ववर्णिकप्रवरस्तुतिपरम्। कथम् ? प्रतिवर्णमुक्ताः प्रवरा दुर्ज्ञेयाः बहुप्रयासलभ्याश्च, तस्मान्न कार्याः अयं तु वक्ष्यमाणो लघुतरप्रयत्नलभ्यत्वात्कर्तव्य इति स्तुतिः। कथं पुनरयमभिप्रायोऽवगम्यत इति चेत्—अन्यथा प्रवराध्यायानारम्भप्रसङ्गात्। आरब्धश्च। यत्तु कात्यायनोक्तं एकार्षेयप्रवरप्रतिषेधनं तत्प्रतिषेधनपरं न भवति। किं तर्हि ? वर्णद्वयव्युदासेन सार्ववर्णिकप्रवरस्य वैश्यविषयत्वोपदेशपरम्, 'तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानामुक्तं भवति' इति वाक्यशेषात्। यत्पुनरेतदुक्तं सार्ववर्णिकप्रवरपक्षे समानगोत्रत्वाद्विवाहाद्यनुपपत्तिरिति। तत्रापि ब्रूमः—योऽयं समानप्रवरैस्सह प्रतिषेधः सोऽसौ वैश्यप्रवरविषयत्वेन व्याख्येयः। सार्ववर्णिकप्रवरपक्षे तस्यावर्जनीयत्वादेकदेशक्षामवत्। वैश्यविषय एवायमेकार्षेयो मानवः प्रवरश्चोक्तः। अत्र श्लोकः—

त्रैवर्णिकानां प्रवरे समानेऽप्यस्मिन्नमीषां भविता विवाहः।
एकैकवर्णप्रवरस्य सत्त्वात्तत्राविवाहः प्रतिषेधवाचा ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां सार्ववर्णिकप्रवरकाण्डं समाप्तम्.

---

वैशेषिकप्रवरगोत्रविदां च मुक्तिं तेभ्यो बहिस्स्थितवतामधमां गतिं च ।
गोत्रस्वरूपमपि गोत्रवतां च संख्यां गोत्रस्वरूपविदुषामतिशायनं च ॥
ईशप्रणामगुरुभक्तिगुरुप्रणामन्यायं च गोत्रगणपाठफलं च मुक्तिम् ।
श्रैष्ठ्यं च सर्वगृहिणामितराश्रमिभ्यः फालं विशिष्टमपि शिष्यहितार्थमुक्त्वा ॥
बोधायनादिमुनयश्श्रुतितुल्यवाचस्सर्वे निजप्रवरशास्त्रसमाप्तिमाहुः ॥

अत्राह बोधायनः—

सगोत्रां गत्वा चान्द्रायणं कुर्याद्व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेत् मातृवद्भगिनीवत् । गर्भो न दुष्यति कश्यप इति विज्ञायते । अथ सन्निपाते विवाहं तदध्यायैर्वर्जयेत् । बोधायनस्य तत्प्रमाणं हि कर्तव्यम् मानव्यो हि प्रजा इति विज्ञायते—

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥

सप्तानां सप्तऋषीणां अगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते । न भवत्ययाजनीयो यः परप्रवरान् स्वांश्च जानाति मन्त्रब्राह्मणं वेद इत्याचक्षते । तस्मात्प्रवरज्ञाने यत्नो महान् द्विजैः कार्यः । श्राद्धविवाहवृद्धयो देवास्स्तोत्र[2]गोत्रमूलानि च महाप्रवरे सन्तिष्ठन्ते । नित्यं पर्वणि स्वाध्याये ब्रह्मलोके महीयत इति ॥

इति बोधायनोक्तो महाप्रवराध्यायः ।

समानगोत्रमित्यत्र समानप्रवरां चेति द्रष्टव्यम्, उभयोः प्रतिषेधाविशेषात् । चान्द्रायणमित्यत्रापि प्रतिगमनं चान्द्रायणमिति द्रष्टव्यम्, पुष्कलनिमित्तसद्भावात् । ब्राह्मणीं न त्यजेदित्यनेन दोषदुष्टतया प्राप्तत्यागप्रतिषेधः । मातृवद्भगिनीवदित्य-

१ मतियोग्यतां च. २ विवाहादत्विजो देवात् स्तोत्रम्.

त्रापि सहशयनमैथुनादिभावे च मातृभगिनीगमनतुल्यदोषप्रायश्चित्तादिभाक्त्वं विवक्षितम् । गर्भो न दुष्यतीत्यत्र अबुद्धिपूर्वकृतगर्भो विवक्षितः । बुद्धिपूर्वगमनजनितस्य गर्भस्य चाण्डालत्वस्मृतेः—

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ॥ इति ॥

कश्यप इति विज्ञायते इति ॥ अस्यायमर्थः—स गर्भस्सगोत्रायामुत्पन्नोऽपि तदन्यगोत्रेऽपि गोत्रतः कश्यपो भवतीति विज्ञायते श्रूयते शाखान्तरे । ततश्श्रुतिप्रामाण्यादन्यगोत्रस्यापत्यमन्यगोत्रं भवतीत्यवगन्तव्यमित्यभिप्रायः । सन्निपाते विवाहं तदध्यायैर्वर्जयेत् बोधायनस्य तत्प्रमाणं हि कर्तव्यं मानव्यो हि प्रजा इति विज्ञायते इत्यनेन सूत्रेण समानगोत्राणामिव समानप्रवराणामपि अविवाहानामुक्तत्वादवक्तव्यत्वाद्वक्तव्यस्यायमर्थः—वत्सादीनां यज्ञवाहान्तानां एकोनपञ्चाशदध्यायसूत्रेषु प्रत्यध्यायं च उक्तेषु गोत्रगणेषु प्रवरेषु सत्सु यावतां गोत्रगणानामेकस्मिन्नध्याये सन्निपातस्सहपाठः तावतां गोत्राणामन्यतमगोत्रविशेषः पुरुषः तदध्यायैर्विवाहं तदध्यायपठितैस्सह विवाहं वर्जयेत् समानप्रवरत्वादित्यर्थः । बोधायनस्य मतमिति चेदं पूर्वोक्तमतमिहापि स्मारयति । यदुक्तं पूर्वं— भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेयाः बहवस्स्युरिति मतं बोधायनस्य इति तदिहापि स्मारयति । सप्तर्ष्यपत्यबाह्यानां केवलभृग्वङ्गिरसामेव समानप्रवरतया विवाहप्रतिषेधः, न सप्तर्ष्यपत्यानाम्, तेषां समानगोत्रत्वादेवाविवाहसिद्धेः प्रतिषेधानर्थक्यप्रसङ्गादिति । बोधायनग्रहणमुक्तप्रयोजनम् । यत्तु बोधायनमतं तन्मानुषीभिस्सर्वाभिः प्रजाभिः प्रमाणमेव कर्तव्यम् । कुत इति चेत्—मनुतुल्यत्वाद्बोधायनस्य । मनुमतं च मानवीभिः प्रजाभिरनुष्ठेयम् । कुत इत्यत्र हेतुमाह—मानव्यो हि प्रजा इति च विज्ञायत इति एवं विज्ञायते श्रूयते तैत्तिरीयश्रुतौ अग्निप्रकरणे "शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनं शमयति मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजा मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीनित्याहैभ्य एवैनं लोकेभ्यश्शमयति"* इति । गोत्राणां तु सहस्राणीत्यनेन गोत्रसङ्ख्यामाह तेषामतिदुर्ज्ञेयतां तारकाणां भूपांसूनामिव दर्शयितुम् । कीदृशी पुनरियं सङ्ख्या ? उच्यते—सहस्राणीत्यत्र बहुवचनात् त्र्युत्तराणि सहस्राणि प्रतीमः ।

* तै. सं. ५-१-५.

तत्र सहस्रं दशगुणितं अयुतं, अयुतं दशगुणितं नियुतं, नियुतं दशगुणितं प्रयुतं, प्रयुतं दशगुणितमर्बुदमित्युच्यते । तत्र सहस्रप्रयुतार्बुदेषु त्रिष्वपि त्रिगुणितेषु[1] कृतेषु गोत्राणां तिस्रः कोटिसङ्ख्यास्संपद्यन्ते, यदि तु बहुवचनानि त्रीणि त्रिसङ्ख्यायामेव पर्यवसितानि । यदा पुनरधिकान्यपि गोत्राणि विषयीकुर्वन्ति तदा कियन्त्यः कोटिसङ्ख्या गोत्राणामिति न विद्मः । तत्र कथमेतावतां गोत्राणां परस्परं विवेकश्शक्योऽवगन्तुमित्यभिप्रायः ॥

अत्राह—

श्लोकोक्तसर्वगोत्राणां कोटिसङ्ख्यात्रयं श्रुतम् ।
पठितानां त्वसंपूर्णं सहस्रत्रयमञ्जसा ॥
ऊनपञ्चाशदेवेति प्रवराश्चावधारिताः ।
अधिकाश्चापि पठ्यन्ते केचित्कात्यायनादिभिः ॥
व्यामोहयन्ति नस्सर्वे गुरवश्शरणं गतान् ।
आचार्यवचनं सिद्धं प्रमाणं वेदवाक्यवत् ॥
तस्मात्तदर्थसिद्ध्यर्थं गोत्रसङ्ख्या निरूप्यताम् ॥

अत्र ब्रूमः—इह सर्वे प्रवराचार्याः सर्वेषु गोत्रगणेषु गोत्रगणाननुक्रम्येतिशब्दमन्ते प्रयुञ्जते 'इत्येते वत्साः' 'इत्येते आर्ष्टिषेणाः' 'इत्येतेषामविवाहः' इति च । तत्रेतिशब्दस्य इत्थंशब्दपर्यायत्वादाधिकशब्दाञ्चायमर्थो गम्यते—एवमादयो वत्साः, एवमादयः आर्ष्टिषेणाः; एवमादीनामविवाह इति, अन्यथेतिशब्दानर्थक्यात् । भरद्वाजगणे कतिचिद्गोत्रभेदाननुक्रम्य 'ये चान्ये स्तम्बस्तम्भशब्दाः' इति ब्रुवन् बोधायनोऽनुक्तानपि गोत्रभेदान् दर्शयन्नात्मीयश्लोकोक्तां गोत्रसङ्ख्यां पूरयति । तथाऽऽपस्तम्बोऽपि तस्मिन्नेव भरद्वाजगणे कानिचिद्गोत्राण्यनुक्रम्य प्रवरं च तेषामुक्त्वा 'सर्वेषां स्तम्बशब्दानां एष प्रवरः' इति ब्रुवन् तामेव संख्यां पूरयति । तथा कात्यायनोऽपि कतिचिद्गोत्राण्यनुक्रम्य 'ये चान्ये तच्छब्दाः' इति ब्रुवन् अकथितान्यपि गोत्राण्यपि दर्शयति । तस्मात्पूर्वेष्वेव गोत्रगणेषु श्लोकोक्तगोत्राण्यपि कोटित्रयसंख्यानेनान्तर्भूतानि पश्यन् तेषां दुर्ज्ञेयताविवक्षया 'गोत्राणां तु सहस्राणि' इति गोत्रसंख्यामुपदिष्टवानाचार्यः । ऊनपञ्चाशदेवेति स्वपाठाभिप्रायेण

१ त्रिगुणीकृतेषु.

व्याख्येयम् । ऋषिदर्शनादित्युभयत्रापि हेतुः । पूर्वत्रानुक्तानां एतावत्संख्याकानां ऋषीणां मन्त्रार्थवादेतिहासपुराणादिषु दर्शनादिति पूर्वत्र । एतावन्त एव प्रवरा इति पूर्वाचार्यदर्शनादित्युत्तरत्र । तस्मात्साधूक्तम्—गोत्राणां तु सहस्राणीति ॥

अत्र श्लोकाः—

पुपूरयिषवस्स्वोक्तं गोत्रकोटित्रयं बुधाः ।
तत्रतत्र प्रतिगणमितिशब्दं प्रयुञ्जते ॥
एवमादीनि गोत्राणीत्येवमर्थमिह स्थितम् ।
ग्राहयन्नितिशब्दोऽयमर्थवानेव नान्यथा ॥
इति ज्ञात्वाऽधिकशतमितिशब्दं प्रयुञ्जते ।
ऊनपञ्चाशदेवेति स्वोक्तप्रवरसंख्यया ॥
तस्मात्साधूक्तमेवैतत्सूत्रकारैरिति स्थितम् ।
'विश्वामित्रो जमदग्निः' इत्यादिना गोत्रलक्षणमाह ।

न ह्यविज्ञाते गोत्रस्वरूपे समानगोत्रतासिद्धिः । यदपत्यमित्यत्रापत्यग्रहणमपत्यसामान्याभिप्रायम् । एतदुक्तं भवति—अगस्त्याष्टमसप्तर्षीणां मध्ये यस्ययस्य सप्तर्षेरपत्यापत्यसन्ततिपरम्पराशाखोपशाखाप्रभवं यद्यदपत्यमृषित्वं प्राप्तं तत्तस्य गोत्रमित्युच्यत इति । यथा—विश्वामित्रगोत्राणि देवरातादीनि कतान्तान्यपत्यानि । जमदग्निगोत्राणि मार्कण्डेयादीनामपत्यानि । भरद्वाजस्य क्षम्यायणादीन्यपत्यानि द्रष्टव्यानि । अपरे तु विपरीतं गोत्रलक्षणमाहुः—अगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यत इति । यथा—देवरातादीनां गोत्रं विश्वामित्रः । मार्कण्डेयादीनां जमदग्न्यादीनि गोत्राणीति एतदुक्तं भवति—अगस्त्यष्टमसप्तर्षीणामष्टौ ऋषयोऽष्टौ गोत्राणि सर्वेषामन्येषामिति । महाजनव्यवहारश्चैतदेव गोत्रलक्षणं सूचयति, विश्वामित्रगोत्रा वयं अत्रिगोत्रा वयं भरद्वाजगोत्रा वयमित्येवमादि । पूर्वव्याख्याने च विश्वामित्रगोत्राणि वयं वसिष्ठगोत्राणि वयं इत्येव व्यवहारस्स्यात् । श्रुतिलिङ्गमप्येवमेव दृश्यते—गौतमस्सत्यकामं पृच्छति 'किंगोत्रोऽसि सौम्य' इति । उत्तरमपि 'नाहमेतद्वेद तात यद्गोत्रोऽहमस्मि' इति । पूर्वव्याख्याने तु कस्य गोत्रं त्वमसीति प्रश्नस्स्यात् । उत्तरमपि—नाहमेतद्वेद तात यस्य गोत्रमहमस्मीति स्यात् । तस्मादिदमेव गोत्रलक्षणं शोभनम् । तथाऽभियुक्तव्यवहारोऽपि दृश्यते—'गोत्रं च तेजसां

भानुस्सिन्धुवत्सकलानां लवणानाम्[1] ' इति अत्र ब्रूमः—बोधायनमतानभिज्ञस्यैदं चोद्यम् । कथम् ? ' गोत्राणां तु सहस्राणि ' इत्यधस्तने श्लोके गोत्राणि कोटित्रयसंख्यायुक्तान्युक्त्वा कानितानि गोत्राणीत्यपेक्षायां विश्वामित्रो जमदग्निरित्यादिना विश्वामित्रादीन्यगस्त्यान्तान्यष्टौ गोत्राणीत्युक्ते पूर्वापरविरोधादसंगतं स्यात् । अस्मदीये पुनः पक्षे नास्ति कश्चिद्दोषः । लोकव्यवहारश्श्रुतिलिङ्गं चोभयमपि गोत्रशब्दस्योभयलिङ्गत्वादविरुद्धं पुत्रशब्दवत् । यथा च वसिष्ठस्य पुत्रः कुण्डिनः, तथा वसिष्ठस्य गोत्रः कुण्डिन इति । यदेतत्पाणिनीयं गोत्रलक्षणं " अपत्यं पौत्रप्रभृति गोत्रम् " इति तदप्यगस्त्याष्टमसप्तर्ष्यपत्याविषयमेवेति द्रष्टव्यम् । तस्य सामान्यत्वाद्बोधायनीयगोत्रलक्षणस्य विशेषत्वात्सामान्यविशेषयोश्च गोबलीवर्दन्यायेन एकगोत्रोपसंहारो न्याय्यः । इतरथा चाण्डालाद्यपत्यमपि गोत्रं प्रसज्येत इत्यतिव्याप्तिदोषस्स्यात् । उपसंहारे च न दोषः । तस्माद्बोधायनीयमेव गोत्रलक्षणं ' अगस्त्याष्टमानां यदपत्यं तद्गोत्रं ' इति ॥ अत्रापीदं चिन्त्यं—किमिदं गोत्रलक्षणं अगस्त्याष्टमसप्तर्ष्यपत्यमात्रविषयम् ? उत स्विदृषिविषयमेव ग्राह्यं अगस्त्याष्टमसप्तर्षीणां यदपत्यमृषित्वं प्राप्तं तद्गोत्रमिति । तत्रापत्यमात्रविषयत्वे सति तदपत्यसन्ततिजातानामृषीणामनृषीणां च भूतभविष्यद्वर्तमानानां च संख्यातीतत्वात् ' गोत्राणां तु सहस्राणि ' इति श्लोकोक्तगोत्रसंख्या बाध्येत, महाजनव्यवहारश्च । न हि देवदत्तस्यापत्यं देवदत्तस्य गोत्रं यज्ञदत्तस्यापत्यं यज्ञदत्तस्य गोत्रं इत्यादि व्यवहरन्ति । नापि यज्ञदत्तस्य पुत्रीं यज्ञदत्तस्य पुत्रं भिन्नगोत्रं मत्वा विवाहयन्ति । सप्तर्ष्यपत्यमात्रे गोत्रे सति तथा व्यवहरेयुः, तथा विवाहयेयुः । तस्मादगस्त्याष्टमसप्तर्ष्यपत्यव्रातमहासमुद्रान्तर्गतानामृषीणामेव मन्त्रदृशां अमन्त्रदृशां[2] च गोत्रत्वमत्र लक्षयितव्यमिति द्रष्टव्यं, अव्याप्त्यतिव्याप्त्योरभावात्, लोकव्यवहारानुगुण्याच्च । तथाहि लोकव्यवहारः—मार्कण्डेयगोत्रा वयं याज्ञवल्क्यगोत्रा वयं शालंकायनगोत्रा वयं आपस्तम्बगोत्रा वयं आश्वलायनगोत्रा वयमित्यादि । याज्ञवल्क्यो येषां गोत्रं मूलकारणं ते याज्ञवल्क्यगोत्रा इति बहुव्रीहित्वात्पुँल्लिङ्गेन निर्देशाश्च । ' सर्वे समानगोत्रास्स्युरिति गार्गिगारिरपि नानागोत्रास्स्युरिति शौनकः ' इत्याद्या अनुपपन्नाँ[3] एव भवेयुरिति साधूक्तमगस्त्याष्टमानां सप्तानां सप्तर्षीणां यदपत्यं तद्गोत्रमिति ॥ अत्राहुः—कस्येयमृषिसंज्ञा, किं तदृषित्वं नामेति वक्तव्यमिति । अत्र ब्रूमः—

१ सकलानां वरणां [ वार्णां ? ] २ शृं—कोशे ' अमन्त्रदृशां ' इति न दृश्यते. ३ उपपन्नाः.

गर्भादानादिभिश्चत्वारिंशता संस्कारैस्संस्कृतानां अष्टभिरात्मगुणैश्चालंकृतानां अगस्त्याष्टमापत्यानां मध्ये यस्तपसि सान्तत्येन क्रियमाणे जगत्प्रसिद्धः स ऋषिरित्युच्यते । तथा हि वाजिनां अग्निरहस्ये श्रुतिः—'असद्वा इदमग्र आसीत् तदाहुः किं तदसदासीदिति ऋषयो वाव तेऽग्रे सदासीत् तदाहुः के ते ऋषय इति प्राणा वा ऋषयः ते यदास्मा सर्वस्मादिदमिच्छन्तः श्रमेण तपसा चर्षत तस्मादृषयः' इति । अत्र ऋषयः जगत्प्रसिद्धिं गतवन्त इत्यर्थः । इत्थंलक्षणकानामृषीणां मध्ये ये महत्त्वेन जगति प्रसिद्धास्ते महर्षय इत्युच्यन्ते, 'महर्षीणां भृगुरहम्' इति दर्शनात् । इत्थंलक्षणकानां ऋषीणां मध्ये येषामनेकजन्मान्तरेषु वेदाभ्यासतदर्थज्ञानतदर्थानुष्ठानसंस्कारीकिणीकृतचेतसां संप्रदाय मन्तरेण सुप्तोत्थितानामिव जन्मान्तराभ्यस्ता मन्त्रा ब्राह्मणानि च प्रतिभान्ति ते मन्त्रदृश इत्युच्यन्ते । तथाच तैत्तिरीयाणां स्वाध्यायब्राह्मणे ब्रह्मयज्ञविधेरर्थवादश्रुतिः—' अजान् हवै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवन् तदृषीणामृषित्वम्' इति । ब्रह्मस्वयम्भ्वभ्यानर्षदित्यस्यायमर्थः—वेदो नित्योऽप्याविर्बभूवेति । तेषामेवैकद्वित्रिपञ्चसंख्याकानां प्रवरणं तदपत्यानामधस्तादवोचाम । इत्थंलक्षणकानां मन्त्रदृशां मध्ये येषामतीतानागतवर्तमानसमस्तवस्तुविज्ञप्तिरस्ति ते मुनय इत्युच्यन्ते, 'बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिर्भवेत्' इति श्रुतेः, ' मननान्मुनिः ' इति निर्वचनात् ' वाल्मीकिर्मुनिपुङ्गवः ' ' मुनीनामप्यहं व्यासः ' इति दर्शनादित्यलमतिप्रसङ्गेन । तस्मादगस्त्याष्टमानां सप्तऋषीणां पुत्रपौत्रप्रभृति यदपत्यं ऋषित्वं प्राप्तं मन्त्रदृगमन्त्रदृग्वा तत्तस्य गोत्रं मतम्. यथा जमदग्नेर्मार्कण्डेयादि । यथा विश्वामित्रस्य देवरातादि । एवमष्टानां ऋषीणां यथायथं पुत्रपौत्राद्यपत्यं ऋषित्वं प्राप्तं तत्तस्य गोत्रमिति द्रष्टव्यम । गोत्रऋषीणां यदपत्यं पुत्रपौत्रादिकं ऋषित्वं प्राप्तं तस्यापि तदेव गोत्रम् । एतदुक्तं भवति—अगस्त्याष्टमसप्तर्ष्यपत्यानां ऋषीणां गोत्रत्वमुभयथाऽभिमतम्, गोत्रशब्दस्य संबन्धिवचनत्वात् पुत्रशब्दवत्, पित्रादीनामृषीणां पुत्रादीनामृषीणां तदेव गोत्रमिति । एवं च सति मार्कण्डेयगोत्रा वयं विश्वामित्रगोत्रा वयं इत्यादिलोकव्यवहारः ' सर्वे समानगोत्रा ' इति गाणगारिरपि नानागोत्रास्स्युरिति शौनकः ' इत्याद्याः सूत्रकारव्यवहाराः ' किंगोत्रो नु सौम्य ' इत्यादीनि श्रुतिलिङ्गानि चोपपन्नानि भवन्ति पुत्रादीन्प्रति गोत्रत्वे । तथा पित्रान्प्रति गोत्रत्वे " अपत्यं पौत्रप्रभृति

१ ते यत्पूर्वस्मा गगहमिच्छन्तः. २ तै. आ. २-९. ३ वस्तुविषयविज्ञानप्रकर्षोऽस्ति.

गोत्रम् " इति पाणिनीयसूत्रमगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति च बोधायनीयं सूत्रमुपपन्नार्थं भवतीति । स्थितमेतदगस्त्याष्टमानां सप्तर्षीणामपत्यमृषिसंज्ञं पित्रादीनां पुत्रादीनां च गोत्रमिति ।

भवन्ति चात्र श्लोकाः—

अपत्यं पौत्रप्रभृति गोत्रमित्याह पाणिनिः ।
सप्तर्ष्यगस्त्यापत्यं तु गोत्रं बोधायनोऽब्रवीत् ॥
पाणिनीयं तु सामान्यं विशेषे पर्यवस्यात ।
बोधायनीये तदपि सामान्यमृषिसंज्ञिकम् ॥
सप्तर्ष्यगस्त्यापत्यं यदृषिसंज्ञं तदुच्यते ।
गोत्रमित्येष पिण्डार्थो गोत्रलक्षणयोर्द्वयोः ॥
ऋषीणां प्रवरानुक्त्वा पूर्वं बोधायनः पुनः ।
गोत्राणां त्वित्यतश्श्लोकाद्गोत्राणां वरणं ब्रुवन् ॥
ऋषीणामेव गोत्रत्वं पूर्वोक्तस्यार्थमब्रवीत् ।
आर्षेयवरणं चोक्त्वा गोत्राणां वरणं ब्रुवन् ॥
ऋषीणामेव गोत्रत्वं पूर्वोक्तमवदत्स्फुटम् ।
सप्तर्ष्यगस्त्यापत्यानां गोत्रत्वं द्विविधं मतम् ॥
पित्रादीनां च तद्गोत्रं पुत्रादीनां च तन्मतम् ।
उभयान्प्रति गोत्रत्वं गोत्रिणामिति गृह्यताम् ॥
अगस्त्याष्टमसप्तानां बहुशो गोत्रकारताम् ।
वदन्मत्स्यो हरिस्तेषां सगोत्रत्वं ब्रवीति नः ॥

न भवत्यायाजनीय इत्यनेन गोत्रप्रवरविज्ञानं सर्वपापनाशकं दर्शयति । कथम् ? अयाज्यमानं नाम महापातकादपि गुरुतरपापं गौतमवाक्यादवगम्यते । यथा प्रायश्चित्तनिमित्तानि वदन् 'अथैतदयाज्ययाजनमनृतवचनं शिष्टस्याक्रिया प्रतिषिद्धसेवनम्' इत्यत्र विहिताकरणप्रतिषिद्धसेवनयोरन्तर्भूतमप्ययाज्ययाजनं पृथगेव प्रथममेव वदति दोषगौरवं पश्यन् । तदपि पापं गोत्रप्रवरविदां नास्तीत्यर्थः । मन्त्रब्राह्मणमित्यादिना प्रवराणां मन्त्रब्राह्मणयोरन्तर्भावात् प्रवरशास्त्रेषु तात्पर्य

१ पूर्वोक्तार्थ. २ त्रिविधं.

कर्तव्यमित्याह । श्राद्धविवाहादीनि गोत्रान्तानि महाप्रवरे सन्तिष्ठन्ते इति वदन्महाप्रवराध्यायं स्तौति । तथा हि—

महतोत्साहनीयत्वा*न्महद्भिश्च परिग्रहात् ।
महाफलप्रदत्वाच्च महाप्रवर उच्यते ॥

नित्यं पर्वर्णात्यनेन स्वाध्यायाविरुद्धेषु पर्वसु प्रवराध्यायान्पठतो ब्रह्मलोकावाप्तिलक्षणफलं दर्शयति । ननु ब्रह्मज्ञानादृते ब्रह्मलोकप्रापकं नास्ति 'नान्यः पन्था विद्यते' इति श्रुतेः । मेवं वोचः । पञ्चाग्निविज्ञानस्य दर्शनात् । केवलकर्मणां च दर्शनात् । यथाऽह गौतमः—'यस्यैतच्चत्वारिंशत्संस्कारा अष्टौ चात्मगुणाः स ब्रह्मणस्सायुज्यं गच्छति' इति । अथवा नित्यकर्मणामङ्गत्वात्प्रवराणां नित्यकर्मणां च मुक्तिहेतुत्वात्तद्द्वारेण मुक्तिसाधनमित्यदोषः । अथवा वसिष्ठप्रभृतीनां ब्रह्मविदां ब्रह्मकल्पानां संकीर्तनजनितात्पुण्योपचयादेव ब्रह्मज्ञानफलत्वेन ब्रह्मलोकप्राप्तिरिति सर्वमनवद्यम ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां महाप्रवराध्यायसमाप्तिसूत्रकाण्डव्याख्यानम्.

अथ लौगाक्षिकात्यायनोक्तप्रवराध्यायसमाप्तिसूत्रकाण्डमुदाहरिष्यामः—आहतुः कात्यायनलौगाक्षी—

व्याख्याताः प्रवराः उत्पत्तीः प्रतिपत्तीश्च व्याख्यास्यामोऽथो त्रिविधा ब्राह्मणानां समुत्पत्तयो भवन्ति । उत्पत्तिकुलीनाः संहतकुलीनाः द्व्यामुष्यायणकुलीनाश्च । येषां पुरुषतः प्रजोत्पत्तिरविच्छिन्ना भवति ते उत्पत्तिकुलीनाः ये सप्त भूयः [ पुरुषं ] पञ्चपुरुषं वा योनिश्रुतशीलवृत्तसंपन्नाश्श्रुतवन्तः पितृमातृसन्तत्या ऋषय आर्षेयास्ते संहतकुलीनाः आर्त्वीजीना भवन्ति । अथ दत्तकक्रीतककृत्रिमपुत्रिकापुत्राः परपरिग्रहेणानार्षेया जाता ते द्व्यामुष्यायणा भवन्ति । यथैतच्छौङ्गशैशिरीणां भरद्वाजौदमेघानां लौगाक्षाणां यानि च अन्यान्येवं समुत्प-

* मत्सहनीयत्वा.

त्रीणि भवन्ति तेषां तथैव प्रवरास्स्युः । द्विप्रवरसन्निपाते पूर्वः प्रवर उत्पादयितुरुत्तरः परिग्रहीतुः । अपि वा त्रयोऽन्ये त्रयोऽन्ये तत्र तथा कुर्यात् न पञ्चातिप्रवृणीत इति ह्याह त्रीनेव पञ्च वा प्रवृणीयात् । अथ यदि पितृव्येण ज्ञातिनैकार्षेयेण जातास्ते संहतकुलीनाः परिग्रहीतुरेव भवन्ति । अथ यदि तेषां स्वासु भार्यास्वपत्यं स्यात् [ न स्यात् ] रिक्थं हरेयुः पिण्डं चैभ्यः त्रिपुरुषं दद्युः । यदि न स्यात् [ उभयोर्न स्यात् ] उभाभ्यामेवदद्युरित्याचार्यवचनं द्वे कुर्याद्विद्वे वा पृथगनु [गु] दिश्यैकपिण्डे द्वावनुकीर्तयेत् परिगृहीतारं चोत्पादयितारं च आतृतीयात्पुरुषात् । आर्षेयज्ञानादेतेषामेव प्रवराणामाद्यं प्रवरं प्रवृणीते प्रतिप्रश्नेन वा यं यस्योपपन्नं मन्येत तस्य कुर्यात् । तथा पुरोहितप्रवरो वा स्यादेकार्षेयप्रवरो राजन्यः । एतेनैव वैश्यस्य प्रवरो व्याख्यातः यदि सार्षं ब्रूयात् मानवैलपौरूरवसेति होता ब्रूयात् । पुरूरवोवदिलवन्मनुवदित्यध्वर्युः । यदि पित्रीयमश्नीयुः न विवहेयुः । पुरोहितप्रवरावेव राजन्यवैश्यौ स्यातामिति ह विज्ञायते । दिव्यं वर्षसहस्रं स्वर्गे मोदते वंशाध्यायी यस्यैवाश्नाति वंशाध्यायी गृहे दिव्यं वर्षसहस्रमेकैकस्य ऋषेरतिथिर्भवति । नान्यवरणे दद्यान्नापुत्राय नाशिष्याय नासंवत्सरोषिताय । सर्वेषां पङ्क्तिपावनानामुपरिष्टाद्भवति यः प्रवराध्यायमधीते यः प्रवराध्यायमधीते ॥

इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
गोत्रप्रवरसमाप्तिकाण्डं समाप्तम् ।

इति प्रवरमञ्जरी समाप्ता ।

---

१ श्रुतिमन्तः पितृमन्तः पैतृमत्यः,

श्रीगणेशाय नमः ।

# प्रवरदर्पणम् ।

श्रीरामं सपरीवारं गणेशं मारुतिं शिवाम् ।
श्रीरामकृष्णापितरं नत्वोमाख्यां च मातरम् ॥ १ ॥
श्रीमद्दिनकरभ्रातृचरणावभिनम्य च ।
नारायणात्मजश्रीमद्रामकृष्णस्य सूनुना ॥ २ ॥
कमलाकरसंज्ञेन गोत्रप्रवरनिर्णयः ।
क्रियते विदुषां प्रीत्यै ग्रन्थानालोच्य सर्वशः ॥ ३ ॥

तत्र 'सगोत्राय दुहितरं न प्रयच्छेत् । असमानप्रवरैर्विवाहः' इत्यापस्तम्बगौतमाद्यैः सगोत्रा सप्रवरा च निषिद्धा । तत्र गोत्रस्वरूपमाह—प्रवरमञ्जर्यां बोधायनः—

विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः ॥

सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रम्, इति । एषां यत्पुत्रपौत्राद्यपत्यमृषिभूतं तत्पूर्वभाविनां अनन्तरभाविनां च गोत्रमित्यर्थः । तदाह पाणिनिः—' अपत्यं पौत्रप्रभृति गोत्रम् ' इति । ऋषित्वं च मन्त्रद्रष्टृत्वम्, ' दर्शनात् ' इति यास्कोक्तेः । तेनास्मदादीनां तदपत्यत्वेऽपि न गोत्रत्वमिति । ननु भृगुगणान्तर्गतजमदग्नेरङ्गिरोगणान्तर्गतयोर्गौतमभरद्वाजयोश्च युक्तं गोत्रत्वं तेषामुक्तेष्वन्तर्भावात्, उक्तभिन्नेषु तु केवलभार्गवेष्वार्ष्टिषेणादिषु केवलाङ्गिरसेषु हरितादिषु च कथं गोत्रत्वं भृग्वङ्गिरसावधिकृत्य तेषां पाठात् । तयोश्च सप्तर्ष्याद्यनन्तर्गतेरिति चेन्न । तथाऽप्यत्रेष्टापत्तिरिति केचित् । अत एव स्मृत्यर्थसारादिभिः प्रवरैक्यादेवात्राविवाह उक्तः । सगोत्रत्वेनैव निषेधात् 'असमानार्षगोत्रजाम्' इत्यादौ समानप्रवरत्वं पुनरुक्तं स्यात् । अतो गोत्रत्वेन परिज्ञातानां मध्ये यमुपक्रम्य प्रवराम्नानं स तेषां गोत्रं यथा ' अथ ह जामदग्न्यानाम् ' इत्यादि । बोधायनोक्तिस्तु अनुवादत्वादुपलक्षणं तेन भृग्वङ्गिरोगणेषु सप्तऋषिभिन्नत्वेऽप्यधिकाराद्गोत्रत्वम् । अत एवाह विज्ञानेश्वरः ' गोत्रं वंशपरंपराप्रसिद्धम् ' इति । भट्टाचार्या अप्याहुः—

'यथा समाने कुलीने त्रिरिति स्मरणलक्षणं गोत्रम्' इति । न च भृगोरावृत्त्या वत्सार्ष्टिषेणयोरपि सगोत्रत्वापत्तिः, तत्र पर्युदासात् । तदाह बोधायनः—

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरोगणात् ॥

इति । भृग्वङ्गिरोभिन्नैकऋष्यनुवृत्तेः सगोत्रत्वम्, नान्यथेत्यर्थः । अत्र अनुवृत्तिशब्दार्थमाह स्मृत्यर्थसारे—

व्रीयमाणतया वाऽपि सत्तया वाऽनुवर्तनम् ।
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥

इति । अस्यार्थः—व्रीयमाणतया प्रवरान्तर्भावेन यथा आद्यानां भृगूणां द्वित्रिप्रवरसाम्ये । सत्तया अधिकारेणोत्पादकत्वेन वा यत्र गोत्रान्तरे एकस्य ऋषेरनुवर्तनं दृश्यते तद्गोत्रान्तरं तस्यानुवर्तमानस्य गोत्रमपत्यम् । तयोस्सगोत्रतेत्यर्थः यथा कपीनां भरद्वाजगोत्रान्वयेन । आङ्गिरसामहय्योरुक्षयसेति हि कपिप्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजेति भारद्वाजस्य । अत्र अङ्गिरोगणस्थत्वात् द्विप्रवरसाम्याभावेनासमानप्रवरत्वेऽपि सप्तऋष्यन्तर्भूतभरद्वाजापत्यत्वेन सन्देशाद्भरद्वाजानुवृत्त्या कपेः सगोत्रत्वादविवाहः । वस्तुतस्तु—गोत्रस्य व्रीयमाणतयाऽनुवृत्तिर्दुर्घटैव । न ह्यघमर्षणकौशिकविश्वामित्रेति गोत्रभूतविश्वामित्रो निर्दिश्यते । एवं हि द्विप्रवरत्वापत्त्या विश्वामित्राणां त्र्यार्षेय इत्यादिनिर्देशानुपपत्तेः । न चैकस्यैव गोत्रत्वं प्रवरत्वं, अभेदे षष्ठ्यापत्तेः । कथं च सप्तऋषिरूपस्य विश्वामित्रस्य गोत्रत्वं, तदपत्यत्वाभावात् । तेन ऋष्यपत्यभूता एव तुल्यनामानो गोतमादयः ऋषयः गोत्रत्वेन प्रवरत्वेन चोच्यन्ते । अत एव वार्तिककारैर्भृग्वादीनां पूर्वभृग्वादिवरणसम्भवादस्त्येवाधिकारस्तेन ऋष्युदाहरणमतन्त्रमित्युक्तम् । अत एव नामैकत्वेऽपि गणभेदे प्रवरभेदे च ऋषीणां भेदाद्भवत्येव विवाहः, लोके एकनाम्नामप्यनेकेषां पुंसां दर्शनादित्युक्तं प्रवरमञ्जर्याम् । तेन गोत्रभूतऋषेर्भेदात् व्रीयमाणत्वेन प्रवरेष्वनुवृत्तिरिति त्रिप्रवरभूतस्यैवान्यप्रवरेष्वनुवृत्तिर्ज्ञेया । सत्तयाऽनुवृत्तिश्च गोत्र एव न तु प्रवरेषु साक्षात्पठितानामेव प्रवरत्वादिति दिक् ॥

प्रवरशब्दार्थस्तु प्रवरणानि प्रवरा इति 'अग्निर्देवो होता' इति मन्त्रे हव्यवाहसंज्ञकाः ऋषिप्रकाशने विशेषणत्वेनोपात्ता ऋषय इति प्रवरमञ्जरी । गोत्रभूतस्य ऋषेः पितृपितामहप्रपितामहादयः एव प्रवराः । तेषां च पितृपुत्रपौत्रक्रमेण

वरणं होतुः । तथा च शतपथश्रुतौ प्रवरानुक्रम्योक्तं—'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति । 'परंपरं प्रथमम्' इत्यत्र वृत्तिकृताऽप्येवमुक्तम् । अत एवाङ्गिरसबार्हस्पत्यभारद्वाजेत्यादौ तथैव दृश्यते । आङ्गिरसेत्यादितद्धितस्तु यजमानस्य ऋषिसम्बन्धबोधनार्थः । पित्रादीनामपि मन्त्रकृतामेव प्रवरत्वम् । 'यथर्षि मन्त्रकृतो वृणीते' इति सूत्रकारवचनात् । कातीयभिन्नशाखीयाध्वर्यूणां तु होतृप्रातिलोम्येन वरणं, 'इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोर्वाचो होता' इत्यापस्तम्बबोधायनोक्तेः इतः यजमानादूर्ध्वान् प्रातिलोम्येनाध्वर्युर्वृणीते । अमुतो यजमानविप्रकृष्टाद्भृग्वादेरारभ्यानुलोम्येन होतेत्यर्थः । होता तद्धितान्तं संबुद्ध्यन्तं वदेत्, 'होता तद्धितवदामन्त्रवच्च' इति कातीयसूत्रात् । अध्वर्युस्त्वतत्तद्धितान्तं वत्यन्तं च, 'भृगुवदित्यध्वर्युः' इति सूत्रकाराणां सर्वत्र पाठदर्शनात् । कातीयाध्वर्योरपि पाठक्रमोऽनुलोम एव, 'परस्तादर्वाश्चि त्रीणि' इति तत्सूत्रात् । तत्र भृग्वङ्गिरोगणयोस्तु पञ्चप्रवरे त्रिप्रवरसाम्यात्, त्रिप्रवरे द्विप्रवरसाम्याच्चाविवाहः । एकप्रवरसाम्ये तु असमानगोत्रत्वाद्भवत्येव विवाहः । यथाऽऽह मञ्जर्यां बोधायनः—'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवस्स्युः । द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपाते अविवाहः पञ्चार्षेयाणाम्' इति । अस्यार्थः—केवलभृग्वङ्गिरसश्च भिन्नगणैर्विवाहं कुर्वते कुर्युः । लकारव्यत्ययः छान्दसः तेषां सप्तर्ष्यपत्यत्वाभावेन गोत्रत्वाभावात् । यद्यसमानापेक्षया प्रवरा बहवस्समाना न स्युः किं त्वल्पे समानाः सर्वे वाऽप्यसमानाः बहवो वा तदा विवाहं कुर्युरित्यर्थः ॥

अविवाहविषयमाह—यत्र त्वसमापेक्षया समा अधिकाः यथा त्र्यार्षेयेष्वेकापेक्षया द्वावधिकौ समौ पञ्चार्षेयेषु च द्वावपेक्ष्य त्रयोऽधिकासमास्तदा विवाहो नेति । माधवीये स्मृत्यन्तरेऽपि—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

इति । एकोऽपि प्रवरो विवाहं वारयेदित्यर्थः । इदं तु केवलभृग्वङ्गिरोगणविषयमेव । भृग्वङ्गिरोगणान्तर्गतजमदग्निगौतमभरद्वाजेषु तु एकप्रवरसाम्ये सर्वेषामप्यसाम्ये वा सगोत्रत्वादेव न विवाहः, सत्तया गोत्रानुवृत्तेरुक्तत्वात् । भृग्वादिषु पाठः 'भृगूणां त्वेति भृग्वङ्गिरसामादध्यात्' इत्याधानविधानार्थ एव । एतेन भृग्वङ्गिरोभिन्नेषु एकप्रवरे साम्ये सप्रवरत्वं सिद्धम् । एवं मातृगोत्राऽपि वर्ज्या ।

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥

इति शातातपोक्तेः । इत्थं केचिदेव ।

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि ।
जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कितः ॥

इति मदनपारिजाते व्यासस्मृतेः, 'मातृगोत्रं माध्यन्दिनीयानाम्' इति सत्याषाढोक्तेश्चेति कश्चित् । वस्तुतस्तु—इदं वचनं सत्याषाढसूत्रेऽदर्शनात्प्रवरमञ्जरीकारेणालेखनाच्च निर्मूलमेव । प्रत्युत मातृगोत्रनिषेधस्य पाक्षिकत्वेऽपि चण्डालत्वादिदोषस्य अतिगुरुत्वात्पाक्षिकदोषस्यापि परिहार्यत्वात्सर्वेषां मातृगोत्रवर्जनमिति प्रवरमञ्जर्यामुक्तम् । पुत्रिकापुत्रैरासुरादिविवाहजैश्च सर्वैर्मातृगोत्रा वर्ज्या, दानस्यानिष्पत्तेः । अत एव तत्र—

पितृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ।

इति श्राद्धे पितृगोत्रं दृश्यते । शिष्टास्त्विदं मातृगोत्रवर्जनं गान्धर्वादिविवाहोढमातृपरं, तत्र पितृगोत्रानिवृत्तेः । ब्राह्मादिविवाहचतुष्टये मातामहगोत्रनिवृत्तेर्भवत्येव विवाहः । अत एव मार्कण्डेयपुराणे—

गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित् ।

इति ब्राह्मादिषु भर्तृगोत्रं गान्धर्वादिषु च पितृगोत्रमुक्तम् । यदपि—

एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च ।
तमुद्वाहं न कुर्वीत सा कन्या भगिनी भवेत् ॥

इति मञ्जर्यां वचने मातृकुलप्रवरचिन्तनमुक्तं, तदपि पुत्रिकाविषयमेव, अन्यथा—

प्रवरं पितृगोत्रेषु मातृगोत्रे न चिन्तयेत् ।
गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥

इति मञ्जर्या वचनविरोधस्स्यात् । तत्रैव काठकगृह्येऽपि 'प्रवरान्पितृगोत्रेषु चिन्तयेत्' इति । येषामियं मातृगोत्रा प्राप्ता तेषामपि कलौ तन्निषेध एव ॥

गोत्रान्मातुस्सपिण्डाच्च विवाहो गोवधस्तथा ।

इति हेमाद्रिमाधवीयादित्यपुराणे कलिवर्ज्येषूक्तेः ॥

अथ गोत्राणि प्रवराश्चोच्यन्ते । तत्र यद्यपि—

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥

इति बोधायनेन प्रवरगणे संख्योक्ता । अत्र सहस्राणीत्यादौ बहुत्वश्रवणात्तिस्रः कोट्यो भवन्तीति मञ्जर्यामुक्तम् । तथाऽपि प्रवरे कात्यायनापस्तम्बादिसूत्रमात्स्याद्यालोचनेन न्यूनाधिकभावात् गोत्राणां प्रवराणां च गणसंज्ञास्वरूपसंख्याक्रमप्रवरविकल्पादिभिर्विसंवादाच्च सर्वसूत्रपुराणोपसंहारेण निर्णय उच्यते—

तत्रादौ भृगोस्सप्त गणाः बोधायनोक्ताः । वत्साः विदाः आर्ष्टिषेणाः यस्काः मित्रयुवाः वैन्याः शुनका इति । तत्राद्यौ जामदग्न्यौ वेदो वात्स्यः अपीति क्वचित् । आर्ष्टिषेणादयः पञ्च केवलभृगवः । तत्र यद्यपि कल्पसूत्रकारैस्तद्वर्गाभिप्रायेण बहुवचनान्तानि गोत्राण्युक्तानि । तथाऽन्यसन्देहार्थमेकवचनेनोच्यते ।

तत्र जामदग्न्या वत्साः—मार्कण्डेयो माण्डूकेयः माण्डव्यः कांसेयः आलेखनः दार्भायणः शार्कराक्षः देवतापनः शौनकायनः माधूकेयः पार्ष्णिकः मांकः प्रभायनः पैलः पैङ्गलायनः दाध्रेपकिः वाह्याकिः वैश्वानरिः वैहीनरिः विलोहितः बार्हः गोष्ठायनः सेपिः काशकृत्स्नः वाद्धुतकः कृतभागः ऐतिशायनः जानायनः पाणिनिः वाल्मीकिः स्थौलपिण्डिः सौपातवः जिहीतिः सावर्णिः वाकायनः वलायनः सुकृतिः मण्डुः सुविष्ठिः हस्ताग्निः शौद्धकिः सौद्राकिः वैकर्ण्यः द्रोणजिह्विः औरसिः काम्बलोदरिः कठोरकृतवैहलिः विरूपाक्षः वृवाश्वः उच्चैर्मन्युः द्वैमत्यः आर्यायणः मार्कायणः काद्रायणः वायवः दैवमत्यः आर्कायणः काङ्कायनः वायनिः करबचन्द्रमसः गाङ्गेयः नोपेयः याज्ञिकः पारिमण्डलिः जाबालिः बाहुमित्रायणः आपिशालिः विष्टपुरिः लोहितायनः उष्ट्राक्षः मालायनः शारद्वतायनः राजतवाहः वासः वत्सः वात्सायनः एते बोधायनोक्ताः । यद्यपि प्रवरमञ्जरीधृतबोधायनसूत्रे आकरे च सूत्रे भूयान्न्यूनाधिकभावः तथाऽप्युभयानुसारेण वदामः । एवमग्रेऽपि ॥

कात्यायनलौगाक्षिसूत्रादौ तु अन्येऽपि जामदग्न्यवत्सा उक्ताः । तत्र केचित्पूर्वोक्तिष्वागता एवेति तद्भिन्ना उच्यन्त—दार्भिः नालायनः वागायनः अनुसातकिः जैह्मजिजीवन्तिः रेखायनिः पार्वतिः पार्णिनलिः रुचमानः सात्मकर्णिः बालाकिः तौलकेशी आर्तभागः आजिहीतिथिः स्थौमाङ्गारिः स्थौलः सौखोवाहिः

गार्भायणः गेह्वायनः गोष्ठायनः वैशम्पायनः गालवः वाणूकेयः सांकृत्यः ऐतिकायनः भ्राष्ट्रेयः वास्त्रेयः लाक्षेयः लापुः विलालाटिः अविः गौविः सौष्मिकिः सात्यकायनः कौचिहस्तिः अनुलोमिः क्रौञ्चः क्रौञ्चाक्षिः सारध्वजिः वाचालेपः नैकऋषिः शाकल्यः पाकानुमतिः अजैकजिह्विः जैह्मायनिः आश्मकमः निगाणिः वासिसादनः स्योषः स्पन्दातिः कण्ठेरणिः गवेरणिः सौगोलिः माध्योदः इति ॥

मात्स्ये त्वन्येऽप्युक्ताः—नाडायनः वैरायणः वैतिहयः रौहित्यायनः कपाली विसावर्णिः विकस्वरः विष्णुः तौलिकेशिः जहिमोवीतिनः फेनपास्तलिनः शिखापत्रिः जलधिः सैन्यजित् कृत्स्नपैगलायनिः दिवर्पीतिः ऋषभः सुतः प्लुवः कोपयज्ञः मित्रयज्ञः आमिलायनः हायनिः कैलवर्णधिः भाल्लकायनिः ललामः शाल्यायनिः मलपक्षिः कौटलिः शौक्तिकोटरः माक्षिः चान्द्रमणिः नैकजिह्वः जिह्मशून्यः केश्लेटिः हिकश्मरिः सौरद्रतिः नैमिष्यः लोध्राक्षिः गवेरणिः पार्णसौगन्धिः कान्तिकृत् इति। प्रयोगपारिजातसंग्रहे देवरातोऽपि जामदग्न्येषु गणितः । एतच्च हरिवंशे स्फुटम् । एतच्चाग्रे वक्ष्यामः ॥

केचित्त्वन्यानप्याहुः—विलभृत् सौमदायनः स्वानुमतिः मण्डचित्रः शौक्रायणः त्वाष्ट्रेयः कोचकुण्डिः शौनायनः शाकपूर्णिः व्रीहमतिः कोशनः मौद्गल्यः कारवचः शान्तपायनः गेह्लः भेल्लकितुपः तत्वः औपधिः वार्गागिः गाणिः शैनपागतिः शौद्धकर्णिः इति । एते जामदग्न्याः वत्सास्तेषां पञ्च प्रवराः—भार्गवच्यावनाप्नुवानौर्वजामदग्न्येति भार्गवौर्वजामदग्न्येति त्रयो वेत्यापस्तम्बः । अत्र वत्सानां जामदग्न्यत्वं गणे पञ्चावत्तप्राप्त्यर्थं 'पञ्चावत्तं जमदग्नीनाम्' इत्यापस्तम्बोक्तेः । केचिदजामदग्न्यवत्सानां भार्गवच्यावनाप्नुवानेति त्रिप्रवरत्वमाहुः । तत्त्वं तु कात्यायनोक्तवात्सा एव तैरुक्ताः । केवलजामदग्न्यगोत्रस्य तु 'भार्गवच्यावनाप्नुवानेति त्रयः' इत्याश्वलायनः । सावर्णिजीवन्तिजामाल्येतिशायनवैरोहित्यावटमण्डुप्राचीनयोग्यानां भृगुवदित्येकप्रवरः' इत्यापस्तम्बः । 'रेतवाहवाहादीनामेषां भार्गवौर्वजामदग्न्येति वा' इति हिरण्यकेशिसूत्रे ॥

अथ जामदग्न्याः बिदाः—बौधायनः विदः शैलः अवटः प्राचीनयोग्यः अभयदाता काण्डरथिः वैनभृतः पुलस्तिः आर्कायणः ताष्ट्रायणः क्रौयनः कामलः इति बोधायनोक्ताः । पौलस्त्यः वेदभृत् अभयजातः कौङ्कायनः भ्राज भ्रदत्यः शैकायनः

भञ्जायनः इति कात्यायनोक्ताः । जमदग्निः कटायनिः आर्षेयः मरुतः इति मात्स्योक्ताः बिदाः । तेषां पञ्च भार्गवच्यावनाप्नुवानौर्वबैदेति । अत्र जामदग्न्यबिदानां भार्गवौर्वजामदग्न्येति त्रयो वा इति कात्यायनः, पञ्च वा कात्यायनेन वत्सानां त्रयः भार्गवच्यावनाप्नुवानेत्युक्तम् । बिदानामप्येते इति मात्स्ये । भृग्वन्दीपमार्गपथयोः पूर्वोक्ताः पञ्चैवेति कात्यायनः । मात्स्ये त्वेतौ आर्ष्टिषेणेषूक्तौ । एते जामदग्न्या एव । पञ्चप्रवरे यद्यपि जामदग्न्यो नास्ति, तथाऽप्यौर्वस्य जामदग्न्येष्वेव । वत्सबिदौ सगोत्रौ जमदग्नेः सप्तर्षिमध्ये पाठात् ॥

अथ केवलभृगवः—आर्ष्टिषेणः नैराथिः ग्राम्यायणः कात्यायनः त्वान्द्रायणः पौठिकलायनः सिद्धः समुनायनः गौराम्भिः राम्भिः इति बोधायनोक्ताः । नेकसिः आपस्तम्बिः भाल्लविः कार्दमायनिः गादर्भिः अनुपः इति कात्यायनोक्ताः । मात्स्ये त्वन्येऽपि । भृग्वन्दीपः मार्गपथः चटायनिः कविः आश्वायतिः इति । एते आर्ष्टिषेणाः एषां पञ्च प्रवराः भार्गवच्यावनाप्नुवानार्ष्टिषेणानूपेति । भार्गवार्ष्टिषेणानूपेति त्रयो वेत्यापस्तम्बः । एषां वत्सबिदार्ष्टिषेणानां परस्परमविवाहः, द्वित्रिप्रवरसाम्यात् । यद्यपि त्रिप्रवरार्ष्टिषेणानां न तथा । तथाऽपि 'वत्सा बिदा आर्ष्टिषेणा इत्येतेषामविवाहः एते पञ्चावर्त्तिनः' इति मञ्जर्यां बोधायनोक्तेरविवाहः ।

'भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः'

इत्याश्वलायनोक्तेश्च । चतुष्ट्वं च तेन केवलजामदग्न्यस्य भिन्नत्वोक्तेः । यद्यप्यार्ष्टिषेणा न जामदग्न्याः तत्पुरस्कारेणैव पञ्चावत्तमुक्तं 'त्रिर्जामदग्न्यानाम्' इति । तथाऽपि 'पञ्चावत्तिनः' इति बोधायनवचनादेव एषां पञ्चावत्तं ज्ञेयम् । स्मृत्यर्थसारेऽपि—

जामदग्न्या बिदा वत्सा आर्ष्टिषेणास्तथैव च ।
पञ्चावत्तिन एवैते अन्ये चतुरवत्तिनः ॥

इति । केचित्—वत्सपुरोधसयोः पञ्च भार्गवच्यावनाप्नुवानवात्सपौरोधसेति भार्गववात्सपौरोधसेति वा अत्र जामदग्न्या एते इति कात्यायनः । आप्नुवानानां भार्गवच्यवाप्नुवानेति । बैजवनिमथिततयोः पञ्च भार्गवच्यावनाप्नुवानबैजवनमाथितेति । शाठरमाठराणां भार्गवशाठरमाठारेति । कात्यायनेन त्वेते जामदग्न्येषूक्ताः अनयोः प्रवरमञ्जरीकारेण अलेखनान्मूलं मृग्यम् ॥

अथ यस्काः—यस्कः मौनः मूकः वाधुलः वर्षपुष्यः भागलेयः राजितापिः रोददिनः भागविज्ञेयः दुर्दिनः भास्करः दैवन्तायनः जैवतायनः वार्करेलयः मध्यमेयः वासिः कौशाम्बेयः कौटिल्यः सात्यकिः चित्रसेनः भागन्तिः वाकाश्वकिः औक्थः उर्गवित्रिः भागुरिः नृपः इति बोधायनोक्ताः । वीतहव्यः चण्डमोदनः जैवत्यायनः मौसलिपिलिः खलिः भागलिः भागवित्तिः कश्यपिः वालेयः समदोगेयिः सौरिः ज्वरिः भाङ्गतिः सानुष्टिः मादायनः शालङ्कायनः तार्कः प्रवारेयः शार्कगाक्षिः कौटिल्यः विलेभिः वाह्लिः हालेयः दीर्घवित्तः गौर्जिगः वासोदः इति मात्स्योक्ताः । माधुलः अर्थलेभिः वृकाश्मकिः मदोकिः मश्वारेयः गैगिक्षितः दैर्घचित्तः पश्चालवः पाण्यवत्तः पौष्णावतः गोदायनः इति कात्यायनोक्ताः । सार्ष्टिसावर्णी द्वावधिकावाश्वलायनोक्तौ । एते वैतहव्या इत्यपि कैश्चिदुक्ताः । एषां त्रयः प्रवराः भार्गववैतहव्यसावेदसेति । एषां परस्परमविवाहः । ‘ तेषामविवाहः ’ इति कात्यायनोक्तेः पूर्वोक्तैः वत्साद्यैः वक्ष्यमाणैर्भार्गवैश्च भवत्येव विवाहः । द्वित्रिप्रवरसाम्याभावात् । एवं वक्ष्यमाणेषु सर्वेषु भृगुगणेषु स्वगणस्थैरविवाहः अन्यैर्विवाह इति ज्ञेयम् ।

अथ मित्रयुवाः—मित्रयुवः रौक्यायणः नाशार्यंजनः गेष्ठायनः रौक्षायनः सापिण्डिनः सुरभितयः माल्यः यावाल्यः महावाल्यः तार्क्ष्यायणः औरुक्षायणः उक्षायणः वाञ्चायनः माञ्चाधिः कैतवायनः इति बोधायनोक्ताः । आश्वलायनः शाकटाक्षः मैत्रेयः साचर्यः द्रोणायनः गोपायनः आपिशलः पाटिकायनः हसजिह्वः इति कात्यायनोक्ताः । शालायनिः सान्वयः रौक्थायनः आपिकायनः इति मात्स्योक्ताः । कैश्चिद्रौप्यायणरौकमायणसात्यकिपिकाक्षमोदायनकापिशायनशांडेयसक्षितमित्रयुगापिशायनवाध्र्यश्वदिवोदासा अप्युक्ताः । एषां त्रयः प्रवराः भार्गववाध्र्यश्वदैवोदासेति कात्यायनः । भार्गवच्यावनदैवोदासेति वेति मात्स्ये उक्तम् । अस्मिन् पक्षे प्रवरद्वयसाम्यात्पूर्वैरविवाहः । अन्यपक्षे तु भवत्येव । वाध्र्यश्वेत्येको वेत्याश्वलायनः ।

वैन्यः पार्थो बाष्कलः इति वैन्यास्तेषां त्रयः भार्गववैन्यपार्थेति ।

शुनकः याज्ञपिः गार्त्समदः खादर्मायनः गाङ्गायनः गर्भायणः मात्स्यगन्धः स्वौजः श्रोत्रियः तैत्तिरीयः पत्पूलः इति कात्यायनोक्ताः । शाक्त्यायनः श्रोण्यः सनकः इति मात्स्योक्ताः । एषां शुनकानां शुनकेति वा गार्त्समदेति वैकः प्रवर

इति बोधायनः । भार्गवगार्त्समदेति द्वौ वेति कात्यायनः । व्यत्ययो वेति सत्याषाढः । भार्गवशौनहोत्रगार्त्समदेति त्रयो वेत्याश्वलायनः । एषां वैकल्पिकेऽपि प्रवरे परस्परमविवाहः 'एषामविवाहः' इति कात्यायनोक्तेः । पूर्वैस्तु भवत्येव । वेदविश्वज्योतिषां त्रयः भार्गववेदविश्वज्योतिषेति कात्यायनः ।

इति सप्त भगवः.

---

अथाङ्गिरसः—तेऽत्र त्रिविधाः गौतमा भारद्वाजाः केवलाङ्गिरसश्चेति । तत्र गौतमानां दश गणाः—आयास्याः शरद्वन्तः कौमण्डाः दीर्घतमसः औशनसाः कारेणुपालयः राहूगणाः सोमराजकाः वामदेवाः बृहदुक्थाः चेति । औतक्थः औशिजश्च द्वौ गौतमाविति केचित् । काक्षीवता अपीत्याश्वलायनः ।

तत्र आयास्याः श्रोणीचेषकः वाक्षिः मूढरथः सत्यकिः स्वेदेहः कौमारवत्यः ताण्डिः दर्भिः देवकिः सात्यमुग्रीकः बाह्यः बौभ्यः नैकरिष्टिः स्तैषकिः किलालिः कारेणिः कठोरः कासीकः काक्षिवः पार्थिवः इत्यायास्यास्तेषां त्रयः प्रवराः आङ्गिरसा यास्यगौतमेति ।

शरद्वन्तः—अभिजितिः रौहिण्यः क्षीरकरम्भः सौमुचयः सौयामुनः औपबिन्दुः राहूगणः गणिः भार्षण्यः इति एषां त्रयः आङ्गिरसगौतमशारद्वन्तेति बोधायनः । औतथ्याः कात्यायनोक्ताः तौलेयः अभिजितः नैपकिः लौकाक्षिः करगोण्यः क्षीरकरंटः कट्टकरः सैन्धवः गतवः साङ्करः सोमानिः पौष्यण्डिः भागलः तुण्डः कुण्डेबः कारोटः कारवारिः उपबिन्दुः मान्धर्यः रोहितायनः तोष्यकाणिः पार्थिवः मैदहायनः स्कान्दः सार्वः कौटिल्यः नरोहित्यः नीचिर्वा समूलिर्वा सपुष्पिर्वा सधूपः कावाक्षिः क्षपोवारापिः करोलिः करालिः इति कात्यायनोक्ताः । मात्स्ये त्वन्येऽपि—उतथ्यः गौतमः बौधिः नगः सुगोमाक्षिः क्षीरटः टेकिः बाहुकर्णिः सौपुरिः कैरातिः सामलोमकिः पौष्कजितिः भागवित्तिः वाडालकः सुतपाः वीरः सुरैषिणः रौहिणः निचोराणिः कोष्ठः आरुणायनिः सोमदायनः कासोरुः कौशिल्यायनः राधेमूलिः वासुः पुष्पवान् विश्वन्तिः विश्वः पात्विकारेविः इति । औपमन्यः ऐटिकिः शौनरिः शालापिः खरिङ्कः नैकषिः तौदेवः बाल्योदः इति केश्चिदुक्ताः एषामौतथ्यानामाङ्गिरसौतथ्यगौतमेति त्रयः प्रवरा इति कात्यायनाश्वलायनौ ।

आङ्गिरसौतथ्यौशिजेति वेति मात्स्ये । केनचित्त्वेते शारद्वन्तमध्ये गणिताः, स कात्यायनादीनां पौर्वापर्यमपश्यन् पशुतुल्य इत्युपेक्षणीयः ॥

कौमण्डः मामन्थरेषणः मासुराक्षः काष्टेरभिः आजायनः वायनः मासुरेषिः वाशिरिः तेषां पञ्च प्रवराः आंगिरसौतथ्यकाक्षीवतगौतमकौमण्डेति । एत एवौशिजास्तेषां आङ्गिरसौशिजकाक्षीवतेत्यापस्तम्बः । एतेषां आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति पञ्च प्रवरा इति कात्यायनः । एते काक्षीवतास्तेषां पञ्च आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेत्याश्वलायनः ।

दीर्घतमस आङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति पञ्चेति बौधायनः । आङ्गिरसौतथ्यदैर्घतमसेति त्रयो वेत्याश्वलायनः ॥

औशनसः दिश्यः प्रशस्तः सुरूपाक्षिः महोदरः विकंहन्तः सुबोध्यः निहतः इत्येषां त्रयः प्रवराः आङ्गिरसगौतमौशनसेति बोधायनः ॥

कारेणपालिः वास्तव्यः श्वेतीयः पौजिष्टः औदाजायनः माधुरक्षरः अजगंधिः । तेषां त्रयः आङ्गिरसगौतमकारेणुपालेति बोधायनः ॥

राहुगणानामाङ्गिरसराहुगणगौतमेति त्रयः बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति त्रयः । एवमेते चत्वार आश्वलायनोक्ताः । आपस्तम्बेनैते वामदेवास्तेषामाङ्गिरसवामदेवबार्हदुक्थेति त्रय इत्युक्तम् । हिरण्यकेशिसूत्रेऽप्येवम् । राघुवानां आङ्गिरसराघुवगौतमेति त्रय इति केचित् । अत्र मूलं मृग्यम् । एषां सर्वेषां अविवाहः सगोत्रत्वात् 'गौतमानां सर्वेषामविवाहः' इति बोधायनोक्तेश्च । यद्यप्याश्वलायनेन पृषदश्वा ऋक्षाश्च गौतमेषु पठिताः तथाऽपि पृषदश्वानां केवलाङ्गिरोमध्ये आपस्तम्बादिभिः रथीतरेषु पाठात् ऋक्षाणां भरद्वाजेषु पाठात्तैरेव महाविवाहः । गौतमैस्तु भवत्येव विवाह इति नारायणवृत्तौ प्रवरमञ्जर्यां चोक्तम् ॥

इति गौतमाङ्गिरसाः.

अथ भरद्वाजाः । ते चत्वारः । भरद्वाजाः गर्गाः रौक्षायणाः कपयः इति । तत्राद्याः—भरद्वाजः काम्यायणः भङ्कडः देवाश्वः उद्वहव्यः प्राग्वंशी वाहलभ्यः वाह्यः गोवासीनः स्तैदेहः आश्लः आक्षामूरिः परिणद्धेयः केशरवयः शौद्धिः उरूढः खारिग्रीविः औपसिविः वयोक्षिभेदः अग्निवेश्यः शठः गौरिवायनः चेलकः स्तनकर्णः ऋक्षः माणभियः कादोवमेकः स्वोज्वलिः वेलः खारुडः देविः भरुडेयः

भद्राधिः सौरभः शृङ्गः देवमतिः इषमतः औदमेधिः प्रवाहणेयः कल्माषः राजस्ताम्भिः सघोपकृतिः पहारिः करभीकिः रुद्राङ्गपथः शालाहारिः वेदवेलः महावेलः नृत्यायनः धान्यायनः शालानिः शार्दूलिः कक्षलः बाष्कलः सैंहिकेयः कौण्डायनः कौण्डिन्यः ब्रह्मस्तम्भः अग्निस्तम्भः वायुस्तम्भः सूर्यस्तम्भः यमस्तम्भः इन्द्रस्तम्भः आपस्तम्भः ये चान्ये स्तम्भस्तम्बशब्दान्ताः । अरुणः सिन्धुः कुमुदगन्धिः शिक्षायणः आत्रेयायणः मामन्यः धूमगन्धिः कुक्षः कौकाक्षिः नैसुतिः दाभिः श्यामेयः मत्स्यक्राथः कारुणायनः कारुपथिः कारुषायणः कावल्यः इति बोधायनोक्ताः । कात्यायनोक्ताः । अन्येऽपि । मार्कण्डिः वालिशायिनिः सौविष्टः सौगेयः सारावरिः वाहिः माङ्गिः तूर्णकर्णिः आश्वलायनिः वाताङ्गिरथिः कारग्रीविः मैथुनमतिः स्वजङ्घिः काचकिः कायनः त्रैतुण्डिः धौताम्बकिः सामस्तविः ब्रह्मस्तम्बिः वेपुः गोद्वेषी सालहिः वालुहिः सौबुद्धिकः परेपमतिः दैवगारिः देवस्थानिः हरिकर्णिः ध्रागविः ध्रौगयः सात्यमुग्रिः मात्स्यक्षीपः मालोहरः हालोहरः गाङ्गोदकिः कौरुक्षेत्रिः द्रौणिः जैत्रिः जैत्वलायनः काण्र्यविजलिः आपस्तम्बिः सौजपृश्निः पौलिः खांखलायनः इति । कृकः ऊर्जायनश्चेत्यापस्तम्बोक्तौ । मात्स्ये त्वन्येऽपि—शिलातलिः चिकीर्षिः वाराहिः बाष्कलिः सौढिः प्रवाहिः लभायनिः वाह्मगच्छिः दशादकिः सारग्रीवी व्याढाकिः भाजपृश्निः गोश्वपिगलिः पैलः शाकलायनः सौवश्च इति । केचित्—विविपिः जैह्मलायनः लखायनः चेलारुक्षः वालक्षगौरिवः सौयथः धोरिः कुलकिः किकाजः कुपितः श्रौपथः निद्रागवयः शैखेयः आधूकर्णः काण्डण्यः औवेयः स्वारणादिः त्र्यम्बकः मापायनः शाक्तलाजः कामकायनः शिन्धवः इत्याहुः । अत्र मूलं मृग्यम् । एषां त्रयः प्रवराः आङ्गिरसबार्हस्पत्यभारद्वाजेति बोधायनः ॥

गर्गाः साम्भरायणः सखीनः गान्धरायणः बाहुलकिः भ्रष्टकः भाष्टुविदुः क्रोष्टकिः सौयामुनिः भ्राजिताक्षिः हात्रायविः सात्यायनिः जायावतः वाटः शाखायनिः साग्रहवान् तुल्यः वैलहानिः स्वाहतः कारिरात्रिः कैवाल्यः राजिः पौलिः इति बोधायनोक्ताः । कालायनः केवर्मिः वत्सतरायणः ऐन्द्रालिः शालङ्कायनः कौलास्त्रयः क्रियाश्वः क्रौवः कालकृत् मातुलेयः यावकिः भालविः औपमर्कटिः प्रैष्यङ्कः पैगलायनः श्यामायनः गार्ग्यः सापरिवारः इति कात्यायनोक्ताः । साभारः काण्वायनः सांख्यायनः कानायनः कैवलायनः वात्स-

तरायण: भ्राष्ट्रकृत् विदु: नैद्राक्षि: लावण्यकालवित् गाधि: मार्कटि: स्कन्द: स्वश्व: कौण्डायन: भारमत: प्रैश्यङ्ग: पैश्विकायन: विश्वकायन: कौलाक्षि: मधुरावह: बलाकि: शाकलायनि: साहरि: माधुर: वटु: लोपकृत् भाल्लकृत् वासायन: शारायण: श्यामायन: दामी भाङ्गी कारी आश्मी श्वक्रि: डीराय: गात: कौजवि: श्याम: इति मात्स्योक्ता: । एषां गर्गाणां आङ्गिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्येति पञ्चेति बोधायन: । आङ्गिरसशैन्यगार्ग्येति त्रयो वेत्याश्वलायन: । अन्त्ययोर्व्यत्ययो वा भारद्वाजगार्ग्यशैन्येति वेति हिरण्यकेशिसूत्रे । तित्तिरि: कपि: भूमि: स्वन्दिति: खण्डित: गर्ग: इत्येतेषां गर्भभेदानां आङ्गिरसशैन्यगार्ग्येति त्रय इति कात्यायन: आंगिरसतैत्तिरिकापिभुवेति मात्स्ये उक्तम् ॥

रौक्षायण: कपिल: शवल: शिपिल: शिपिलस्वि: त्रिभिण्डि: कौथम: अग्निजिह्व: कर्णसुत: इति मात्स्योक्ता: । रौक्षायणानां आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति त्रयो वेत्यापस्तम्ब: ॥

कपि: तरि: स्वस्तरि: विदु: दण्डि: शक्ति: पतञ्जलि: भूयसी तैवरन्धि: चैतकि: अध्वासु: राजिकेशी कलसी कण्ठरि: अमावास्यायन: कात्यायन: इति कात्यायनोक्ता: । वैतल: ऐतिशायन: ताण्डिन: भोजसी कामरव: करसिरवड: मेपीतकि: सागर: पौष्टि: इति बोधायनोक्ता: । तरस्वान् तिल:विदु: शालु: द्वन्द्वकि: ॥

जलन्दु: इति हिरण्यकेशिसूत्रेऽधिका: । कपितर: स्वदतर: जलसिन्धकि: ऊर्कसु: कुसीद: गादि: सौजरि: सासविसल्लि: क्षपेय: काय: धान्यायनि: सावस्यायनि: इति मात्स्योक्ता: । एषां कपीनामाङ्गिरसआमहीयवऔरुक्षयसेत्याश्वलायन: । अत्र यद्यपि कपि: केवलाङ्गिरोमध्ये पठित: । तथाऽपि आपस्तम्बेन भरद्वाजमध्ये पाठात् विष्णुपुराणसंवादाच्च भरद्वाजैरविवाह्य एवेति प्रवरमङ्गीकार: । मात्स्येऽन्योऽपि गण उक्त: । अत्वरि: भरद्वाज: आत्मभव: मन्त्रवर: एषां पञ्च आङ्गिरसबार्हस्पत्यभारद्वाजमन्त्रवरात्मभवेति । एषां सर्वेषामविवाह:, एषामविवाह इति बोधायनोक्ते: । स्मृत्यर्थसारेऽपि—

भारद्वाजास्सकपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गौत्रैक्यान्नान्वयुर्मिथ: ॥

इति । एषां गौतमादिभिर्भवत्येव विवाह:; द्वित्रिप्रवरासाम्यात् सगोत्रत्वाभा-

वाच्च । अत्र ऋक्षाणां पृषदश्वानां च सगोत्रत्वाद्यभावाद्गौतमैः भवत्येव विवाह इति प्रवरमञ्जरीकृत् ॥

इति भरद्वाजाः.

अथ केवलाङ्गिरसः । ते पञ्च—हरिताः कण्वाः रथीतराः मुद्गलाः विष्णुवृद्धाश्चेति ॥ तत्राद्याः–हरितः साङ्ख्यः दर्भः सौभागः भैमगवः मत्यायुः वालोदरः महोदरः नैमिश्रीः मिश्रोदनः कातपः कारीषिः पोटलः मौत्स्यः मधूपः मान्धाता मण्डकारिः इति बोधायनोक्ताः । कुत्सः पिङ्गः शंखदर्भः इत्याश्वलायनः । खाण्डायनः उमाण्डिः मौलिः गवेरणिः मात्स्यभालिः गणगारिः मद्रगारिः हंसः हस्तिवासः पैङ्गलः पलाशिः दादुलः कौमारः हास्तिनः द्रलः हरितः इति मात्स्ये । एषामाङ्गिरसाम्बरीषयौवनाश्वेति मान्धात्राम्बरीषयौवनाश्वेति वेत्याश्वलायनः । आपस्तम्बस्तु कुत्सानामाङ्गिरसमान्धातृकौत्सेति प्रवरानाह । एषां आङ्गिरसपौरुकुत्सत्रासदस्यवेति मात्स्ये उक्तम् ॥

अथ कण्वाः—भरुण्डः खरुण्डः शाकटायनः प्रसादः सौनारिः मर्कटः रमणः सणः करघः मर्कटिः इति कात्यायनोक्ताः । कण्वः औपमर्कटायनिः भाष्कलः पौलाहलिः मौञ्जिः माञ्जिः मौञ्जिगवः विजिगवः वाजयः वाजश्रवाः इति बोधायनोक्ताः । आर्पादिः चतुरिः आमरनाशनः गोदायनः रथिः श्यामायनिः गर्दभः प्रागावसुः नाडायनः श्यामायणः शैवेरिः नारी इति मात्स्योक्ताः । एषामाङ्गिरसाजमीढकाण्वेति आङ्गिरसघोरकाण्वेति वेत्याश्वलायनः ॥

अथ रथीतराः—रथीतरः हस्ती दासकः द्वायनः नैतदाक्षिः शैलालिः भिलिः भीलीभायनः साहवः भैक्षवाहः हेमगवः वैरूपः अष्टादंष्ट्रः पृषदश्वः इति । एषामाङ्गिरसवैरूपराथीतरेति । आङ्गिरसवैरूपपार्षदश्वेति वेति बोधायनः । अष्टादंष्ट्रपार्षदश्ववैरूपेति वेत्यापस्तम्बः । अन्त्ययोर्व्यत्ययो वा ॥

अथ मुद्गलाः—सात्यमुग्रिः हिरण्यस्तम्बिः मुद्गलः हसजिह्वः देवजिह्वः आलवालः बिडादिः आपाग्नेयः मुग्रिः पौराः इति मात्स्योक्ताः । सूनिः छत्रहयः तारणः कार्यभासितः हिरण्याक्षः ऋषभः मिताक्षः वृषः ऋश्यायणः जङ्घः दीर्घजङ्घः हिरण्यगर्भः इति बोधायनोक्ताः । एषामाङ्गिरसभार्म्यार्श्वमौद्गल्येति । तार्क्ष्यभार्म्यार्श्वमौद्गल्येति वेत्याश्वलायनः । आङ्गिरसताविमौद्गल्येति वेति मात्स्ये ॥

अथ विष्णुवृद्धाः—विष्णुवृद्धः शठः मर्षणः मद्रणः शावरायणः वात्सप्रायणः सात्यकायनः नैतुन्दः स्तुत्यः आरुण्यः वैहोढः देवस्थानः इति बोधायनोक्ताः । मर्षणः उपामितिः नितुन्दिलः औपगविः कुशामित्रः वत्सावनः स्यवनार्षव्यः व्यायनिः कालम्भायानिः ऋणी इति हिरण्यकेशिसूत्रे उक्ताः ।जतृणः कतृणः छत्रिणः आपरायणः होत्रिणः पुत्रिणः वज्रिणः इति मात्स्ये । एषामाङ्गिरसपौरुकुत्स-त्रासदस्यवेति त्रयः । एषां केवलाङ्गिरसां स्वगणं विहाय सर्वैर्विवाहो भवति । तत्रापि हरितानां कुत्सानां च न विवाहः । द्विप्रवरैकत्वात् । पक्षे कुत्सानां विष्णुवृद्धानां च न विवाहः । यद्यपि शौङ्गशैशिर्यादयो भरद्वाजादिष्वत्रैव वक्तुमर्हाः तथाऽपि असन्देहार्थं द्व्यामुष्यायणेषु तान्वक्ष्यामः ॥

इति केवलाङ्गिरसः.

अथात्रेयाः—तेषां चत्वारो गणाः प्रथमात्रेयः वाद्भुतकः गविष्ठिरः मुद्गलः इति । अन्त्यः पूर्वातिथिरिति कैश्चिदुक्तः । तत्राद्यः अत्रिः भूमिः छान्दिः छन्दोगिः पौष्टिकः माद्रुलिः सोपाच्छरालः छागलः तृणबिन्दुः भाङ्गतिः गालरुचः व्यालिः सञ्चव्यानिः कार्ष्णायनिः दाक्षिः वैदेहः गाधिपतिः औद्दालकिः द्रोणनाभः गौरग्रीविः काविष्टिरः शिशुपालः कृष्णात्रेयः गौरात्रेयः अरुणात्रेयः नीलात्रेयः श्वेतात्रेयः श्यामात्रेयः महात्रेयः दत्तात्रेयः गौलेयः बालेयः सौगयः वामरथ्यः वैतभाविः शौद्रेयः कौन्द्रेयः गोपवन्यः कालायसिः नीलायनः आङ्गिमान् अंगिः दौरांगिः सौरगिः गौरगिः पुष्पिः सुपुष्पिः साकेतायनः भारद्वाजायनः चन्द्रातिथिः इन्द्रातिथिः इति बोधायनोक्ताः ॥

शाङ्गरिः औषसः हर्यश्वः आहायनःगोपवनः शाकिः विदर्किः शौनकर्णिः सौभृतिः कैरजिः जैत्रायणः स्वेताकिः बाहुतन्त्रः बाहुमित्रः जानुकिः तैलेयः वैलेयः आत्रेयः पञ्चजनः भागमानः इति कात्यायनोक्ताः ॥

साङ्ख्येयः सारापगः सौत्कवरः आर्यपथः गौर्वन्यः कानजिह्वः उद्दरग्रीविः वैडालिः शाकटायनःगौणिपथः जगलदः भागलिः इति मात्स्योक्ताः । शाकटायनः आर्घायणः बादर्यायणः मतंगः बाहुषिः शाकलिः बादन्तिः वैशाखि शकिलाखिः रायनिः निशायनः दार्भ्यः दुलाभः गणपतिः वैश्वानकिः शाधूलकि इति केचिदाहुः ॥

एतेषामात्रेयार्चनानसश्यावाश्वेति प्रवराः ॥

वाङ्कुतकानामात्रेयार्चनानसवाङ्कुतकेति बोधायनः । धनञ्जयानां आत्रेयार्चनानसधानञ्जयेति केचित् ॥

अथ गविष्ठिराः—लाक्षिः व्याणिः अवरोधकृत् नालन्दनः और्णनाभिः वैवेयः वैजवापनः मौञ्जकाशिः सृपिः गविष्ठिरः इति कात्यायनोक्ताः ॥

पूर्वातिथिः श्यामपुष्यः ललन्दलिः ब्रह्मपुष्पिः व्याघ्रपुष्पिः सौपुष्पिः कृष्णशीर्षकः हिरण्यः कालासिः काकशीर्षिः प्लुक्षिः बलधृतिः पार्ष्णिः कटुकिः मैत्रेण्यः शिरीषकः इति मात्स्योक्ताः ॥

एषामात्रेयार्चनानसगाविष्ठिरेत्यापस्तम्बः आत्रेयगाविष्ठिरपौर्वातिथेति वेति कात्यायनः ॥

अथ मुद्गलाः—मुद्गलः व्यालसन्धिः अर्णवः बोधाक्षः गविष्ठिरः वैतभावः शिरीषिः शालिमतः गौरिवीतः गौरकिः वायवानः वायुपूतिः एतेषामात्रेयार्चनानसपार्वातिथेति प्रवराः इति बोधायनः । वामरथ्यसुमङ्गलवैजवापाः इत्यपि । एतेषामात्रेयार्चनानसपौर्वातिथेति प्रवराः इत्यापस्तम्बः । आत्रेयार्चनानसगाविष्ठिरेति हिरण्यकेशिसूत्रे । । सुमङ्गलानामात्रिसुमङ्गलश्यावाश्वेति वेति केचित् ॥

हालेयः वालेयः केरेयः वामरथ्यः पुत्रिकः कालयः सौगेयः श्यैभ्रेय इति अत्रेः पुत्रिकापुत्राः । एषामात्रेयवामरथ्यपौत्रिकेति प्रवरा इति मात्स्यकात्यायनौ ॥

एषां सर्वेषामत्रीणामविवाहः सगोत्रत्वात् । 'अत्रीणां सर्वेषामविवाहः' इति बोधायनोक्तेश्च । अत्रेः पुत्रिकापुत्राणां वसिष्ठगणैरप्यविवाहः । अत्र पूर्वोक्तभृग्वादिष्वत्रिषु च यानि तुल्यानि नामानि तत्र गोत्रप्रवरभेदादृषिभेदं ज्ञात्वा विवाहः कार्यः । अन्यथा न । एवं सर्वत्र ज्ञेयम् ।

इत्यत्रयः.

---

अथ विश्वामित्राः ॥ ते दश—कुशिकाः रोहिताः रौक्षा कामकायनाः अज्ञाः अघमर्षणाः पूरणाः इन्द्रकौशिकाः धनञ्जयाः कताः इति बोधायनः । अन्येऽपि सन्ति ते वक्ष्यन्ते—

तत्र कुशिकाः—कुशिकः पर्णजङ्घः वारक्यः औदलिः माणिः बृहदग्निः आलविः राधहिः आपधव्यः कामन्तकः बद्धकथः चिन्तितः लामकायनः शालङ्कायनः शांकायनः लोकोगौरः सौगतयः यमदूतः आनभिन्नः तारकायनः वालकायनः श्वोवलः

जाबालिः याज्ञवल्क्यः वितन्दुः भोवनिः सांश्रुतिः औपदहनिः उर्दगिः भाष्टकिः श्यामेयः चैत्रेयः तालवतः मयूरः सौमत्यः चित्रन्तविः श्वेत्यन्तायनः अनूतकिः मान्तवः ये चान्ये मनुशब्दान्ताः बाभ्रव्यः कालायनः उत्सरिः इति बोधायनोक्ताः ॥

देवरातः मनुः तन्तुः औलोकिः चारकिः वालखिल्यः उलूतबभ्रुः शालः विशालः काविपावः इत्यापस्तम्बोक्ताः ॥

यज्ञवान् ईर्भटिः सांशिव्यः शालावतः इति केशिसूत्रे । वैकृतिः गवलः वलशङ्कुः आश्वतापनः श्यामायनः सैन्धवायनः बाभ्रव्यः कारीषिः संसृत्यः संसृतः औलोप्यः माम्रोदरिः पार्पिः क्षरयः पाडलिः इति मात्स्योक्ताः ॥

सौरथिः सोमपेयः श्वलायनः क्षीरी इत्यपि केचित् ।

एषां विश्वामित्रदेवरातौद्दालकेति प्रवराः ।

रोहितः दाडकिः श्वात्रवर्णायनः कर्जूरायनः वज्रायनः वासिः अष्टकिः एषां वैश्वामित्राष्टकलौहितेति त्रयः । अन्त्ययोर्व्यत्ययो वा वैश्वामित्राष्टकेति द्वौ वा । वैश्वामित्रमाधुच्छन्दसाष्टका वेत्याश्वलायनः ॥

रौक्षः सौद्गहलः कथकः वेतरायणः रेवणः तेषां वैश्वामित्ररौक्षकरैवणेति बोधायनः । वैश्वामित्रगाधिनरैवणेति वेति लौगाक्षिः ।

कामकायनः श्रोमतः विश्वामित्रः देवश्रवसः देवतरसः कालकायनः एषां वैश्वामित्रमाधुच्छन्दसाजेति बोधायनः । वैश्वामित्राश्मरथ्यवाधूलेति वेति कात्यायनः ॥

अघमर्षणः कुशिकः तयोर्वैश्वामित्राघमर्षणकौशिकेति ॥

पौरणः वारिधापयन्तः तयोर्वैश्वामित्रपौरणेति द्वौ । वैश्वामित्रदेवरातपौरणेति वेत्याश्वलायनः ॥

इन्द्रकौशिकयोर्वैश्वामित्रैन्द्रकौशिकेति त्रयः ॥

धनंजयः कारिषिः आश्ववतः तारक्यः सैन्धवायनः उत्स्राक्षः महोक्षेति बोधायनः । कर्मधिः परिह्वः पार्थिवः पाणिनिः मदकः बन्धुलः चैत्रेयः इति मात्स्ये ॥

एषां वैश्वामित्रमाधुच्छन्दसाघमर्षणेति प्रवरा इति मात्स्ये उक्तम् । वैश्वामित्रमाधुच्छन्दसधानञ्जयेति सत्याषाढः ॥

अथ कताः—कतः सैरन्धः करम्भः वाजायनः सांहितेयः कौकुल्यः पिण्डग्रीवः नारायणः नाराद्यः इति बोधायनोक्ताः ॥

इन्दुवारिः शौशिरिः नैकायनिः त्रैकायनिः तार्क्ष्यायनः तार्यायनिः कात्यायनिः करीराम्भिः शालङ्कायनिः लावलिः मौञ्जायनिः कतः इति लौगाक्षिमात्स्योक्ताः ॥

कश्चित्—तुङ्गायनिः कालिः वेदायानिः गोदायानिः मेदायनिः चोदायनिः वेनायानिः राणिः शतकेरीत्यप्याह ॥

एषां वैश्वामित्रकात्यात्कीलेति प्रवराः ॥

आश्वलायनेन त्वन्येऽपि गणा उक्ताः—रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति । रेणूनां वैश्वामित्रगाधिनरैणवेति । वेणूनां वैश्वामित्रगाधिनवैणवेति । शालङ्कायनः शालाक्षः लौहिताक्षः जहुः एषां वैश्वामित्रशालङ्कायनकौशिकेति सिद्धान्तभाष्येऽपि धृताः ॥

मात्स्ये त्वन्येऽपि—कामलायनः आश्मरथ्यः मधुलः कौशिकः घोटमुखः कामकायनिः पापायानिः नेता लांगुलिः एषामाश्मरथ्यानां वैश्वामित्राश्मरथ्यवाधुलेति । उदवेणुः कथकः औद्दालकिः रेणुः गाधिनः उदवासः आज्योहः रौत्थक इत्येके । एषां वैश्वामित्रगाधिनरैवणेति । प्रतिलोमाः सर्वे वा ॥

भारते दानधर्मेषु वैश्वामित्रपुत्राननुक्रम्योक्तम्—

तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ।
मधुच्छन्दोत्र भगवान् देवरातश्च वीर्यवान् ॥ १ ॥
अक्षिणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ।
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः ॥ २ ॥
उलूको यमदूतश्च तथर्षिः सैन्धवायनः ।
वल्गुजङ्घश्च भगवान् गालवश्च महानृषिः ॥ ३ ॥
ऋषिवज्रस्तथा ख्यातः सालङ्कायन एव च ।
नीलाख्यो नारदश्चैव वक्षो ग्रीवस्तथैव च ॥ ४ ॥
आङ्गिको नैकदृक्चैव शिलापूपः शितश्शुचिः ।
चक्रं कामो रुतव्यूढः शालव्यूढः कपिस्तथा ॥ ५ ॥
कारीषिरथसंश्रुत्यः परः पौरवतन्तवः ।
महान् ऋषिश्च कपिलस्तथर्षिस्ताण्डकायनः ॥ ६ ॥

तथैव चोपगहनस्तथर्षिश्चासुरायनः ।
मादहर्षिर्हिरण्याक्षो जङ्घारिर्बाभ्रवायणिः ॥ ७ ॥
सूतिर्विभूतिस्सूतश्च सुरकृच्च तथैव हि ।
आरालिर्नाचिकश्चैव चाम्पेयोतस्तथैव च ॥ ८ ॥
नवतन्तुर्बकनखः सनयो रतिरेव च ।
अम्भोरुहश्चारुमत्स्यः शिरीषी चाथ गार्दभिः ॥ ९ ॥
ऊर्जयोनिरुपेक्षी च नारदी च महाऋषिः ।
विश्वामित्रात्मजास्सर्वे मुनयो ब्रह्मवेदिनः ॥ १० ॥

केचिदन्यानपि गणानाहुः—कथकः क्रथकः अधुः ऊदूर्णवः एषां वैश्वामित्रकाथकक्राथकेति । साहुलो माहुलो राहुलः काहुलः फागुलः औमिलः औहलः कोहलः शातातपः कोमशायनः सातविः जातविः एषां वैश्वामित्रिसाहुलमाहुलेति । हिरण्यरेतसां वैश्वामित्रहैरण्यरेतसेति द्वौ । सुवर्णरेतसां वैश्वामित्रकापातरसेति द्वौ । घृतकौशिकेति द्वौ । एते षट् क्वचित् । एषां वैश्वामित्राणां परस्परं सर्वेषां न विवाहः । यद्यपि—

अत्रेरेवापरं वंशं तव वक्ष्यामि पार्थिव ।
अत्रेस्सोमस्सुतः श्रीमान्तस्य वंशोद्भवो नृपः ॥
विश्वामित्रस्सुतपसा ब्राह्मण्यं समवाप्तवान् ॥

इति मात्स्योक्तेः विश्वामित्रस्यात्रिवंशत्वेन परस्परमविवाहः प्रतीयते । तथाऽपि द्वयोर्भिन्नगोत्रत्वश्रवणात् विवाहो ज्ञेयः । अन्यथाहि विश्वामित्रत्वेन निषेधो व्यर्थ एव स्यात् अत्रिगोत्रत्वेनैव निषेधसिद्धेरिति कुशकाशावलम्बनेन समाधातव्यम् ॥

इति विश्वामित्राः.

---

अथ कश्यपाः । तेषां पञ्च—निध्रुवाः कश्यपाः रेभाः शाण्डिलाः लौगाक्षयश्चेति ।

तत्राद्याः कश्यपाः—छाङ्गरिः मठरः ऐतिशायनः अभूत्यः वैशिप्रः धूम्रः धूम्रायणः सोम्यः धर्म्यायणः औटवृक्षः राग्रायणः पैकयिः प्रावर्यः हृद्रोगः आतपः पञ्चायनीकः मेषातकिः सामविः मापोवाविः सायस्यः आसुरायणः छागव्यः सौनघः स्थौलकेशिः वाध्रकिः औपव्यः लाक्षायणः क्रोष्णः जीवन्तः खान्द्रायणः

रोहितायनः मितकुम्भः पिङ्गाक्षिः औदालिः मारायणः पौलविः वैकर्णेयः कौशिकेयः धूमलक्ष्मलिः सुरः गौरिवायनः विमत्स्यः अग्निशर्मायणः औस्थकायनः काम्बलोदरिः देवपातः वैदलः चैलः महाचक्रेयः वैनस्यः पालस्यः विषगणाः दक्षपाणिः भालन्दनः शङ्खमित्रेयः हरित्यः पाञ्चालः जारमात्स्यः रम्भाणिः वार्धकाणिः सावि: श्रवसः वैशम्पायनः स्वैरकिः कासलिः उल्कायनिः मार्जालायनः कांसलायनः देवः होता कविः सुरेभः अपः स्थूणः भागुरिः पाथिकः गोमायनः हिरण्यवायनः अग्निः देविः सूपः सूर्यः मुसलः अविश्रेण्यः उत्तरः गण्डेषुः उदलः मन्वितः वैकार्णिः स्थूलबिन्दुः इति बोधायनोक्ताः ॥

आग्रायणः मौपकः रतिकायनः औपप्रतिमः सगगोजः वीराध्वरः फणी साराहरेयः कैरजः चैकेतः आसुरायणः मातृप्तः त्रैकिः भौवनः शीघ्रकः आहुगायकः देवयातः सोमयागः उपत्पायविः चेदुः गव्यायनः शत्रेहिः काचायनः चक्रधर्मी त्रैपणयः हार्करिः हास्तिः वात्स्यः पाणिः हासलायनः अन्यकृतः बौभूलः स्ववभ्रष्टः आश्ववातायनः कौशीदकः खगदः अग्निरामायणः श्रयः महूज्यः कैकसिः काश्वहायनः द्विहायनः हस्यः सानुश्रुतः हरितायनः मानगः सोमश्रुवः इति कात्यायनोक्ताः ॥

भवनन्दिः गोष्ठायनः कीरिः हास्तिदः वात्स्यायनिः हास्तलायनिः पैललेभिः कौशीतकिः स्वापः मौपारिः वसुः बभ्रुः पौलिः ज्ञानगाधः अग्रावः सर्वः श्यामः नाशरिः क्षपः पङ्गोडलायनः काष्ठायनः मार्गवः आजिह्वायनः हास्तिकः सासिसः हारितायनः मनसः भृगुः इति मात्स्योक्ताः ॥

स्वापशान्तः वाहुकायनः नागशिराः शौकयः पावामयः ज्ञानहस्तिः भृगपौरः प्रतिश्रवः प्रातिथेयः कैजालिः काण्डवायनः कौरिह्यः चाक्रायणः कामेपानकिः वेलणिः भिक्षिः इत्येतान् कश्चिदाह ॥

एते निध्रुवास्तेषां काश्यपावत्सारनैध्रुवेति प्रवराः ।

केवलकाश्यपानां काश्यपावत्सारासितेति प्रवरा इत्याश्वलायनः । सिद्धान्तभाष्येऽप्ययमुक्तः ।

शाम्भवः मैत्रेयः रेभः एषां रेभाणां काश्यपावत्साररैभेति कात्यायनः ।

अथ शाण्डिलाः—शण्डिलः कोहलः पाचकः वापिकः औदमेघः सौदनुः साववसः कारेयः कौकण्टकिः तैक्षमाहुकिः बहूदकिः कौशिः मौञ्जायनः माणवंशः

कामशिः आयवत्सः खार्वमानयः गाङ्गायनः वात्सबलिः गोभिलः वेदायनः वात्स्यायनः बहूदरिः भागुरिः खादन्तीमुखः हिरण्यबाहुः अग्निदेहः गोमूत्रः वाक्यशठः जानन्धरिः जालन्धरिः धन्वन्तरिः इति बोधायनोक्ताः ॥

सम्पचः चलुभिः उपलोधः जलन्धवः बहुमिन्धः हैपुरः पर्वमौञ्जिमः गर्दभीमुखः चेरलः केशीभः कोकिलः कुहवः हकसण्डः देवजातिः तृणबिन्दुः कौवलिः उत्तरः सुकेतुः कौरुण्डजः शाखिलः बैदानवः सौदानवः पैप्पलः पूपरिः वारिः इति कात्यायनोक्ताः ॥

सम्पातिः बलिः सुजातिपूरः पर्यश्वकर्दमः करातः कश्यपः सुकेतुः तदपांसः स्ववसुः महाकोरलयः अयः वेदयातिः पैप्पलादिः तोवरिः इति मात्स्योक्ताः ॥

जावंशः शत्रुगायनः डाजः मुञ्जमयूरः मागीदर्भः कुहनः चटायनः गृहलः मङ्गलः मुञ्जालः इति काश्चित् ।

एषां काश्यपावत्सारशाण्डिल्येति वा काश्यपावत्सारदेवलेति वा काश्यपावत्सारासितेति वा शाण्डिल्यासितदेवलेति वा प्रवराः इति बोधायनोक्ताः । काश्यपासितदैवलेति वा काश्यपदेवलासितेति वा देवलासितेति द्वौ वेत्यापस्तम्बः ॥

लौगाक्षींस्तु द्व्यामुष्यायणेषु वक्ष्यामः । एषां काश्यपानां सर्वेषामविवाहः ॥

इति काश्यपाः.

अथ वसिष्ठाः—ते पञ्च । वसिष्ठाः कुण्डिनाः उपमन्यवः पराशराः जातुकर्ण्याश्चेति ।

तत्राद्याः—वैतालकिः हरकिः सावखाः गौरिश्रवाः आश्वलायनः कपिष्ठलः सौचिवृक्षः व्याघ्रपादः काम्यकायनिः वाटक्यः गायनिः नयाप्तः जातूकर्ण्यः औडुलोमिः कोभोजिः कौलायनः सुदहरितः काण्डवृद्धिः सौपवसायनः लोमायनः स्वस्त्यः कारीषितः पार्णकायनः पार्णवल्कः देवनः गौरव्यः विश्वायनः वाहकथिः अविक्षितिः स्वपाजिः पूतिमायः सप्तवेलः वासिष्ठः इति बोधायनोक्ताः ॥

औपवतः आपगवः नैगलः सात्वलायनः औडुलोमिः वटीकरः गोपायनः धौवपिः नाकव्यः सत्वः वाह्यकृत् कालोहविः पलाशिः काकुरिः आपः स्थूणः शितिवृक्षः ब्रह्मपुरेयः स्वस्तिकरः माण्डुलिः गौधलिः कौविधिः मालोहादिः सौमनसायनः ब्रह्मबलिः चौलिः पौरश्रवः याज्ञवल्क्यः पार्णवल्क्यः इति कात्यायनोक्ताः ॥

वैष्णव्यः आध्वलः सुदारकः दासव्यः तालिसव्यः वाग्रधिः चाण्डालिः गौडलिः व्यालोहविः सुनाश्वः सुपाचिः दिदिः वोलिः पैडवः इति मात्स्योक्ताः ॥

रावणिः कौलिः मिथोवलिः सुपत्विः भालिसिः अर्दुनाक्षिरिति केचित् ॥

एषां वासिष्ठेत्येकः प्रवरः । वासिष्ठैन्द्रप्रमदाभरद्वस्वित्यापस्तम्बः ॥

अथ कुण्डिनाः—कुण्डिनः लोहायनः गुग्गुलिः अश्वत्थः तैकर्णिः तिन्दुः अचिरवलः अश्मरथ्यः वाहुः कौक्रोल्यः सामङ्गलिः कापटुः पेटकः नवग्रामः हिरण्याक्षायणः पैप्पलादिः सौगिः अक्षितः माध्यन्दिनः सौपक्षिः स्वातिः इति बोधायनोक्ताः ॥

औपस्वस्थः स्वसुलिः स्वलोक्यः लोहिः विश्वंकशः त्रैभृङ्गः मौद्गलः लुलायः मित्रावरुणः इति कातीयाः । पालोहः गोपनः इत्यपि काश्चित् ।

एषां वासिष्ठमैत्रावरुणकौण्डिन्येति त्रयः प्रवराः ।

अथोपमन्यवः—उपमन्युः उपगवः माण्डलेखिः कापिञ्जलः जालागतः जयोलोकः त्रैवर्णः पापागिरिः सुराक्षः सारासः लाहविः महाकर्णायनः वालशिखः औद्राहयानिः वलायनः भागवित्तायनः कुण्डोदरायणः लाक्ष्मणेयः कावाधिः वाकाश्विः अनुक्षरिः आलवायनः कपिकेशः इति बोधायनोक्ताः ॥

शैलालिः कौरव्यः दावालः सिरिः मारायणः भागहिः कौरकृत् भागुरायणः शावार्यः कशानेयः औलपिः आपः साङ्ख्यायनः दुहितः मायशराविः दासकायनः वाह्यवाक्यः गोरथः शौण्डोदरिः प्रालम्बायनः साह्यापत्यः दशेरकः पादकायनः औपलेखिः ब्रह्मवलिः पार्णगारिः इति कातीयाः ॥

महाकण्वः क्रोधिनः कौमारः गवणः कोक्षः कृष्णः तरोगणः शांकधियः शाकहयः काण्वः उपलयः शाकायनः सुहकः दाकायनः बालकिः वाकिः श्यामिः उद्राहः वलेखलः मानेयः इति मात्स्ये ॥

रास्फेयः गोपेदन्तिः करचक्रदामिः कारपुलिः कौलकिः शाप्यायनः रौक्षः हेममणिः नाहुलिः वाहुलिः काजपायनः मुञ्चकायनः पादकायनः स्काम्भायनः पाथश्रवाः मारायणः धातुहिः इत्यपि काश्चित् ।

एषां वासिष्ठेन्द्रप्रमदाभरद्वस्विति बोधायनः । वसिष्ठाभरद्वस्विन्द्रप्रमदेत्याश्वलायनः आभरद्वसुवासिष्ठेन्द्रप्रमदेति वेति मात्स्ये ॥

अथ पराशराः—पराशरः कण्डूः शिवाजिः वाजिमतिः भैमतायनः गोवालिः प्रारोहिः वैकलिः ह्लाक्षिः कौमुदिः हार्यश्विः खल्वायनिः गोपिः काङ्किः स्यातिः वारुणिः भालुक्यः वादरिः काह्वायनः क्रौंकुशारिः क्रैमतिः कृष्णाजनिः कपिमुखः श्यामायनिः श्वेतयूपिः पौष्करसादिः गार्गायनिः वार्ष्णेयः श्यामेयः श्रौतहिः सहचौलिः इति बोधायनोक्ताः ॥

वाहनिः जैमिः आविष्टायनः श्लोकमयः इषीकहस्तः वाहिः प्रालिः कौकसादिः पौकरसादिः माण्डिकः वादरिः स्कभिन्नः क्षौमिः कपिस्रोतः अकम्पन्यः तपः व्याप्यायनिः वैरिणेयः बैल्वयूपिः तरणिः इति लौगाक्षिसूत्रे ॥

पार्थिवयः कौरजायनः कार्ष्ण्यायिनः शौकि श्यानयानिः पटिकः वधिकः खाल्यायनः हर्याविः शिबिः इत्यपि कश्चित् । एषां वासिष्ठशाक्त्यपाराशर्येति प्रवराः ॥

जातूकर्ण्यः बौधिः पाटलि इति कातीयाः । वसिष्ठः वज्रपादः अत्यः इति मात्स्ये । दयालुः सौमिकः खगः इति कश्चित् ।

एषां वासिष्ठात्रिजातूकर्ण्येति प्रवराः । एषां वासिष्ठानां सर्वेषामविवाहः । जातूकर्ण्यस्यात्रिभिरपीति स्मृत्यर्थसारे । संकृतिपूतिमाषौ वासिष्ठावपि द्विगोत्रेषु वक्ष्येते ॥

इति वासिष्ठाः.

---

अथागस्त्याः—अगस्तिः विशालाद्यः खलायनः औपदहनिः कुलमाषः दण्डिः लावणिः लाव्यः वरण्डिः वैरण्डिः बुधोदरिः सैवपथिः शाल्यातपः मौञ्चिकिः पार्थोद्गतः हारिग्रीवः गौहिः मौसलिः इति बोधायनः ॥

उपकुलः सुकलापकारी वारिणिः क्षौमितिः निर्वैरिणः सौरभागः गौव्याधिः हैमवाहः अर्बुदः मेदिनीपञ्चकः देवतः अगवः शैरिषः वित्तपः अवतानः इति कात्यायनोक्ताः ॥

सैवकः सौभरायणः वैकर्णायनः गार्ग्यायनः प्राचार्यः शालङ्कायनिः वाह्यायनः वाह्यकिः साकाक्षिः तण्डिः लाज्यामतिः हृद्रोगः प्रादुराक्षिः रम्याक्षिः पण्डोध्वतः कुडयाक्षिः रोवायुधः पटलः वह्योगदिः वैरण्डिः दामोष्णीषः तन्नरः सौम्यायनिः ब्राह्मण्यः पुत्रिः वासिष्ठायणः शारङ्करः पाण्डः वचनः इति कश्चित् ॥

अगस्त्यदार्ढ्यच्युतैध्मवाहेति त्रयः । अगस्त्य एको वेत्यापस्तम्बः । अगस्तिः

करम्भिः कुरुनाड्यः कौसल्यः खगेवसः मयोभुवः गान्धरायणः पुलस्तिः पुलहः क्रतुः वम्स्तवः इत्येषामागस्त्यमाहेन्द्रमायोभुवेति कात्यायनमात्स्यौ । सोमवाहानामागस्त्यदार्ढ्यच्युतसोमवाहेति । साम्भवाहानामागस्त्यदार्ढ्यच्युतसाम्भवाहेति । यज्ञवाहानामगस्त्यदार्ढ्यच्युतयाज्ञवाहेति । एते चत्वारो बोधायनोक्ताः । पौर्णमासः पारणश्चेति तयोरागस्त्यदार्ढ्यच्युतदार्भवाहेति । क्रः शाक्रः शुकः हंसः चापः भापः हिमोदकः हेमवर्मिः इत्येषामागस्त्यहैमवर्चहैमोदकेति । विमिलिः मामिकिः पाणिकः पिनायकः नन्दिः मिलिः चिलिः एषामगस्त्यपैनायकपाणिकेति त्रयः एते त्रयो गणाः क्वचित् एषां सर्वेषामागस्त्यानामविवाहः । यद्यपि मञ्जर्यां मात्स्ये वसिष्ठागस्त्ययोर्मित्रावरुणोत्पन्नत्वेन द्वयोर्भ्रातृत्वात्परस्परमविवाहः प्राप्नोति । तथाऽपि भिन्नगोत्रत्वस्मरणादेव विवाहो भवति । अन्यथा अन्यतरगोत्रनिषेधेनैव सिद्धेरितरगोत्रनिषेधो व्यर्थस्स्यादित्युक्तं प्राक् ॥

इत्यागस्त्याः.

अथ द्विगोत्राः—तत्र भरद्वाजगणस्थेन शुङ्गेन विश्वामित्रगणस्थस्य शिशिरेः क्षेत्रजनितः शौङ्गशैशिरिः पुत्रः तस्य शौङ्गशैशिरेः आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति पञ्च आङ्गिरसकात्याक्षीलेति त्रयो वेत्यापस्तम्बः । आंगिरसबार्हस्पत्यभारद्वाजशौंगशैशिरेति कात्यायनः एषां सर्वेषां भारद्वाजैर्वैश्वामित्रैश्चाविवाहः । सगोत्रत्वात्सप्रवरत्वाच्च ॥

अथ संकृतयः—संकृतिः पूतिमाषः मलकः पौलः तण्डिः शम्बुः शैवगवः परिभवः तारकाद्यः हारग्रीवः वैतलेयः शेषयः श्रोतायनः आग्रायणः आर्षेभिः चान्द्रायणः आध्रापिरिति बोधायनोक्ताः ॥

सौपवनः जानकिः तैरन्धः सूतव्यः सूपिभिः चासरायणिः सहिः गांगिलोगाक्षिः तालः नगहिरिति कात्यायनः ॥

भिल्लातिः विभातकिः मनुसम्बन्धिः तैलः काद्रव्यः हारिः गलागलिः वैयाघ्रपदः शालायनः इति मात्स्योक्ताः ॥

एषामाङ्गिरसगौरवीतसांकृत्येति । अन्त्ययोर्व्यत्ययो वा । एषां केवलाङ्गिरोमध्ये वासिष्ठगणमध्ये च बोधायनापस्तम्बादिभिः पाठाद्वासिष्ठस्य शक्तेः पक्षे वरणाच्च स्वगणस्थैः वसिष्ठैश्चाविवाहः इति नारायणवृत्तौ मञ्जर्यां चोक्तम् । एवं

लौगाक्ष्यादिभिरहर्वासिष्ठैरप्यविवाहः, वासिष्ठत्वाविशेषात् । कात्यायनाश्वलायनादिभिः प्रसिद्धभरद्वाजकपिसन्दंशमध्यपाठात्तस्य च प्रयोजनान्तराभावात्केवलाङ्गिरोमध्यपाठस्य बाधनादनुपयोगेन वैयर्थ्याद्भारद्वाजैरप्येषामविवाहः इति केचित् । अतश्चैषां शौङ्गशैशिरैरप्यविवाहः, तेषामपि भरद्वाजत्वात् । एषां काश्यपेषु पाठात्तैरप्यविवाहः इत्युक्तं प्रयोगपारिजाते । संग्रहे—

काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च ।
संकृतेः पूतिमापस्य विवाहो न परस्परम् ॥

इति । एषां गौतमैरप्यविवाहः इति केचित् । तन्न, द्विगोत्रत्वस्मृतिविरोधात् ॥

अथ लौगाक्षयः—लौगाक्षिः दार्भायणः मैत्रवाहः देहकालेयः कापुटिः यकसयः भालङ्कायनिः परस्ताविः औदकिः कौनाभिः सौलिः सैतकिः सारम्भारिः आविष्टिः रैषिकिः सौरसुखिः सरन्ध्रिः चोष्यनः योधकालकिः कलः वाचयः अञ्जयः इति बोधायनोक्ताः ॥

आनष्टिः फाजलिः शाकबलिः रावलिः सौकिः राजवाहिः राजसेकिः सामुचिः कापुटिः पिंगाक्षिः शरद्वन्तः इति कात्यायनोक्ताः ॥

भाकुटिः तानिः राजबलिः सैरिंपिः औदवाहिः औपकत्सकिः माम्राकिः साद्यः सजातपिः सौषतः इति मात्स्योक्ताः ॥

एषां काश्यपावत्सारवासिष्ठेति काश्यपावत्सारासितेति वेति बोधायनः । एत एवाहर्वासिष्ठा नक्तंकाश्यपाः । दिनकर्मणि वासिष्ठप्रयुक्तप्रयाजादिभाजः । रात्रिसाध्ये च राक्षोघ्ने कर्मणि कश्यपप्रयुक्तकार्यवन्त इत्यर्थः । प्रवरमञ्जर्यां एषां सर्वैर्वासिष्ठैः काश्यपैश्चाविवाहः । एषां संकृतिपूतिमाषादिभिरप्यविवाहः तेषामपि वासिष्ठगोत्रत्वादित्युक्तं तु प्राक् । एते द्विगोत्राः प्रवरमञ्जरीकारादिभिस्सर्वैरुक्ताः । अन्यत्र त्वन्येऽपि द्विगोत्रा उक्ताः । प्रयोगपारिजाते, यथा संग्रहे—

जमदग्निगणस्यापि विश्वामित्रगणस्य च ।
न देवरातगोत्रेण विवाहस्स्यात्परस्परम् ॥

इति । यद्यपि देवरातो बोधायनादिसूत्रेषु क्वापि जामदग्न्येषु नोक्तः तथाऽपीदं

बीजं ज्ञेयम् । ऋचीकाख्यस्य जमदग्निः ज्येष्ठः पुत्रः मध्यमः शुनश्शेफः स देवैस्त्रातः अतो देवरातसंज्ञो विश्वामित्रपुत्रोऽभूत् । एतच्च हरिवंशे स्पष्टम्—

और्वस्यैवमृचीकस्य सत्यवत्यां महायशाः ।
जमदग्निस्तपोवीर्याज्जज्ञे ब्रह्मविदां वरः ॥
मध्यमश्च शुनश्शेफः शुनःपुच्छः कनिष्ठकः ।

इत्युक्त्वा—

देवैर्दत्तः शुनश्शेफो विश्वामित्राय भार्गवः ॥
देवैर्दत्तस्स वै तस्माद्देवरातस्ततोऽभवत् ॥

इति एतच्च भारते रामायणे चोक्तम् । बह्वृचब्राह्मणेऽपि—'स ह देवरातो वैश्वामित्र आस । तस्यैते कापिलेया बाभ्रवाः' इति । यद्यपि शुनःपुच्छोऽपि ज्येष्ठ उक्तः, तथाऽपि जमदग्नेरेव नामान्तरमिति ज्ञेयम् । शुनःपुच्छश्च श्रुत्युक्तः शुनो लांगूलस्य पर्यायः अतोऽस्य जामदग्न्यैर्वैश्वामित्रैश्चाविवाहः । भागवते नवमस्कन्धेऽप्येवम् । अतो येनकेनचिदुक्तं देवरातस्य जामदग्न्यत्वं चिन्त्यमिति तदेतच्चिन्त्यमिति संक्षेपः । जातूकर्ण्यानां वासिष्ठैरत्रिभिश्चाविवाहः । तस्यात्रिगणेष्वपाठेऽपि तत्प्रवरेष्वत्रेर्ग्रीयमाणत्वात् । एषां लौगाक्षिभिः संकृत्याद्यैश्चाविवाहः वासिष्ठत्वात् । धानञ्जयानां वैश्वामित्रैरत्रिभिश्चाविवाहः । कापिलानां वैश्वामित्रैर्भारद्वाजैश्चाविवाहः ॥

ननु कापिलस्य वैश्वामित्रेष्वपाठात् कुतस्तन्निषेध इति चेत् ॥ अत्र ब्रूमः—कापिलो भारद्वाजमध्ये ऋक्षेपूक्तः । बह्वृचब्राह्मणे 'तस्यैते कापिलेया बाभ्रवाः' इति वचनात्कपिलस्य विश्वामित्रसम्बधोऽप्यवगम्यते । न ह्यसति कपिलस्य तत्सम्बन्धे कापिलेयस्य स युक्तः अतः कपिलस्यापि भरद्वाजापत्यत्वात् तैर्भारद्वाजैश्च सहाविवाह इत्युक्तमिति दिक् ॥

कतानां सर्वैर्भारद्वाजैर्वैश्वामित्रैश्चाविवाहः । एते द्विगोत्राः स्मृत्यर्थसारोक्ताः । अत्रेः पुत्रिकापुत्राणां वामरथ्यादीनां वासिष्ठैरत्रिभिश्चाविवाहः । सर्वं चैतदुक्तं स्मृत्यर्थसारेऽपि—

संकृतीनां द्विवंश्यत्वाद्वासिष्ठैश्च चतुर्विधः ।
सावगायः सगोत्रत्वात् प्रवरैक्याच्च नान्वयः ॥
वासिष्ठः काश्यपैर्नित्यं लौगाक्षीणामनन्वयः ।

अहर्वासिष्ठतोक्तेस्तु वामरथ्यादयास्तथा ॥
तथैव जातूकर्ण्याश्च वासिष्ठैरत्रिभिस्सह ।
कपिलानां भरद्वाजैर्वैश्व मित्रैश्च नान्वयः ॥ इति ।

यत्तु विश्वनाथदेवेनोक्तं—सर्वेषां भारद्वाजानां उचथ्यप्रवरवतां गौतमानां च न विवाहः विष्णुपुराणे बृहस्पतेस्सकाशात् भरद्वाजस्य ममतासंज्ञकौचथ्यक्षेत्रोत्पत्तिश्श्रूयत इति ।

ममतासंज्ञकोचथ्यक्षेत्रे वीर्याद्बृहस्पतेः ।
भरद्वाजः समुत्पन्न इति विष्णुपुराणके ॥
श्रवणात् क्षेत्रजत्वेन भरद्वाजस्य तद्भवैः ।
भरद्वाजैश्च सकलैश्शौङ्गशैशिरिभिस्तथा ॥
औचथ्यप्रवरो येषां गौतमानां भवेत्तु तैः ।
सकलैर्गौतमैर्युक्तो नोद्वाह इति भाति मे ॥

इति । अत्र कश्चित्समादधे—

क्रियाभ्युपगमात्क्षेत्रं बीजिने यश्च [ यत्प्र ] दीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षैत्रिक एव च ॥
फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥

इति मनुना संवादे एव द्व्यामुष्यायणत्वोक्तेर्न परक्षेत्रोत्पत्तिमात्रेण तत्त्वं येन गोत्रद्वयवर्जनं स्यात् न वा तत्र तत्त्वे प्रमाणमस्ति विष्णुपुराणे संवादानुक्तेः । प्रत्युत सूत्रेषु तद्वचनाक्ति । बोधायनस्य च पूर्वैर्गौतमैरुत्तरैश्चाविवाहोक्तिरेव मानमस्ति । किं च गौतमस्य सप्तर्षित्वेन सगोत्रत्वात्सर्वैस्तैरविवाहापत्तिः नौचथ्यैरेवेति तत्रात्यय एव बाणो भवन्तं प्रहरतीति न्यायः । संवादाभावे बीजिनो मा भूत् क्षेत्रिण उचथ्यस्य सगोत्रः स्यात् गवादौ पाण्डवादौ च तथा दर्शनात् बोधायनोक्तेः सामान्यत्वेन तद्भिन्नपरत्वात्सर्वैर्गौतमैरविवाह इति । इष्टापत्तौ मूकत्वापत्तेः । अतोऽत्रिवंशत्वेऽपि विश्वामित्रवद्गोत्रान्तरत्वस्मृतेरविवाह इति तत्त्वम् ॥

एवं दत्तकपुत्रकृत्रिमस्वयंदत्तपुत्रिकादीनामुत्पादकपालकयोः पित्रोः गोत्राभ्यां सहाविवाहो द्रष्टव्यः तुल्यन्यायत्वादिति प्रवरमञ्जर्यामुक्तम्, न तु नियोगोत्पादि-

तद्व्यामुष्यायणमात्रस्येदं गोत्रद्वयवर्जनमिति भ्रमितव्यम्, मञ्जर्यां दत्तक्रीतादीनामप्युदाहृतत्वात् तेषां च तत्त्वाभावात् । प्रयोगपारिजातेऽपि संग्रहे—

द्व्यामुष्यायणका ये च दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाह्याः शौङ्गशैशिरयो यथा ॥

इति । अत एव नारायणवृत्तौ दत्तकादीनां 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च ' इति गौतमवचनेन बीजकुले विवाहप्राप्तावपि सगोत्रत्वान्निषेधः शौङ्गशैशिरिग्रहणस्य प्रदर्शनार्थत्वादित्युक्तम् । प्रवरमञ्जर्यां कात्यायनोऽपि—अथ ये दत्तक्रयक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहणादार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति यथैते शौङ्गशैशिरयो यानि चान्यान्येवं समुत्पत्तीनि कुलानि भवन्तीति ॥

यत्तु—

गोत्ररिक्थे जनयितुर्न भजेद्दत्तिमस्सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतस्स्वधा ॥

इति मनुवचनं तच्छ्राद्धादिविषयम् । उत्तरार्धे तथैवोक्तेः । अत एव स्मृतिचन्द्रिकायां ' असपिण्डा च या मातुरसगोत्रा च या पितुः । ' इत्यत्र पितृशब्देन दत्तकस्य जनक एवोक्तः अन्यथा पितृशब्दवैयर्थ्यात् ।

ये तु—यथा क्षेत्रज अत्रोत्पन्नः पुत्र आवयोरिति संमत्या द्व्यामुष्यायणः, अन्यथा क्षेत्रिण एव । तथा दत्तकोऽप्यावयोरिति भाषया दत्तश्चेत् द्व्यामुष्यायणः अन्यथा ग्रहीतुरेव । तत्राद्यस्य गोत्रद्वयं अन्त्यस्य तु ग्रहीतुरेव गोत्रं वर्ज्यं, न जनकस्य पूर्वोक्तमनुवचनादित्याहुः । तत्र मूलं त एव प्रष्टव्याः । दानस्यानिष्पत्तेः किंच पुत्रान्तरसत्त्वे संवादो व्यर्थः । एकपुत्रस्य च 'न त्वेवैकं पुत्रं दद्यात् ।' इति वसिष्ठनिषेधादेव न दानं, स हि दृष्टार्थः । सम्प्रतिपत्तौ च दातृपुत्रत्वानपगमान्निषेधो व्यर्थः । अदृष्टार्थत्वे तु सपिण्डायां भार्यात्ववत् दत्तकत्वं नोत्पद्यत इति यत्किञ्चिदेतत् । एवं प्रवरो वर्जनीयः । यत्तु कश्चित् जनकप्रवरस्यानिषेधमाह, तदसत् विवाहे गोत्रनिषेधो न तत्प्रयुक्तः ॥

इति द्विवंश्याः ।

अथ क्षत्रियविशाम्—तत्रापस्तम्बाद्यैः पक्षद्वयमुक्तम् । मानवैलपौरूरवसेति प्रवरः क्षत्रियाणां मनुगोत्रं, वैश्यानां तु भालन्दनवात्समाङ्कीलेति प्रवरः भलन्दन-गोत्रमिति, वात्सप्रीत्येव वा । अन्यस्तु पुरोहितगोत्रप्रवरावेव तयोरिति । अयमेव विज्ञानेश्वरानुमतः सिद्धान्तः 'सपुरोहितप्रवरास्त्वेवं न्यायेन' इत्यापस्तम्बोक्तेश्च । न्यायेनेति। सर्वेषां मनुगोत्रत्वेन सगोत्रत्वाद्विवाहाप्रसङ्गः, मनोः ऋष्य [न] न्तर्गतेः गोत्रत्वाभावादित्यर्थः । तस्मात् क्षत्रियवैश्ययोः पुरोहितगोत्रप्रवरौ वर्ज्याविति सिद्धम् ॥

स्वगोत्राज्ञाने तु सत्याषाढः—अथानाज्ञातबन्धोः पुरोहितप्रवरेण वा आचार्य-प्रवरेण वेति । यत्तु 'गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमिष्यते' । इति तदाचार्य-गोत्राज्ञाने श्राद्धादिविषयं ज्ञेयम् ॥

यदपि मीमांसकाः 'अत्यार्षेयस्य हानं स्यात्' इत्यत्र 'एकं वृणीते द्वौ वृणीते इत्युदाहृत्य 'त्रीन्वृणीते' इति विधिः । एकमित्याद्यवयुत्यानुवाद इत्युक्तं पञ्चार्षे-यषडार्षेयादेरपि त्रयाणामेव वरणे नाधिकार एव, न ह्येवमस्ति त्र्यार्षेय एवाधि-क्रियते इति । तदपि नाद्रियन्ते कल्पकाराः । ते हि 'यथर्षि मन्त्रकृतो वृणीते' इति श्रुतेरेकार्षेयद्व्यार्षेययोरप्यधिकारमाहुः । कथं तर्हि 'न चतुरो वृणीते न पञ्चातिवृणीते' इति निषेधः । न हि प्रवराः पठ्यन्ते ॥

उच्यते—तस्य द्विगोत्रप्रवरत्वात् । तथाहि—आश्वलायनेन द्विगोत्रानुक्त्वा 'तेषामुभयतः प्रवृणीते एकमेकतो द्वावितरतो द्वौ वैकतस्त्रीनितरतो न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरः' इति द्विगोत्रविषयो न चतुर इत्यादि निषेध उक्तः । नारायणवृत्तावपि मीमांसकमतमुपन्यस्य 'यथर्षि मन्त्रकृतो वृणीते न चतुरो न पञ्चाति वृणीते' इति श्रुत्यन्तरवशादत्र्यार्षेयस्याप्यधिकारः । तत्र सर्वेषां वरणे प्राप्ते न चतुर इत्यादिना चतुरादिनिषेध इति कल्पकारा इत्युक्तम् । न च वैधस्य निषेधे विकल्पापत्तिः । 'न प्रथमयज्ञे प्रवृञ्ज्यात् दीक्षितो न ददाति न जुहोति' इतिवत्सावकाशनिरवकाशन्यायात् ॥

अथैतत्प्रायश्चित्तं मदनपारिजाते—

परिणीय सगोत्रां तु समानप्रवरां तथा ।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥

आपस्तम्बः—

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते ॥

शातातपः—

समानप्रवरां कन्यामेकगोत्रामूढ्वा मातृवत्परिपालयेत् ॥

अत्रायं निर्णयः—सगोत्रादिविवाहमात्रे भ्रमाज्जाते चान्द्रायणम् । 'मातुलस्य सुतामूढ्वा' इति पूर्वोक्तवचनात् । अत्र प्रतिगमनं चान्द्रायणावृत्तिरिति मञ्जरीकारः । त्यागश्चोपरिभागे । 'सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात्' इति सुमन्तूक्तेः । इदं ब्राह्मण्याः । 'ब्राह्मणीं न त्यजेन्मातृवत् भगिनीवद्बिभृयाद्गर्भो दुष्यति स कश्यप इति विज्ञायते' इति बोधायनेन विशेषोक्तेः एतत् अज्ञानतः, अमत्येति निर्देशात् ॥

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ॥

इति । यमेन कामकृतगर्भस्य चण्डालत्वस्मृतेश्च । अत्राज्ञानात्सकृद्गमने चान्द्रायणम् । ज्ञानात् कृच्छ्रद्वयम् । अज्ञानादेकादिनेऽभ्यासे त्रैवार्षिकम् । ज्ञानतस्तु एकरात्राभ्यासे षड्वार्षिकम् । एकरात्रादूर्ध्वमकामतोऽत्यन्ताभ्यासे नववार्षिकम् । तत्रैव कामतो मरणान्तिकमग्निप्रवेशरूपं, एतद्बहुकालाभ्यासेऽनवच्छिन्नाभ्यासे । अल्पकालाभ्यासे तु द्वादशवार्षिकम् । रेतस्सेकादर्वाङ्निवृत्तौ 'मासोपवासश्चान्द्र' इत्यादि मिताक्षरायां स्मृत्यर्थसारे च परिश्रमवतां सुलभमिति दिक् ॥

इति श्रीकमलाकरभट्टकृतं प्रवरदर्पणं समाप्तम् ।

श्रीगणेशाय नमः ।

पट्टाभिरामशास्त्रिकृतः

# गर्गभरद्वाजकुलविवाहविचारः ।

अत्र तावत्सर्वेषां ब्राह्मणानां विवाहसाधुताऽसाधुतानिर्धारणोपयुक्तः सयुक्तिकः प्रवरशास्त्रारम्भ इति सार्वजनीनमेतत् ।

तत्र भारद्वाजानां गार्ग्याणां च मिथो विवाहस्साधीयान्न वेति सन्देहे प्राञ्चः—

भारद्वाजस्त्वग्निवैश्योर्जायनौ शैन्यशैशिरी ।
सर्वस्तम्बः कुशश्शुङ्गो गार्ग्याङ्गिरसवान्दनाः ॥
आरकीलो मातवचसो बार्हस्पत्यस्तथा कतः ।
ऋक्षस्सप्तदशान्योन्यं न कुर्युः पाणिपीडनम् ।

इत्यादिना गार्ग्यसामान्यस्य भारद्वाजैर्विवाहो निषिद्ध्यते इति वदन्ति ।

अत्र परे प्रत्यवतिष्ठन्ते—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

इत्यनेन पञ्चप्रवरगार्ग्यस्यैव विवाहः प्रतिषिद्धः, न तु त्रिप्रवरस्यापि, तस्य ऋषिद्वयानुवृत्तिरूपबाधकाभावात् । तथाहि—आङ्गिरसबार्हस्पत्यभारद्वाजेति त्रिप्रवरो भारद्वाजानाम् । आङ्गिरसगार्ग्यशैन्येति त्रिप्रवरो गार्ग्याणाम् । तथा च अङ्गिरोरूपैकर्ष्यनुवृत्तावपि ऋषिद्वयानुवृत्तिलक्षणबाधकविरहेण न तयोर्विवाहनिषेधः पदमादधाति । आङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति पञ्चप्रवरसंवलितस्य गार्ग्यस्य तु पञ्चानामिति निषेधः सर्वथा दुस्समाधेयः । एतेन—'भारद्वाजस्तु' इति वचनेन तयोर्विवाहप्रतिषेधमादधानः परः प्रत्युक्तः, 'भारद्वाजस्तु' इति वचनस्य समानप्रवरत्वपर्यवसानद्वारैव निषेधबोधकत्वावश्यंभावेन पञ्चार्षेयगार्ग्य एव तत्पर्यवसानेन तद्वचनस्य सामान्यविषयस्यापि पञ्चार्षेयगार्ग्यविशेषपरत्वादिति ॥

अत्र निष्कर्षानुसारिणः प्रवदन्ति—यदिदमुक्तं 'त्रिप्रवरगार्ग्याणां समानप्रवरत्वादिदोपलेशविरहेण भवत्येव भारद्वाजैस्तेषां विवाहः' इति तदिदं धर्मशास्त्रापरि-

शीलनमूलं अज्ञानविजृम्भितम् । तथाहि—विवाहप्रतिषेधहेतवो दोषाः समानप्रवरत्वसगणत्वादयः । समानप्रवरत्वं च—स्वप्रवरघटकऋषिद्वयादिघटितप्रवरकत्वम् । सगणत्वं तु—एकस्वामिकसमुदायघटकत्वम् । एवं च त्रिप्रवरगार्ग्यस्य भारद्वाजैस्समानप्रवरत्वविरहेऽपि सगणत्वं दुर्निवारम्, सर्वेषामेव गार्ग्याणां भारद्वाजगणान्तर्गतत्वात् । न च त्रिप्रवरगार्ग्यस्य सर्वथैव भारद्वाजगणानन्तर्भावेन कपिगणानुप्रवेशेन च कुतस्सगणत्वदोषशङ्केति वाच्यम् । भारद्वाजगणान्तःप्रविष्टगार्ग्यातिरिक्तस्य कपिगणान्तर्गतगार्ग्यस्य सत्त्वे प्रमाणाभावात् । अन्यथा हरितादिगणानुप्रवेश एव किं नाभ्युपगम्येत । नन्वापस्तम्बेन 'प्रवरान् व्याख्यास्यामः' इत्युपक्रम्य भृगुगणाभिधानानन्तरं अङ्गिरोगणाभिधानावसरे स्वतन्त्रकपिमभिधाय 'अथ गर्गाणां त्र्यार्षेय आङ्गिरसगार्ग्यशैन्येति । शिनिवद्गर्गवदङ्गिरोवत्' इति त्रिप्रवरस्य गार्ग्यस्याभिधानात् यदनन्तरन्यायेन तस्य स्वतन्त्रकापिगणानुप्रवेशमीक्षामहे, इति चेत्तथाऽपि स भारद्वाजगणान्तर्भूत इत्येव वक्तव्योऽर्थः । अत एवैतद्भ्रमनिरासायैव 'भरद्वाजमु हैकेऽङ्गिरसस्थाने' इति भारद्वाजघटितमेव प्रवरं प्रावोचत् भगवान् सूत्रकारः । कथमन्यथा गणान्तरानुप्रविष्टस्य भरद्वाजघटितप्रवरप्रकारः प्रामाणिकस्स्यात् । एतेन—सूत्रकारेण 'एके' इति पक्षभेदप्रतिपादनेन स्वानभिमतत्वद्योतनादेतत्सूत्रानुसारिणामापस्तम्बीयानामस्माकं भरद्वाजघटितपक्षान्तरप्रवरो नापराद्ध्यतीति केषांचित्प्रलपितमप्यपास्तम् । एतस्य भारद्वाजगणप्रवेशांशे सूत्रकारस्यानभिमत्यभावात् । किं तु भारद्वाजस्याप्याङ्गिरोगणानुप्रविष्टत्वेन तद्धेतोरिति न्यायेन अंगिरोघटितप्रवरस्यैव युक्तत्वं, न तु तद्व्याप्यभारद्वाजघटितप्रवरस्येत्यत्रैव तात्पर्यात् । एतत्सूत्रे सर्वत्र स्वगणानुप्रविष्टैरेव ऋषिभिः स्वस्वगणानुप्रविष्टानां प्रवरनियमदर्शनेन त्रिप्रवरस्य सर्वथा भारद्वाजगणाननुप्रविष्टत्वे आपाततोऽपि पक्षान्तरानुत्थानात् । अत एव हरितगणऋषिप्रवरप्रस्तावे विरूपगणऋषिप्रवरप्रस्तावे मुद्गलगणऋषिप्रवरप्रस्तावे च 'आङ्गिरसाम्बरीषयौवनाश्वेति । मान्धातारमु हैकेऽङ्गिरसस्थाने' इति, 'आङ्गिरसवैरूपपार्षदश्वेति अष्टादंष्ट्रामु हैकेऽङ्गिरसस्स्थाने' इति, 'आङ्गिरसभार्म्यश्वमौद्गल्येति । त्रिक्षुमु हैकेङ्गिरसस्स्थाने तार्क्ष्यभार्म्यश्वमौद्गल्येति' स्वस्वगणाननुप्रविष्टैर्मान्धात्रष्टादंष्ट्रत्रिक्षुभिः प्रवरप्रतिपादनं तत्रतत्र सङ्गच्छते । एवं चैकजातीयपूर्वोत्तरग्रन्थसन्दर्भस्य भावैकरूप्यावश्यंभावेन मान्धात्रादेरिव भरद्वाजस्यापि गणर्षित्वावश्यकतया भवदुक्तत्र्यार्षेयगार्ग्यस्य सर्वथा भारद्वाजगणान्तर्भाव

एवेति । अत एवैतत्सूत्रानुसारिणा सार्वभौमेन दशनिर्णये प्रवरनिर्णयप्रकरणे भारद्वाजगणाभिधानावसरे गार्ग्यसामान्यस्यैव अनुप्रवेशः कृतः, न तु विशेषोऽभिहितः। स्वतन्त्रकपिगणे च न गार्ग्यो निवेशितः, किन्तु 'कप्यङ्गिरोमहय्योरुक्षय्याश्चत्वारः परस्परं नोद्वहेयुः' इत्येवाभिहितम् । सूत्रकारस्य तु क्रमविवक्षायामैदंपर्याभावेन सूत्रान्तरे—

भारद्वाजाश्च कपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वयुर्मिथः ॥

इत्यादिना स्वतन्त्रकपीनामपि भारद्वाजगणान्तर्गतत्वेन एतन्मतभेदज्ञापनाय च भारद्वाजगणमध्ये कपिगणप्रवराभिधानानन्तरं सिंहावलोकनन्यायेन भारद्वाजगणानुप्रविष्टगार्ग्यप्रवराभिधानमित्येव ज्ञायते । क्रमस्य विवक्षितत्वे भारद्वाजगणानुप्रविष्टानां सर्वेषां प्रवरमभिधाय तन्मध्ये पञ्चप्रवरमपि गार्ग्यमभिधाय कपिगणमुपक्रमेत सूत्रकारः । अत एवाश्वलायनसूत्रे उत्तरषट्के द्वादशाध्याये 'गर्गाणामांगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । आंगिरसगार्ग्यशैन्येति वा' इति विकल्पेनैतस्यैव प्रवरद्वयमभिहितम् । तदुत्तरं च हरितकण्वगणावभिधाय कपीनां आंगिरसामहय्योरुक्षय्येति प्रवरोऽभिहितः । इतोऽपि व्यवधानात् कपिगणाननुप्रविष्टो गार्ग्य इति न किञ्चिदेतत् ।

यत्तु—गणान्तरप्रविष्टभरद्वाजघटितप्रदर्शनमात्रेण कथं त्रिप्रवरगार्ग्यस्य भारद्वाजगणानुप्रवेशः ? गणान्तरघटकऋषिघटितप्रवरघटने बाधकाभावात् इत्युच्छृङ्खलमतं तत्तुच्छम्—तथा सति कपिगणानुप्रवेश्य गार्ग्यस्य विकल्पितप्रवरद्वयपक्षे भारद्वाजगार्ग्यशैन्यांगिरोगार्ग्यशैन्यरूपऋषित्रयस्य भारद्वाजीयकतिपयऋषिप्रवरेष्वनुवृत्त्या तैस्समानप्रवरताया वज्रलेपायमानत्वापातात् । न चेष्टापत्तिः—

स्वंस्वं हित्वा गणं सर्वे विवहेयुर्गणान्तरैः ।
गणं स्वंस्वं विहायाथ विवाहश्शुभदो भवेत् ॥

अष्टमाः कपयः आमहय्योरुक्षय्याः एतेऽन्यैस्सप्तदशाभिर्विवाह्याः इत्यसंकोचेन गणान्तरप्रविष्टैस्सर्वैरेव विवाहस्य सकलनिबन्धनकाराभ्युपगतस्य प्रतिरोधापत्तेः । न च तेष्वेव निबन्धनेषूत्तरत्र—

गणान्तरेऽपि तुल्याख्या नोद्वहेयुः परस्परम् ।

इति निषेधादसंकोचेन कपिगणप्रविष्टानां सर्वेषां भारद्वाजगणप्रविष्टैर्विवाहोऽसिद्ध एवेति वाच्यम् ।

प्रदर्शयामस्तुल्याख्यान् गणभेदेष्ववस्थितान् ।
स्वतन्त्रश्चास्वतन्त्रश्च द्वौ कपी गणभेदतः ॥

इत्यनेन गणद्वयप्रविष्टानां सर्वेषां स्वतन्त्रास्वतन्त्रकपिवर्जं परस्परं विवाहसिद्धेः । यदि गार्ग्योऽपि तत्र प्रविष्टस्स्यात्, तर्हि तस्यापि कविवदेवाभिधानं स्यात् । न तथा गणद्वये पञ्चप्रवरत्रिप्रवरभेदेन गार्ग्याभिधानं दृश्यते । एवं चैतदन्यथाऽनुपपत्त्या भवदुक्तत्रिप्रवरगार्ग्यस्यापि भारद्वाजगणान्तःप्रवेशे संजातद्रढिम्नि भारद्वाजानां त्र्यार्षेयगार्ग्याणां च सगणत्वदोषः ब्रह्मणाऽपि दुष्परिहरः । न च गणाधिपत्यतिरिक्तानामेव गणघटकानां सगणत्वं दोष इति वाच्यम् । स्वस्वामिकसमुदायघटकत्वस्य स्वस्मिन्नप्यनपायात् । अन्यथा 'गणं स्वंस्वं विहाय ' इत्यत्र गणस्वामिबहिर्भावेन गणस्य वक्तव्यतापातात् । एवं धर्मप्रवृत्तौ भारद्वाजकुले केषांचित् विवाहो विधीयते ।

एतेषां तु विशेषोऽयमामहय्याभिधायनैः ।
औरुक्षय्यैश्च कपिभिर्विवाहस्त्रिभिरिष्यते ॥

इत्यत्र कपिभिरिति बहुवचनं तत्पुत्राभिप्रायेणेति तत्तन्नामाभिधानपुरस्सरं भारद्वाजकुले तेषां विवाहसिद्धिमभिधाय तद्गणं परिसमाप्य गणान्तरमुपक्रान्तम् । न हि तत्र स्वतन्त्रकपिगणे त्रिप्रवरगार्ग्यस्यानुप्रवेशः परिदृश्यते । दृश्यते च प्रत्युत 'विवाहस्त्रिभिरिष्यते' इति संख्यापरिच्छेदेन त्रिप्रवरगार्ग्यव्यावृत्तिः । एवं ग्रन्थान्तरे स्वतन्त्रकपिगणविभागप्रस्तावे—

कपिश्च महदक्षय्योरुक्षय्यौ त्रीणि केवलम् ।
अयं कपिगणस्तस्मिन् न विवाहः परस्परम् ॥

इति कपीनां विभागमभिधाय त्रित्वातिरिक्तसंख्यानिषेधं केवलशब्देनाभाषिष्ट । इत्थमेव स्मृतिरत्नावल्यां च संग्रहे स्वतन्त्रकपिविभागावसरे—

कपिर्महाय्योरुक्षय्यस्त्रयः कपिगणास्स्मृताः ।

इति कपीनां त्रित्वसंख्यापरिच्छेद एवानुमोदितः । अनया च प्रणालिकावेत्रयष्ट्या कपिगणान्तर्गतापूर्वत्रिप्रवरगार्ग्यप्रत्याशापिशाचिका दूरोत्सारिता वेदि-

तव्या । अत्र दर्शितस्थलेषु त्रित्वसंख्यापरिच्छेदः तदन्यसंख्याव्यावृत्तिश्च कपिगणप्रविष्टप्रवरघटकऋषिविषयेति जडोक्तिरपि पराहता, प्रवरघटकऋषीणां संख्यापरिच्छेदकथनस्य सन्दर्भविरुद्धत्वात् । भृगुगणमारभ्य तत्तद्गणानुप्रविष्टऋषीणामेव षोडश—सप्त—त्रयः—अष्टौ—सप्त—दश—त्रय इत्यादिना संख्याभिधानात् । तथाऽभिप्रायकल्पकप्रमाणाभावाच्च, एवमापस्तम्बसूत्रानुसारिभिः सार्वभौमैः दशनिर्णये प्रवरविवेचनप्रस्तावे भारद्वाजगणनिरूपणावसरे गार्ग्यसामान्यस्यैवानुप्रवेशो विना विशेषाभिधानमादर्शितः । कपिगणप्रकरणे तु कप्यङ्गिगमहय्योरुक्षय्याश्चत्वार परस्परं नोद्वहेयुरिति मूलभूताङ्गिरोनुप्रवेशेन चत्वार इति परिच्छेदश्चेति कपिगणानुप्रविष्टमसन्तं गार्ग्यमन्विष्यान्विष्य अलमलमत्यायासेनेति विरम्यते । यत्तु—त्रिप्रवरगार्ग्यस्य स्वतन्त्रकपिगणप्रविष्टत्वेऽपि तद्गणविभागप्रकरणे तस्य वक्तव्यत्वमनावश्यकम्, गणाधिपतितत्तुल्यप्रवराणामेव निबन्धनग्रन्थेषु विवाहप्रकरणे अवश्यं वक्तव्यतया उक्तत्र्यार्षेयगार्ग्यस्य गणाधिपकपिसमानप्रवरकत्वाभावेन तद्गणे तस्य वक्तव्यत्वाभावात् । समानप्रवराणां कप्यामहय्योरुक्षय्याणां त्रयाणामेव तद्गणे वक्तव्यत्वाच्च तेषां त्रित्वसंख्यापरिच्छेदे तदितरस्य गार्ग्यस्य व्यावृत्तावपि बाधकाभावात् । अत एवापस्तम्बसूत्रानुसारिभिः सार्वभौमैः समानप्रवरनिर्णये—

वक्ष्ये तान् संकलय्याहं समानप्रवरान् स्फुटम् ।

इति प्रथमश्लोके समानप्रवराणामेव वक्तव्यत्वं प्रति ज्ञातम् । द्वितीयश्लोकेऽपि—

ब्रवीम्यग्रे समानार्षानापस्तम्बर्षिसम्मतान् ।

इति तेषामेव तत्प्रतिज्ञातम् । उत्तरत्र तद्विवरणावसरे ' अथातस्समानप्रवरान्निर्णेष्यामः ' इति तथैव प्रतिज्ञातम् । तथैवात्रापस्तम्बोक्ता ये समानार्षेयास्ताननुक्रमिष्यामः इत्यादौ असमानप्रवराणामप्यत्र वक्तव्यताभ्रमनिरासदार्ढ्याय समानप्रवरवक्तव्यत्वमेवासकृदुद्घोषितम् । सर्वेष्वपि निबन्धनेषु विवाहप्रकरणे इयमेव रीतिरभिप्रेता, तत्राप्यसमानप्रवरानुक्तिरिति—तदपि न विचारसहम् । तथाहि—अस्मत्सूत्रे गौतमगणे गणाधिपतिर्गौतमः, तस्य प्रवरः आङ्गिरसायास्यगौतमेति । तद्गणप्रविष्टाः औशिजकाक्षीवताः तेषां त्र्यार्षेयः आङ्गिरसौशिजकाक्षीवतेति तथा तद्गणप्रविष्टाः वामदेवबृहदुक्थाः तेषां त्र्यार्षेयः आङ्गिरसवामदेवबार्हदुक्थेति । एतेषामङ्गिरोगणत्वेन ऋषिद्वयानुवृत्तेरभावात् गणाधिपतिगौतमसमानप्रवरकत्वाभावः । एते सर्वेऽपि सार्वभौमैर्दशनिर्णये विवाहप्रकरणे गौतमायास्यौचित्थ्यौशि-

जवामदेवाङ्गिरसकाक्षीवतबृहदुक्था अमी मिथो नोद्वहेयुरिति निरूपिताः । एवं हरितगणे हरितो गणाधिपतिः तस्य प्रवरः आङ्गिरसाम्बरीषयौवनाश्वेति । तद्गणप्रविष्टाः कुत्साः, तेषां प्रवरः आङ्गिरसमान्धातृकौत्सेति । एतेषामङ्गिरोगणत्वेन हरितेन ऋषिद्वयानुवृत्तेरभावात् समानप्रवरकत्वाभावः । तेऽपि हरिताम्बरीषयौवनाश्वमान्धातृकुत्साः षट् मिथो नोद्वहेयुरिति तत्रैव सार्वभौमेन प्रतिपादिताः । एवं कश्यपगणे गणाधिपतिः कश्यपः तस्य प्रवरः काश्यपावत्सारनैध्रुवेति तद्गणप्रविष्टाः शण्डिलदेवलासिताः तेषां द्व्यार्षेयः देवलासितेति तेऽपि काश्यपावत्सारनैध्रुवरेफशण्डिलदेवलासिताः सप्त मिथो नोद्वहेयुरिति तत्रैव प्रतिपादिताः । एवं वसिष्ठगणे गणाधिपो वसिष्ठः तस्य वासिष्ठेत्येकः प्रवरः तद्गणप्रविष्टसंकृतिपूतिमाषाणां त्र्यार्षेयः शाक्त्यसांकृत्यगौरवीतेति तेऽपि गणाधिपतिना वसिष्ठेनासमानप्रवराः सर्वेऽप्येते वसिष्ठेन्द्रप्रमदभरद्वसुपराशरशक्तिकुण्डिमैत्रावरुणपूतिमाषसंकृतिगौरवीताः दश मिथो नोद्वहेयुरिति दशनिर्णये तत्रैव प्रतिपादिताः तेनैव सार्वभौमेन । ततश्च—

एकद्व्यृष्यर्न्वयाच्चैक्यान्निषिद्धा ये करग्रहे ।
वक्ष्ये तान् संकलय्याहं समानप्रवरान् स्फुटम् ॥

इति प्रथमश्लोकप्रतिज्ञायां 'एकद्व्यृष्यर्न्वयाच्चैक्यात्' इति करग्रहनिषेधकानां एकर्ष्यनुवृत्तिऋषिद्वयानुवृत्तिऋषित्रयानुवृत्तिसगणत्वानां तत्तद्गणघटकेषु येषु संभवः तान् समानप्रवरान् संकलय्य वक्ष्ये इति तच्छब्दोपात्तानां पूर्वोक्तविवाहनिषेधकनिमित्तविशिष्टानां तेषां समानप्रवरत्वोक्त्या स्वप्रवरघटकऋषिद्वयादिघटितप्रवरकत्वस्वघटितगणघटकत्वान्यतरत्समानप्रवरत्वमिति सार्वभौमीयाभिप्रायो ज्ञायते । एवं च त्रिप्रवरगार्ग्यस्य कपिगणानुप्रविष्टत्वे तत्समानप्रवरकस्य तस्य सार्वभौमादिभिः तद्गणेनाभिधानात् पूर्वोक्तसंख्यापरिच्छेदादिविरोधाच्चेति न किंचिदेतत् । एवं वाध्र्यश्वस्य सूत्रकारेण एकार्षेयप्रवरोक्तिस्तस्यैव धर्मप्रवृत्तौ त्र्यार्षेयप्रवरोक्तिश्चाविरोधायप्रवरद्वयविकल्पाभिप्रायकल्पनवत् सूत्रकारीयत्र्यार्षेयगार्ग्यप्रवरोक्तिः धर्मप्रवृत्त्युक्तपञ्चार्षेयगार्ग्यप्रवरोक्तिश्च प्रवरद्वयविकल्पाभिप्राय एव वक्तुमुचितः पूर्वोक्तरीत्या कपिगणान्तर्गतगार्ग्यनिरासेन विकल्पाभिप्रायं विना अगतेः । अत एव गार्ग्यविषये एकस्मिन्नेव पञ्चार्षेयप्रवरः त्र्यार्षेयप्रवरश्च आश्वलायनसूत्रकृता स्वयं

कण्ठत एव विकल्पितः । निर्णयसिन्धौ च—'अथ भरद्वाजाः ते चत्वारः भरद्वाजः गर्गाः ऋक्षाः कपय इति । भारद्वाजानामाङ्गिरसबार्हस्पत्यभारद्वाजेति त्रयः । गर्गाणां आङ्गिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्येति पञ्च । आङ्गिरसशैन्यगार्ग्येति वा । अन्त्ययोर्व्यत्ययो वा भारद्वाजगार्ग्यशैन्येति वा गर्गभेदानां आङ्गिरसतैत्तिरिकापिभुवेति । ऋक्षाणां कपिलानां च आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति पञ्च । आङ्गिरसवान्दनमातवचेति त्रयो वा । कपीनां आङ्गिरसामहय्योरुक्षयेति । आत्मभुवां आङ्गिरसबार्हस्पत्यभारद्वाजमन्तवदात्मभुवेति पञ्च । भारद्वाजानां सर्वेषां अविवाहः' इत्यनेन भारद्वाजेषु गर्गऋक्षस्वतन्त्रकपीनन्तर्भाव्य तत्र गार्ग्यस्य विकल्पेन प्रवरद्वयमभिधाय परस्परमविवाहश्च प्रतिपादितः । न च तस्य सूत्रान्तरतया तद्विकल्पाभ्युपगमो नास्माकं विवक्षित इति वाच्यम्; अविरोधेन तदुक्तप्रकारे बाधकाभावात्, तथा बहुधा दर्शनाच्च । एतेन वैकल्पिकप्रवरद्वयवानाश्वलायनादिसम्मतोऽस्तु कश्चिद्भारद्वाजगार्ग्यः, अस्तु चापरो व्यवस्थितत्रिप्रवरवान् कपिगणान्तर्गतगार्ग्य इति सर्वसमीकरणचोद्यमपि प्रत्युक्तम् । तादृशगार्ग्यसद्भावे प्रमाणाभावस्य बाधकप्रपञ्चस्य च प्रागेव स्फुटमुपपादितत्वात् इति निगर्वः ननु धर्मप्रवृत्तिप्राचीनकोशे क्वचित्—

गौतमादिवदेवायं गणः पुत्राष्टकान्वितः ।
अतो गार्ग्यः कपेर्भर्तुस्स्वातन्त्र्येण विशेषितः ॥
भारद्वाजैस्सहातोऽस्य विवाहोऽङ्गीकृतोऽखिलैः ।

इति पाठो दृश्यते । अस्यार्थः—अतो गार्ग्य इत्यत्र अतश्शब्दः भारद्वाजीयगार्ग्यपरः । भेदश्च पञ्चम्यर्थः अन्वयश्चास्य गार्ग्य इति प्रथमान्तपदार्थे । तथा च भारद्वाजगार्ग्यभिन्नः त्रिप्रवरगार्ग्यः भर्तुः कपेः स्वातन्त्र्येणाधिपत्यलक्षणेन विशेषितः विशेषवान् तद्गणानुप्रविष्ट इति यावत् । अतः कारणात् अस्य त्रिप्रवरगार्ग्यस्य भारद्वाजैस्सह विवाहोऽङ्गीकृत इति । ततश्चैतत्पाठानुसारेण त्रिप्रवरगार्ग्यस्य कपिगणानुप्रवेशप्रतीतेः भारद्वाजगणैक्यं नास्त्येवेति चेन्मैवम् । एतत्पाठानुरोधेन त्रिप्रवरगार्ग्यस्य स्वतन्त्रकपिगणानुप्रवेशे सूत्रकारोक्तभारद्वाजघटितप्रवरविरोधेन बहुतरनिबन्धनकारीयकपिविभागप्रकरणोक्तसङ्ख्यापरिच्छेदविरोधेन आपस्तम्बसूत्रानुयायिसार्वभौमीयग्रन्थोक्तगणाघटितकपिगणसंख्याविरोधेन एतद्वचनपूर्वोत्तरसन्दर्भविरोधेन च तादृशपाठस्य प्रामादिकत्वात् । तथा हि तदुत्तरं तथा

चोक्तं स्मृत्यर्थसारे—'कपिप्रसिद्धावुदिताविह द्वौ' इत्यादिना स्वतन्त्रकपेः भारद्वाजकुले विवाहप्रतिपादनं न संगच्छते; पूर्वग्रन्थे त्रिप्रवरगार्ग्यस्यैव भारद्वाजेषु विवाहसम्भवप्रतिपादनेन तत्संवादपरोत्तरग्रन्थेऽपि गार्ग्यविवाहसम्भवप्रतिपादनस्यैव आवश्यकत्वात् । एवमतो गार्ग्य इत्यस्य व्यवहितपञ्चप्रवरगार्ग्यभिन्नगार्ग्य इत्यर्थकथनमप्यसंगतम; भारद्वाजप्रकरणस्य परिसमाप्तत्वेन 'अथ कपिगणः' इति प्रकरणान्तरारम्भेण च अत इत्यस्य व्यवहितपञ्चप्रवरगार्ग्यपरामर्शकत्वासंगतेः । यत्तु पञ्चम्या भेदोऽर्थ इति, तत्तु सर्वथा व्याकृत्यनभिज्ञतामूलं, पञ्चम्या भेदरूपार्थे अनुशासनस्य पठ्यमानव्याकृतितन्त्रे क्वचिदप्यदर्शनात्, अनादिप्रयोगाभावेन निरूढलक्षणाया असम्भवाच्च । अन्यथा चैत्रान्मैत्र इत्यत्र चैत्रभिन्नो मैत्र इति शाब्दबोधापत्तेः, घटादन्य इत्यत्र पौनरुक्त्यापत्तेश्च । यदपि अतो गार्ग्य इत्यत्र सार्वविभक्तिकस्तसिः, अत्रेति तदर्थः । तथा च गार्ग्यः भर्तुः स्वातन्त्र्येण अत्र कपिगणे विशेषित इत्यर्थ इति । तदिदं मलयं गच्छतो मन्दरपथान्वेषणं, यतः गार्ग्यसामान्यकदेशस्य त्रिप्रवरगार्ग्यस्य पञ्चप्रवरगार्ग्याद्भेदोपपादनाय स्वतन्त्रकपिगणप्रवेशाय च प्रवृत्तस्य भवतः गार्ग्यशब्देन सामान्यस्य ग्रहणं । यदप्यत्र—गार्ग्यविवाहप्रतिपादके 'अतो गार्ग्यः कपेर्भर्तुः' इति वचने अतश्शब्देन पञ्चप्रवरभारद्वाजीयगार्ग्यः परामृश्यते । तस्यार्थः प्रतियोगित्वं तस्य विशेषित इत्यत्र भेदपर्याये विशेषेऽन्वयः, अन्तर्भावितणिजयं शब्दः, तथा च भर्तुस्स्वामिनः कपेः स्वातन्त्र्येणायं गार्ग्यभारद्वाजीयगार्ग्यवद्विशेषितः आपस्तम्बपाठतः स्वतंत्रकपिगणे अयं गार्ग्यः भारद्वाजीयगार्ग्याद्भिन्नतया बोधित इति यावत् । अतो हेतोरस्य गार्ग्यस्य सगणत्वसमानप्रवरकत्वादिरहिततया भारद्वाजैस्सह विवाहोऽखिलैरंगीकृत इति स्वरसार्थ इति—तदपि न साधीयः । अत्र गार्ग्यः पञ्चप्रवरगार्ग्यप्रतियोगिकभेदवानिति शाब्दबोधोपपादनं व्युत्पत्तिविरुद्धम् । द्रव्यं न घटः इत्यस्य प्रामाण्यवारणायानुयोगितावच्छेदकस्य प्रतियोग्यवृत्तित्वनियमाभ्युपगमात् । न च घटप्रतियोगिकभेदस्य द्रव्यत्वसामानाधिकरण्येन सत्त्वात् तद्वाक्यप्रामाण्यं दुर्वारमेवेति वाच्यम् । भेदबोधस्थले तद्धर्मितावच्छेदकविशिष्टे धर्मितावच्छेदकावच्छेदकावच्छेद्यानुयोगिसम्बन्धेन भेदान्वयबोधनैयत्यात् । न चैवमपि घटो न घटपटोभयमित्यत्र घटत्वावच्छेद्यानुयोगितासम्बन्धेन घटपटोभयभेदान्वयबोधो न स्यादिति वाच्यम् । प्रतियोगितावच्छेदकपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकान्य-

धर्मस्यैव तद्धर्मावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वमिति नियमेनोक्तदोषाभवात् । तथाच पञ्चप्रवरगार्ग्यत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वस्य त्रिप्रवरगार्ग्यमात्रवृत्तिधर्म एवाभ्युपेयतया तद्धर्मावच्छिन्नस्य प्रकृते अनुपस्थितेः । अजा ग्रामं याप्यते चैत्रेणेत्यादिणिजन्तसमभिव्याहारस्थले द्वितीयान्तार्थग्रामकर्मकत्वान्वितस्य चैत्रेणेति चैत्रकर्तृकर्तृकत्वान्वितणिजर्थव्यापारेण स्वनिर्वाह्यकर्तृतानिरूपकत्वसम्बन्धेनान्वितस्य धात्वर्थस्य कर्मप्रत्ययार्थकर्तृत्वेऽन्वयः, 'ण्यन्ते कर्तुश्च कर्मणः' इत्यनुशासनात् । तस्य तु प्रथमान्तपदार्थे अजायामन्वयः । तथा च चैत्रकर्तृकव्यापारनिर्वाह्यकर्तृतानिरूपकग्रामकर्मकगमनकर्तृत्वाश्रयीभूता अजेति शाब्दबोधक्रमः । तद्दृष्टान्तेन 'स्वतन्त्र्येण विशेषितः' इत्यन्तर्भावितणिजन्तपक्षे भेदस्य नित्यत्वेन किञ्चिद्व्यापारप्रयोज्यत्वासम्भवात् अत्र तथा शाब्दबोधोपपादनासम्भवात् इति एवं पूर्वार्धप्रतिपादितार्थहेतुपरत्वेन अतश्शब्दार्थोपपत्तौ व्यवहितपरामर्शेन क्लिष्टा गतिरप्यन्याय्या । एवं कपिगणे.......................प्रमाणमन्तरेणैवाप्रसक्तगार्ग्यविवाहासम्भवाशंकासमाधानपरत्वेन 'अतो गार्ग्य' इति वचनावतारणात् विचारणीयत्वेन प्रसक्तस्वतन्त्रकपिविवाहासम्भवपरत्वेन तद्वचनावतारणमेव न्याय्यमित्याकलयामः । इत्थं चोक्तानुपपत्तिभिः दर्शितपाठः प्रामादिक इति सुष्ठूक्तमस्माभिः । वस्तुतः औत्तरीयसुजातग्रन्थेषु ' अथ कपिगणः—

गौतमादिवदेवायं गणोऽप्यत्राष्टकान्वितः ।
अतो गार्ग्यकपेर्भर्तुस्स्वातन्त्र्येण विशेषतः ॥
भारद्वाजैस्सहातोऽस्य विवाहोऽगीकृतो परैः । '

इत्येकः पाठः ।

भारद्वाजैस्सहान्योन्यं विवाहोऽगीकृतोऽखिलैः ।

इत्यपरः पाठः । अत्र चायमर्थः—गार्ग्यकपेरित पञ्चमी, षष्ठीतत्पुरुषश्च समासः, भर्तुः स्वतन्त्रस्य कपेः गार्ग्यसम्बन्धिकप्यपेक्षया अस्वतन्त्रकप्यपक्षयेति यावत् । विशेषतः स्वातन्त्र्येण हेतुना अस्य कपेः अतो परैः स्वतन्त्रकपिभिन्नैः प्रत्येकगणानुप्रविष्टैरिति यावत् । भारद्वाजैस्सहान्योन्यं वा विवाहोऽङ्गीकृत इत्यर्थः । एवं सत्येव उत्तरग्रन्थस्सङ्गतो भवति । कथमन्यथा स्वतन्त्रकपेर्भारद्वाजैस्सह विवाहप्रतिपादनं ज्यायः । न चास्मत्पाठेऽपि स्वतन्त्रकपेर्भारद्वाजेषु विवाहप्रतिपादने सति तदनुप्रविष्टगार्ग्यस्य विवाहसिद्ध्यतीति वक्तं शक्यं, तदनुप्रवेशस्य दर्शितबहुतरप्रमाणविरुद्धत्वेन

तदर्थमेवमर्थकल्पनस्यातिक्लिष्टत्वेन सहृदयहृदयङ्गमत्वाभावात् । इत्थं च—त्रिप्रवरगार्ग्यस्य स्वतन्त्रकपिगणानुप्रवेशे सर्वथैव साधकाभावात्, कपिगणविचारप्रस्तावे प्रौढनिबन्धनेषु तत्प्रवरतदनुप्रवेशयोरनभिधानात्, प्रत्युत 'त्रीणि केवलं त्रयः परस्परं नोद्वहेयुः । अङ्गिरोवैशिष्ट्येन चत्वारः परस्परं नोद्वहेयुः' इति च तत्रतत्र गार्ग्यप्रहाणेन संख्यापरिच्छेदानुगुण्यात्, अस्मत्सूत्रस्य अग्निहोत्रं जुहोति यवागूं पचतीत्यादाविव पाठक्रमस्य त्याज्यत्वतात्पर्यकत्वात्,

भारद्वाजाश्च कपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वयुर्मिथः ॥

इति मतान्तरबोधनतात्पर्यकत्वात् सूत्रान्तरे प्रवरद्वयविकल्पानुरोधाच्च भारद्वाजगणानुप्रविष्ट एव गार्ग्यस्सर्वोऽपीति सहृदयहृदयंगमः पुनः निर्व्यलीकः पन्थाः । ततश्च स्मृतिरत्नावल्यां सगोत्रसमानप्रवरसगणेषु विवाहं कुर्वतां प्रत्यवायमाह संग्रहकारः—

गोत्रजां गणजां कन्यां कामतः परिणीय यः ।
प्रजामुत्पादयेत्कुर्याद्गुरुतल्पगमव्रतम् ।

इत्यादिना गणजाविवाहेऽपि निषेधप्रतिपादनात् 'भारद्वाजास्तु' इत्यादिवचनेषु गर्गशब्दः सगणत्वादिदोषानुबन्धेन गार्गसामान्याभिप्रायक एवेति कृतं पल्लवितेन ॥

वस्तुतस्तु—विद्यारण्यस्वामिकृतनिबन्धेन स्मृतिसंग्रहे 'अथ गोत्रप्रवरनिर्णयः' इत्यारभ्य गोत्रलक्षणमुक्त्वा—

मुनिप्रणीतप्रवरान् ब्रूमः पञ्चाशता वयम् ।
अनन्तान्यपि गोत्राणि वर्गीकृत्य वदामहे ॥
आपस्तम्बोदितान् शेषान् विकीर्णान् प्रवरानहम् ।
द्विजातीनां हितार्थाय संगृह्णामि पृथक्पृथक् ॥

इति प्रतिज्ञाय 'भृगवो जामदग्न्याश्च' इत्यादिना 'मिथो विवाहं नार्हन्ति समानप्रवरा यतः' इत्यन्तेन भृगुगणं समाप्य 'अथांगिरोगणः—

आंगीरसास्तथाऽऽयास्या उचत्थ्या औशिजास्तथा ।
काक्षीवता वामदेवा बृहदुक्थाश्च सप्तमाः ॥
एते गौतमसंज्ञास्स्युर्भिन्नप्रवरजा अपि ।

समानप्रवरत्वेन व्यवहारादितां गताः ॥
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

अत्रापस्तम्बकारिका—

आंगीरसानां तु भृगोः परेषां आबार्हदुक्थान्नमिथो विवाहः । इति ॥

आंगिरसाः बार्हस्पत्याः भारद्वाजास्तथैव च ।
कुक्कश्चैवाग्निवेश्यश्च तयोर्जायनसंज्ञिकाः ॥
तथैव मातवचसः तथैव कपयोऽपि च ।
गर्गाश्च कपयश्शैन्या एते एकोनविंशतिः ॥
कपयोऽपि भरद्वाजास्स्युस्सम्बन्धित्वसम्भवात् ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥
एतेषां त विशेषोऽयं आमहाय्याभिधानकैः ।
औरुक्षय्यैश्च कापाभः विवाहस्त्रिभिरिष्यते ॥ इति ॥

अत्रापस्तम्बकारिका—

नातः परेषां हरितादधस्तान्मिथो विवाहस्तु कपेर्न चास्य ॥

'कपिना तु चान्यथा' इति पाठान्तरम् । ग्रन्थान्तरे—

कपिप्रसिद्धावुदिताविह द्वौ स्वतन्त्र एकोऽस्त्यपरोऽस्वतन्त्रः ।
तत्र स्वतन्त्रस्य कपेर्विवाहं मिथो भरद्वाजकुलेन चाहुः ॥ इति ॥

आङ्गीरसाश्चाम्बरीषयौवनाश्वहरीतकाः ।
मान्धाता चैव कौत्साश्च पैङ्गाश्चतदनन्तरम् ॥
शङ्खदर्भा हैमगवा एते हरितगोत्रजाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥

अत्र कारिका—

प्रागाजिमीढात् शिनितः परेषां आङ्गीरसानां न मिथो विवाहः । इति ॥

गौतमभरद्वाजहरितगणानुक्त्वा तदुत्तरं 'आङ्गिरसा आजिमीढा' इत्यारभ्य—

चतुर्दशैते विख्याताः पृथग्गोत्रप्रवर्तकाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥

इत्यन्तेन कण्वविरूपमुद्गलविष्णुवृद्धगणानभिधाय तदुत्तरं एवं सप्तगणविधा-

नात्। अत्र भरद्वाजगणांतःपातित्वेन स्वतन्त्रकपिगणस्य भरद्वाजगणे प्रवरैस्सवै-र्मिथोविवाहासिद्ध्यर्थं पृथगुपादानम्। ततः आंगिरसगणानामपि गणाष्टकत्वात् अष्टसङ्ख्याविशिष्टत्वमप्युचितमेव। 'सप्तैते आङ्गिरसगणाः' इति ग्रन्थान्तरे कथनम्। कपिगणस्य भारद्वाजगणान्तःपातित्वाभिप्रायमित्युक्त्वा तदुत्तरं ग्रन्थान्तरेष्वित्यादिना विष्णुवृद्धगणप्रविष्टान् शाल्यप्रभृतीन् सप्तगोत्रप्रवर्तकान् मतभेदेनाभिधाय आजमीढादीनां चतुर्णां गणानां परस्परं विवाहोऽस्तीत्यस्मिन्नर्थे—

रामथोऽपि कुत्सात्परतश्चतुर्णां विवाहमिच्छन्ति कपर्दिशिष्याः।

इत्यापस्तम्बकारिकां प्रमाणमभिधाय

मिथो विवाह्यास्तु गणा आद्यमाङ्गिरसं विना।

........................इत्यङ्गिरोगणसङ्ग्रहः॥

इत्याभिहितम्। ततश्चैतद्ग्रन्थोदाहृतापस्तम्बीयगणनिर्णायकाविवाहविधिनिषेधैदंपर्यप्रवृत्तकारिकाऽवलोकनेन श्रौतापस्तम्बीयप्रवरखण्डघटकस्य 'अथ भरद्वाजानां त्र्यार्षेयः आङ्गिरसबार्हस्पत्य भारद्वाज' इत्यारभ्य 'अथ कपीनां त्र्यार्षेयः, अथ गर्गाणां त्र्यार्षेयः आङ्गिरसगार्ग्यशैन्येति भारद्वाजगार्ग्यशैन्येति शिनिवत्गर्गवत्भरद्वाजवत्' इत्यन्तस्य ग्रन्थस्य कप्यन्तर्भावेन भारद्वाजगणप्रतिपादकत्वमेवेति निर्णीयते। अतश्चैतत्सूत्रकारस्यापिकपीनां भारद्वाजगणप्रविष्टत्व एव तात्पर्यम्। आश्वलायनसूत्रव्याख्यायां नारायणवृत्तौ -सप्तर्षीणां अगस्त्याष्टमानां आपत्यतया ये स्मर्यन्ते ते तद्गोत्रमित्युच्यन्ते। यथा जमदग्नेर्गोत्रं वत्सादयः तथा गोतमस्यायास्यादयः भरद्वाजस्य ऋक्षगर्गादयः तथा अत्र्यादीनां स्वस्ववर्ग्या इत्यनेन गर्गाणां भरद्वाजापत्यत्वनिश्चयेन तत्रैव गर्गप्रवराभिधानावसरे गर्गाणां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो-विकल्पेन भवति व्यवस्थया गर्गभेदानवमादित्युक्तम्। एते च भारद्वाजाः ऋक्षाणामविशेष्यानां कपीनां भरद्वाजानां गर्गाणां च भारद्वाजत्वात् सर्वेषां च परस्परमविवाह इत्युक्त्या, स्मृत्यर्थसारे च जमदग्निगणमारभ्य एतद्गणघटकानां केषाञ्चिद्भरद्वाजापत्यत्वप्रयुक्तगोत्रैक्यादविवाहः, केषांचित्प्रवरैक्यादविवाह इति प्रतिपादनावसरे—

भारद्वाजास्सकपयो गर्गा रौक्षायणा इति।
चत्वारस्ते भरद्वाजा गोत्रैक्यान्नान्वयुर्मिथः॥

इत्यादिना गर्गाणां भरद्वाजापत्यत्वेन तद्गोत्रत्वादविवाह इति दिगिति प्रतिपादनाच्च, सगोत्रां चेदमत्योपयच्छेत् मातृवदेनां बिभृयात् सगोत्रां गत्वा चान्द्रा-

यणमुपदिशेत् व्रते परिनिष्ठिते ब्राह्मणीं त्यजेन्मातृवत् भगिनीवत् गर्भो न दुष्यति काश्यप इति विज्ञायते । बुद्धिपूर्वं तु शातातपः—

परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्यास्समुत्सर्गं अतिकृच्छ्रं समाचरेत् ॥
समानप्रवरां कन्यां एकगोत्रामथापि वा ।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥
उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ।
यदि कश्चित्तु तामेव कन्यामूढ्वोपगच्छति ॥
गुरुतल्पव्रताच्छुध्येत् गर्भश्चेत्सोऽन्त्यतां व्रजेत् ।
चण्डालेषु प्रजाः क्षिप्त्वा व्रतं तु मरणान्तिकम् ॥
कामाद्विवाहमात्रे वा प्रजाऽनुत्पादनेऽपि वा ।
तस्य चण्डालवासः स्यात् व्रतं प्राणान्तिकं चरेत् ॥

इत्यादिपरस्सहस्रप्रत्यवायस्मरणाच्च भारद्वाजानां गर्गाणां च मिथो विवाहो न साधीयानित्यलं स्वतोनिहतमुद्गरप्रहरणप्रयासेन ॥ आपस्तम्बेन तावन्न विवाहतात्पर्येण प्रवरा व्याख्याताः, विवाहप्रकरणे तदनिरूपणात् । किंतु श्रौतकर्मतात्पर्येण, तत्प्रकरणे उक्तत्वात् । तत्र हि ' इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोर्वाचो होता ' इत्यारब्धम् । अत एव च प्रतिप्रवरपाठं अध्वर्युवरणहोतृवरणयोर्विशेषो दर्शितो । परंतु विवाहविधिनिषेधविषयेऽपि आपस्तम्बीयप्रवरखण्डो यथासंभवमनुरुध्यते भार्वभौमप्रभृतिभिः । अत एव पञ्चप्रवरगर्गस्य आपस्तम्बेनानाम्नानेऽपि न क्षतिः, आपस्तम्बीयहौत्रादौ तदनुपयोगात् एवं च गर्गप्रवरो यत्र क्वापि आपस्तम्बेन पठ्यतां; नतावता विवाहविधिनिषेधयोर्विशेषावगमः । बोधायनप्रभृतिभिस्तु विवाहतात्पर्येणेव प्रवरनिरूपणं कृतम् । तत्र च गर्गाणां भरद्वाजान्तर्भावः स्पष्ट मवगम्यते । तत्र च केषां चित् गर्गाणां भरद्वाजान्तर्भावः केषांचिन्नेति विशेषं कल्पयितुं न वयं प्रभवामः निबंधकारैस्तु कैश्चित् सामान्यतो गर्गभरद्वाजविवाहनिषेधः कृतः । चतुर्विंशतिमतविवरणादौ स्पष्टमेव सर्वेषां गर्गाणां भरद्वाजगणप्रविष्टत्वं दर्शितम् । सर्वेषामेव च गर्गाणां भरद्वाजैस्सह विवाहनिषेध उक्तः । तस्माद्गर्गभरद्वाजयोर्विवाहोऽप्रामाणिक एव ॥

गर्गसामान्यसंबन्धो भारद्वाजकुलस्य नो ।
इति पट्टाभिरामोऽयं मन्यते धर्मशास्त्रतः ॥

इति गर्गभरद्वाजकुलविवाहविचारः समाप्तः ।

आश्वलायनापस्तम्बबोधायनकात्यायनमत्स्योक्ताः

प्रवरदर्पणकारदर्शिताश्च.

# प्रवराः, गोत्रगणाश्च.

१ प्रथमः प्रवरः--

**भार्गव च्यावन आप्नवान और्व जामदग्न्य**

इत्येतं प्रवरमाश्वलायनः, आपस्तम्बः, बोधायनः, कात्यायनः, मत्स्यः इत्येते सर्वेऽप्युपदिशन्ति । आपस्तम्बः पुनरस्य विकल्पतया,

**भार्गव और्व जामदग्न्य**

इत्येतं प्रवरमाह । तत्राश्वलायनापस्तम्बौ जामदग्न्या वत्सा इत्युपक्रम्य एनं प्रवरमाहतुः । बोधायनस्तु वत्सा इत्युपक्रम्य । कात्यायनस्तु जमदग्नयो बिदा इत्युपक्रम्य ॥

## (१.) प्रथमो गणः ।

### जामदग्न्या वत्साः.

| | | | |
|---|---|---|---|
| १ अजेकजिह्विः | का | १० अवटः | आप |
| २ अतिगौविः ( अविः+गौविः ) | ,, | ११ अविः २ | का |
| ३ अनुलोमी | ,, | १२ आजिहीतिथिः | ,, |
| ४ अनुशातकिः ( अनुसातकिः, अनुसारकिः ) | म | १३ आपिशलयः १४ | बो |
| ५ अनुसातः ( अनुसातकिः ) | का | १४ आपिशलेयाः १३ | ,, |
| ६ अनुसातकिः ४,५ | म,का | १५ आमिलायनः १९१ | म |
| ७ अनुसारकिः ४ | म | १६ आर्कायणः | का |
| ८ अरसयः ३४ | बो | १७ आर्कायणाः ९, १९ | बो |
| ९ अर्यायणाः १७, १९ | ,, | १८ आर्तभागः | का |
| | | १९ आर्यायणाः ९, १७ | बो |

| | | | |
|---|---|---|---|
| २० आलेख ( खाय ) नाः | बा | ४८ काम्बलोदरयः ४७ | बो |
| २१ आश्मक्रमः २२ | का | ४९ काम्बलोदरिः | का |
| २२ आश्मक्रमणिः २१ | ,, | ५० काम्बोदः | म |
| २३ आह्वायनः | ,, | ५१काम्बोरकृत् ३६, ४४ | बो |
| २४ उच्चयमानः १९९ | ,, | ५२ काशकृत्स्नाः ५३ | बो |
| २५ उच्चैर्मन्यवः | बो | ५३ कासकृत्स्नाः ५२ | ,, |
| २६ उष्ट्राक्षा | ,, | ५४ कासिकृत् ४५ | म |
| २७ उष्ट्राक्षिः | का | ५५ काह्वायनाः ४३, ४६ | बो |
| २८ ऋतभागः | ,, | ५६ कृतभागाः २९ | ,, |
| २९ ऋतभागाः ५६ | बो | ५७ कृत्स्नः ३०२ | म |
| ३० ऋषभिः | म | ५८ केशलेढिः ५९ | ,, |
| ३१ ऐतिशायनः | का, आप | ५९ केसलेढिः ५८ | ,, |
| ३२ ऐतिशायनाः | बो | ६० कोचहस्तिः ( कोचहःहस्ती ) | का |
| ३३ औपजिह्वयः ११३ | ,, | ६१ कोचहस्तिकः | म |
| ३४ औरसयः ८ | ,, | ६२ कोटरः ३०१ | ,, |
| ३५ कटेरणिः ३७ | का | ६३ कोपयज्ञः ६४ | ,, |
| ३६ कठोरकृत् ४४, ५१ | बो | ६४ कोपियज्ञः ६३ | ,, |
| ३७ कण्ठेरणिः ३५ | का | ६५ कौटचक्षुः | का |
| ३८ कपानीलुः ३९ | म | ६६ कौटलिः ६६ | म |
| ३९ कपाली ३८ | ,, | ६७ कोठिलिः ६८ | म |
| ४० करवः ७१ | बो | ६८ कौवहः ६० | का |
| ४१ कांसः | का | ६९ क्रौञ्चः | ,, |
| ४२ कांसयः | बो | ७० क्रौचाक्षिः | ,, |
| ४३ काङ्कायनाः ४६, ५५ | ,, | ७१ खण्डवः ४०, १५४ | बो |
| ४४ काठोरतुः ३६, ५१ | ,, | ७२ गनिभः ३३८ | म |
| ४५ कान्तिकृत् ५४ | म | ७३ गवेरणिः १६२, २०७ | का, म |
| ४६ काम्बयनाः ४३, ५५ | बो | ७४ गाङ्ग्याः | बो |
| ४७ काम्बरोदरयः ४८ | बो | ७५ गार्भा ( र्भ्या ) यणः | का |

| | | | |
|---|---|---|---|
| ७६ गालवः | म, का | १०३ दाणयः १०१, १०४ | बो |
| ७७ गाह्यायनः ८१ | का | १०४ दाध्रेषकयः ( १०३ दक्षयो नदध्रेषकयः ) | ,, |
| ७८ गोत्सायनः | म | १०५ दार्भायणाः | ,, |
| ७९ गोष्ठायनः ८० | का | १०६ दार्भिः | का |
| ८० गोष्ठ्यायनः ७९ | म, का | १०७ दिवप ( पी ) तिः | म |
| ८१ गोह्यायनः ७७ | का | १०८ देवताप ( य ) नाः १०९, ११२ | बो |
| ८२ गौब्जायनाः ८४ | बो | १०९ देवन्तायनाः १०८, ११२ | ,, |
| ८३ गौविः २ | का | ११० देवमातिः | का |
| ८४ गौष्ठायनाः ८२ | बो | १११ देवमत्याः ११४ | ,, |
| ८५ चाणूकेयः २२५ | का | ११२ दैवहायनाः १०८, १०९ | ,, |
| ८६ चान्द्रमसः | का, बो | ११३ द्रोणाजिह्वयः ३३ | ,, |
| ८७ जलधिः ८८ | म | ११४ द्रुमत्याः १११ | ,, |
| ८८ जलूपिः ८७ | ,, | ११५ द्रुहलिः २७६ | ,, |
| ८९ जहिनः ( म ) | ,, | ११६ धाननयः २१८ | ,, |
| ९० जानायनाः ९९, १६१ | बो | ११७ ध्वजकृत् ३२५ | म |
| ९१ जाबालिः | बो, आप | ११८ नडायनः | ,, |
| ९२ जिहीतयः ९५ | बो | ११९ नदध्रेपयः १०४ | बो |
| ९३ जिह्मशून्यः | म | १२० नान्तभागी | म |
| ९४ जीवान्तिः | म, का, आप | १२१ नालायनः | का |
| ९५ जिहीतयः ९२ | बो | १२२ नाशायनाः १८९ | बो |
| ९६ जैह्माजिः ९८ | का | १२३ निराणिः | का |
| ९७ जैह्मायनिः | ,, | १२४ नैकजिह्मः ( ह्व ) | म |
| ९८ जैह्मतिः ९६ | ,, | १२५ नैकर्षिः १२७ | का |
| ९९ ज्ञानायनाः ९०, १६१ | बो | १२६ नैमिश्यः ( ष्यः ) | म |
| १०० तौलकेशिः | का | १२७ नैवर्षिः १२५ | का |
| १०१ दक्षयः १०३, १०४ | बो | १२८ नो ( नौ ) पेयाः | बो |
| १०२ दर्भिः | म | | |

| | | |
|---|---|---|
| १२९ | नौलिकः | म |
| १३० | परिमण्डलः | ,, |
| १३१ | परिमण्डलिः १३५ | बो |
| १३२ | पाकानुमतिः | का |
| १३३ | पाणिनिः | बा |
| १३४ | पाणिलिः | का |
| १३५ | परिमाण्डलिः १३१, १४२ | बा, का |
| १३६ | पार्णिनलिः | का |
| १३७ | पार्वतिः | ,, |
| १३८ | पार्षतिः | म |
| १३९ | पार्षिकाः १४०, १४१ | बो |
| १४० | पार्ष्टिकाः १३९, १४१ | ,, |
| १४१ | पार्ष्णिकाः १३९, १४० | ,, |
| १४२ | पालिमाण्डलिः १३५ | का |
| १४३ | पैगलायनिः १४८ | म |
| १४४ | पैङ्गलायनः | का |
| १४५ | पैङ्गलायनाः | बो |
| १४६ | पैलः | म, का |
| १४७ | पैलाः | बो |
| १४८ | पौगलायनिः १४३ | म |
| १४९ | पौर्णसौगन्धिः | म |
| १५० | प्रभायनाः २८०, ३१४ | बो |
| १५१ | प्राचीनयोग्यः | आप |
| १५२ | प्लुवः २०६ | म |
| १५३ | फेनपाः | का |
| १५४ | बर्बः ४९, ७१ | बो |
| १५५ | बार्हिः २४१ | का |
| १५६ | बार्हाः १६० | बो |
| १५७ | बालाकिः २३५ | का |
| १५८ | बाहुः १५९ | बो |
| १५९ | बाहुमित्रायणाः ( बाह्वामत्रायणाः ) | ,, |
| १६० | बाह्याः १५६ | ,, |
| १६१ | बौधायनाः ९०, ९९ | ,, |
| १६२ | भवेरणिः ७३ | म |
| १६३ | भार्गः | ,, |
| १६४ | भालुकायनिः १६६ | ,, |
| १६५ | भास्त्रेयः १६८ | का |
| १६६ | भ्राष्ट्रकायनिः १६४ | म |
| १६७ | भ्राष्ट्रेयः | का |
| १६८ | भ्रास्त्रेयः १६५ | का |
| १६९ | मण्डः | म |
| १७० | मण्डवः | बो |
| १७१ | मण्डुः | आप, म |
| १७२ | मलपतिः १७३ | म |
| १७३ | मलायनिः १७२ | ,, |
| १७४ | माण्डव्यः | का, म |
| १७५ | माण्डव्याः | बो |
| १७६ | माण्डूकः | म |
| १७७ | माण्डूकयः | का |
| १७८ | माण्डूकेयाः | बो |
| १७९ | माण्डूमः | म |
| १८० | मादानः ३०९ | का |
| १८१ | माधूकेयाः | बो |
| १८२ | माध्योदः | का |

| | |
|---|---|
| १८३ मार्कण्डः | म |
| १८४ मार्कण्डेयः | का |
| १८५ मार्कण्डेयाः | बो |
| १८६ मार्कायणः | म |
| १८७ मार्गायनः | ,, |
| १८८ मालायनः | का |
| १८९ मालायनाः १२२ | बो |
| १९० मित्रयज्ञः | म |
| १९१ मित्रलायनः १५ | ,, |
| १९२ मित्रायणाः १५९ | बो |
| १९३ यज्ञेयिः १९७ | म |
| १९४ याज्ञिकाः १९५ २३७ | बो |
| १९५ याज्ञीयाः १९४, २३७ | ,, |
| १९६ याज्ञेयः | का |
| १९७ याज्ञेयिः १९३ | म |
| १९८ राज ( जि ) तवाहः | बो |
| १९९ रुचमानः २४ | का |
| २०० रेखायनिः | ,, |
| २०१ रैकणिः | ,, |
| २०२ रोहितायनाः २१५ | बो |
| २०३ रो ( रौ ) हित्यायनिः | म |
| २०४ ललामः २०५ | ,, |
| २०५ लल्यानः २०४ | ,, |
| २०६ लवः १५२ | ,, |
| २०७ लवेरणिः ७३ | का |
| २०८ लाकुञ्चिः: २१३ | ,, |
| २०९ लाक्षेयः | ,, |
| २१० लाभ्रातिः | म |

| | |
|---|---|
| २११ लालविः | म |
| २१२ लालाटः २५० | का |
| २१३ लावुः २०८ | ,, |
| २१४ लोष्टाक्षिः | म |
| २१५ लोहितायनाः २०२ | बो |
| २१६ वत्सः | म |
| २१७ वत्साः | बो |
| २१८ वयनीनः ११६ | ,, |
| २१९ वलायनाः २३६ | ,, |
| २२० वाकायनाः | बो |
| २२१ वागायनः | का |
| २२२ वागायनिः | म |
| २२३ वाघालेपयः २२९ | का |
| २२४ वाच्याः २३३ | बो |
| २२५ वाणूकेयः ८५ | का |
| २२६ वात्साः २३९ | बा |
| २२७ वात्स्यायनाः २९२ | ,, |
| २२८ वाद्धु ( द्धू ) तकाः | ,, |
| २२९ वाघालेपयः २२३ | का |
| २३० वानिनः २३१, २३२ | बो |
| २३१ वायनिः २३०, २३२ | ,, |
| २३२ वयवाः २३०, २३१ | ,, |
| २३३ वाराट्यः २२४ | ,, |
| २३४ वालाकिः | म |
| २३५ वालाकिः १५७ | का |
| २३६ वालायनाः २१९ | बो |
| २३७ वाल्मीकाः १९४, १९५ | ,, |

| | |
|---|---|
| २३८ वाल्मीकिः | बो |
| २३९ वासाः २२६ | ,, |
| २४० वासिः | का |
| २४१ वाहिः १५५ | ,, |
| २४२ वाह्यः २४३, २४४ | बो |
| २४३ वाह्यकयः २४२, २४४ २६०, २६२ | बो |
| २४४ वाह्याकयः २४२, २४३ | ,, |
| २४५ विकश्वरुः २४६ | म |
| २४६ विकस्वरः २४५ | ,, |
| २४७ विरूपाक्षः | म |
| २४८ विरूपाक्षाः | बो |
| २४९ विरोहिताः २५१ | ,, |
| २५० विलालाटिः २१२ | का |
| २५१ विलोहिताः २४९ | बो |
| २५२ विष्टपुरयः २७४ | ,, |
| २५३ विष्णुः | म |
| २५४ विसावर्णिः ३१७ | ,, |
| २५५ वीतहव्यः २६५, २६६ | ,, |
| २५६ वीतिनः | ,, |
| २५७ वृकाश्वकः | का |
| २५८ वृकाश्वाः २५९ | बो |
| २५९ वृवाश्वाः २५८ | ,, |
| २६० वैकर्णाः २४३, २६२ | बो |
| २६१ वैकर्णिनिः | म |
| २६२ वैकर्ण्याः २४३, २६० | ,, |
| २६३ वैगायनः २६७ | ,, |
| २६४ वैच्छपुरायिः २७५ | का |
| २६५ वैतहव्यः २५५, २६६ | म |
| २६६ वैतिहयः २५५, २६५ | ,, |
| २६७ वैरायणः २६३ | ,, |
| २६८ वैरूपाक्षिः | का |
| २६९ वैरोहितिः | आप |
| २७० वैरोहित्यः | का |
| २७१ वैशम्पायनः | म, का |
| २७२ वैश्वानरयः | बो |
| २७३ वैश्वानरिः | का, म |
| २७४ वैष्टपुरेयाः २५२ | बो |
| २७५ वैष्टपुरेयिः २६४ | का |
| २७६ वैहलिः ११५ | बो |
| २७७ वैहानरिः २७९ | का, म |
| २७८ वैहीनरयः | बो |
| २७९ वैहीनारिः २७७ | म |
| २८० व्रातायनाः १५० | बो |
| २८१ शर्कराक्षाः २८७ | ,, |
| २८२ शर्कराक्षिः | म, का |
| २८३ शाकरथः २८५, २८९ | बो |
| २८४ शाकल्यः ३०३ | का |
| २८५ शाङ्करवाः २८३, २८९ | बो |
| २८६ शारद्वता ( न्ता ) यनाः | ,, |
| २८७ शार्कराक्षाः २८१ | ,, |
| २८८ शार्ङ्गरवः | म |
| २८९ शार्ङ्गरवाः २८३, २८५ | बो |
| २९० शालाकिः | म |
| २९१ शाल्यायनिः | ,, |
| २९२ शावायनाः २२७ | बो |

## ( २ ) द्वितीयः प्रवरः—

### भार्गव च्यावन आप्नवान

इत्येतं प्रवरं अजामदग्न्या इत्युपक्रम्य आश्वलायन आह. कात्यायनस्तु वात्स्या इत्युपक्रम्य आह मत्स्यस्तु बिदानामेतं प्रवरं ब्रवीति.

## ( २ ) द्वितीयो गणः—

### अजामदग्न्या वत्साः

नेहावान्तरगोत्रकाराः काप्युपदिष्टाः.

## ( ३ ) तृतीयः प्रवरः—

### भार्गव च्यावन आप्नवान आर्ष्टिषेण आनूप

इत्येतं प्रवरं आश्वलायनादयस्सर्वेऽप्याहुः.

आपस्तम्बस्तु,

### भार्गव आर्ष्टिषेण आनूप

इत्येतं प्रवरं विकल्पतया ब्रवीति.

## ( ३ ) तृतीयो गणः—

### आर्ष्टिषेणाः.

| | | | |
|---|---|---|---|
| १ अधितायिः ३ | म | ९ आश्वायनिः ७ | बो |
| २ अनूपः | का | १० काटायनिः २१ | म |
| ३ अरूपिः १, ८ | म | ११ कविः (सिः) | ,, |
| ४ आपस्तम्बिः | म, का | १२ काणायनः १३ | बो |
| ५ आर्ष्टिषेणः | ,, ,, | १३ काण्डा(त्या)यनाः १२ | ,, |
| ६ आर्ष्टिषेणाः | बो | १४ कार्दमायनः १५ | का |
| ७ आश्वाभिः ९ | ,, | १५ कार्दमायनिः १४ | म, का |
| ८ आश्वायतिः ( अरूपिः ) | ,, | १६ गर्दभिः १७ | का |

| | | | | |
|---|---|---|---|---|
| १७ गार्दभिः १६ | का | | २९ भल्विः | म |
| १८ गार्दभिः | म | | ३० भाल्लविः ३३ | का |
| १९ गौराम्भिः | बो | | ३१ भृगवेदीयाः | ,, |
| २० ग्राम्यायनिः ३६ | बो, का | | ३२ भृग्वन्दीयः | म |
| २१ चटायनिः १० | म | | ३३ भ्रालिः ३० | का |
| २२ चान्द्रायणः २३ | बो | | ३४ मार्गपथः | म |
| २३ त्वान्द्रायणाः २२ | ,, | | ३५ मार्गपथाः | का |
| २४ नैकषिः २५ | का | | ३६ याम्यायनयः २० | बो |
| २५ नैकासिः २४ | का, म | | ३७ गाभिः (म्भिः) | बो |
| २६ नैरथयः | बो | | ३८ समुनायनाः ४० | ,, |
| २७ पैठ(ठि)कलायनः २८ | ,, | | ३९ सिद्धः | बो |
| २८ पौठकलायनः २७ | ,, | | ४० सुमनायनाः ३८ | ,, |

## ( ४ ) चतुर्थः प्रवरः—

## भार्गव च्यावन आप्नवान और्व वैद

इत्येतं प्रवरं बिदानां आश्वलायनबोधायनावाहतुः.

कात्यायनस्तु एषां बिदानां

## भार्गव और्व जामदग्न्य

इत्येतं प्रवरमाह,

मत्स्यस्तु एषां बिदानां

## भार्ग च्यावन आप्नवान

इत्येतं प्रवरमाह.

## ( ४ ) चतुर्थो गणः—

## बिदाः.

| | | | |
|---|---|---|---|
| १ अभयजातः २६ | म | ३ अभय(व)दाताः २ | बो |
| २ अभयजाताः ३ | का, बो | ४ अर्कायणाः ६ | ,, |

| | | | |
|---|---|---|---|
| ५ अवटाः | बो, का | २३ बिदः | म |
| ६ आर्कायणाः ४ | बो | २४ बिदाः ३३ | बो |
| ७ औवैंयाः | म | २५ भञ्जायनाः | का |
| ८ काण्डरथयः | बो | २६ भवजातः १ | म |
| ९ कामलाः १४, ३२ | ,, | २७ भुजायनाः | बो |
| १० कायनिः | म | २८ भ्रदत्यः | का |
| ११ कौङ्कायनाः १२ | का | २९ भ्राजाः | ,, |
| १२ कौश्वायनाः ११ | बो, का | ३० मारुताः | म |
| १३ जमदग्निः | म | ३१ मार्कायणाः १५, १६, १८ | बो |
| १४ जामलाः ९, ३२ | बो | ३२ लामलाः ९, १४ | बो |
| १५ ताम्रायणाः १६, १८, ३१. | ,, | ३३ विदाः २४ | बो |
| १६ ताष्ट्रायनाः १५, १८, ३१, | ,, | ३४ वेदभृतः | का |
| १७ त्रैतायनाः | का | ३५ वैजभृत् | म |
| १८ नार्वा(ष्टा)यणाः १५, १६, ३१ | बो | ३६ वैतभृतयः ३७ | बो |
| १९ पुलस्तयः | ,, | ३७ वैतभृताः (तिः) ३६ | ,, |
| २० पौलस्त्यः | म | ३८ शाकटायनः | म |
| २१ पौलस्त्याः | का | ३९ शैलाः | बो |
| २२ प्राचीनयोग्याः | बो, का | | |

## ( ५ ) पञ्चमः प्रवरः—

## भार्गव वैतहव्य सावेदस

इत्येतं प्रवरं यस्कानां आश्वलायनादयस्सर्व एवाहुः.

## ( ५ ) पञ्चमो गणः—

## यस्काः वीतहव्याः

| | | | |
|---|---|---|---|
| १ अर्थलेख ( भिः ) | का | ३ ओडाः ४ | बो |
| २ उर्गवित्रयः | बो | ४ औक्थः ३ | ,, |

५ और्गवित्रतयः २ बो
६ क ( का ) श्यपिः म
७ कौटिल्यः ,,
८ कौटिल्याः ३६ बो
९ कौशापिः १०, १२ म
१० कौशाम्बेयः १२, ९ का, म
११ कौशाम्बेयाः बो
१२ कौशाम्बेयिः १०, ९ म
१३ खलिः २२ ,,
१४ गार्गी ( र्गे ) यः ,,
१५ गौरिक्षितः १७ का
१६ गोदायनः १८ ,,
१७ गौरिक्षितः १५ ,,
१८ गौर्जगः अ
१९ ग्रामदः ,,
२० चण्डमः २१, ३७ ,,
२१ चण्डमोदनः, २० ३७ ,,
२२ चलिः १३ ,,
२३ चित्रसेनाः बो
२४ जाबालिः म
२५ जालेयः ५७, ७१ बो
२६ जीवन्त्यायनः आश्व
२७ जीवन्त्यायनिः ३१ म
२८ जैमिनिः आश्व
२९ जैवतायनः बो
३० जैवन्त्यायनः का
३१ जैवन्त्यायनिः २७ म
३२ ज्वरिः ३५ ,,
३३ ज्वलिः १२० म
३४ तार्किः ,,
३५ तिथिः ३२ ,,
३६ त्रसण्डव्याः ८ बो
३७ दभः २०, २१ म
३८ दीर्घवित्तः ,,
३९ दुर्दिनः बो
४० देर्घचितः ( त्तः ) ४१ का
४१ दैर्घ्यचितः ४० ,,
४२ देवतायनः ४३, ४४ बो
४३ देवतायनयः ४२, ४४ ,,
४४ देवन्तायनः ४३, ४२ ,,
४५ नूपः ६१, ६२ ,,
४६ पञ्चालवः का
४७ पाण्यवत्तः ,,
४८ पिलिः ८४ म
४९ पौष्णावतः ५१ का
५० पौष्ण्यायनः म
५१ पौस्मावरः ४९ का
५२ प्रवारेयः म
५३ बालपिः ५४, १०१ ,,
५४ बालेयिः ५३, १०१ ,,
५५ भागन्तयः बो
५६ भागलिः ६०, ६५ म
५७ भागलेयः २५, ७१ बो, का
५८ भागविज्ञेयः ,, ,,
५९ भागवित्तिः ६४ म
६० भागिलः ५६, ६५ ,,

| | |
|---|---|
| ६१ भागुरिः ६२, ४५ | बो |
| ६२ भागुरुद्धायः ६१, ४५ | ,, |
| ६३ भाङ्गतिः | म |
| ६४ मार्गवस्त्विः ५९ | ,, |
| ६५ मार्गेलिः ५६, ६० | ,, |
| ६६ भास्करः | बो |
| ६७ मश्वारेयः ९८ | का |
| ६८ मथिकः ३७ | म |
| ६९ मदोकिः | का |
| ७० मध्यमेयाः ७६ | बो |
| ७१ मातलयः २५, ५७ | ,, |
| ७२ मादायनः | म |
| ७३ माधवः ६८ | ,, |
| ७४ माधुलः ७५ | का |
| ७५ माधूनः ७४ | ,, |
| ७६ माध्यमेयाः ७० | बो |
| ७७ मूकः | ,, |
| ७८ मोदायनः १६ | का |
| ७९ मौकः | आश्व, आप |
| ८० मौञ्जः ८३ | म |
| ८१ मौद्गलः | का |
| ८२ मौनः | आश्व, आप, बो |
| ८३ मौलिः | ८०, ८४, म |
| ८४ मौसलिपिलिः ( मौलिः, पिलिः ) | ,, |
| ८५ यस्कः | आश्व, का, म |
| ८६ यस्काः | बो |
| ८७ यास्कः | आप |
| ८८ राजिततायिनः ८९ | बो |
| ८९ राजितापिः ८८ | बो |
| ९० रोदादिनः | बो |
| ९१ वचः | म |
| ९२ वधूलः ९७ | का |
| ९३ वर्षपुष्यः ( ष्टः ) | बो |
| ९४ वाकर ( ल ) यः ९९, १०० | ,, |
| ९५ वाका ( चा ) श्वकयः | ,, |
| ९६ वाधुलः | ,, |
| ९७ वाधूलः ९२, ९६, आश्व, | आप, बो, का |
| ९८ व रेयः ६७ | का |
| ९९ वार्करेलयः ९४, १०० | बो |
| १०० वार्कलयः ९४, ९९ | ,, |
| १०१ वालेयिः ९४, ६३ | म |
| १०२ वासयः | बो |
| १०३ वासोदः | म |
| १०४ वाह्निः | ,, |
| १०५ विलेभिः | ,, |
| १०६ वीतहव्यः १०८ | म |
| १०७ वीतहव्याः | आप |
| १०८ वीतिहव्यः १०६ | म |
| १०९ वृकाश्माकिः ११० | का |
| ११० वृकाश्वाकिः १०९ | ,, |
| १११ शार्कराक्षिः | आश्व, म |
| ११२ शालङ्कायनः | ,, ,, |
| ११३ श्रमदागोपिः ११५ | म |
| ११४ सत्यकयः ११६ | बो |
| ११५ समदा ( दो ) गेयिः ११३ | म |

| | | | |
|---|---|---|---|
| ११६ सात्यकयः ११४ | बो | १२० सौज्वलिः ( सोरिः-ज्वलिः ) | म |
| ११७ सानुष्टिः | म | १२१ सौरः ( रिः ) १२० | ,, |
| ११८ सार्ष्टिः | आश्व | १२२ हालेयः | ,, |
| ११९ सावर्णिः | ,, | | |

## ( ६ ) षष्ठः प्रवरः—

## भार्गव वैन्य पार्थ

इत्येतं प्रवरं आश्वलायनापस्तम्बबोधायना आहुः.

तत्राश्वलायनः श्यैता इत्युपक्रम्य.

आपस्तम्बबोधायनौ तु वैन्या इत्युपक्रम्य.

## ६ षष्ठोगणः—

## श्यैताः अथवा वैन्याः

| | | | |
|---|---|---|---|
| १ पार्थाः | आप, बो | ३ वैन्याः | आप, बो |
| २ बाष्कलाः | ,, | ४ श्यैताः | आश्व |

## ( ७ ) सप्तमः प्रवरः—

## वाध्र्यश्व

इत्येतं प्रवरं मित्रयुवानां आश्वलायनापस्तम्बावाहतुः.

बोधायनकात्यायनमत्स्यास्तु एषां.

## भार्गव वाध्र्यश्व दैवोदास

इत्येतं प्रवरमाहुः. आश्वलायनः पुनः

## भार्गव दैवोदास वाध्र्यश्व

इत्येतं प्रवरं विकल्पतयाऽप्याह.

# ( ७ ) सप्तमो गणः–

## मित्रयुवाः

| | |
|---|---|
| १ अपिशलाः ५ | का |
| २ आपशालिः २० | म |
| ३ आठिकायनाः १९ | का |
| ४ आपिकायनः ( निः ) | म |
| ५ अपिशलाः १ | का |
| ६ आश्वलायनाः | ,, |
| ७ उक्षायणाः | बो |
| ८ उरुक्षायणाः १० | ,, |
| ९ ओजायनाः ३७ | ,, |
| १० औरुक्षायणाः ८ | ,, |
| ११ कतवायनाः | ,, |
| १२ खाण्डवः | म |
| १३ गेष्टायनः | बो |
| १४ गोपायनाः | का |
| १५ तार्क्ष्यायणाः | बो |
| १६ द्राणायनः | म |
| १७ द्रोणायनाः | का |
| १८ नाशार्यजनः | बो |
| १९ पाटकायनाः ३ | का |
| २० पिशलिः ( ली ) २ | म |
| २१ पुराभिनायाः ४४, ४५ | बो |
| २२ बाल्याः २७ | ,, |
| २३ महावाल्यः | ,, |
| २४ माजाधयः २५, २६ | ,, |
| २५ माञाधयः २४, २६ | बो |
| २६ मादापयः २४, २५ | ,, |
| २७ माल्याः २२ | ,, |
| २८ मित्रयुवः | ,, |
| २९ मित्रयुवाः | आप, आश्व |
| ३० मैत्रेयः | का, म |
| ३१ यावाल्याः | बो |
| ३२ रौकपायणाः ३४, ३६ | ,, |
| ३३ रौक्था ( क्मा ) यनः | म |
| ३४ रौक्यायणाः ३२, ३६ | बो |
| ३५ रौक्षायनः | ,, |
| ३६ रौष्ट्यायनः ३२, ३४ | ,, |
| ३७ वाञायनाः ९ | ,, |
| ३८ वाभ्र्यश्वाः | आप |
| ३९ शाकटाक्षः ४१ | का, म |
| ४० शालायनिः | म |
| ४१ साकिताक्षाः ३९ | का |
| ४२ साच ( श्च ) र्यः | ,, |
| ४३ सापिण्डनः | बो |
| ४४ सुरभितयः २१, ४५ | ,, |
| ४५ सुराणयाः २१, ४४ | ,, |
| ४६ हंसजिह्वः | म |
| ४७ हंसाजिह्वाः ४८ | का |
| ४८ हासजिह्वाः ४७ | ,, |

## (८) अष्टमः प्रवरः–

**गार्त्समद**

इत्येतं प्रवरं शुनकानां आश्वलायनापस्तम्बबोधायनकात्यायना आहुः. आश्वलायनः पुनरेषां

**भार्गव शौनहोत्र गात्समद**

इत्येतं प्रवरं विकल्पतयाऽऽह. बोधायनस्तु,

**शौनक**

इत्येतं प्रवरं वैकल्पिकमाह. कात्यायनस्तु,

**भार्गव गात्समद**

इत्येतं प्रवरं विकल्पेनाह. मत्स्यस्तु,

**भार्गव मार्त्समद**

इत्येतमेव प्रवरं उपदिदेश,

## (८) अष्टमो गणः–

**शुनकाः**

| | | | |
|---|---|---|---|
| १ एकायनः | म | १२ चौक्षिः १० | म |
| २ कर्दमायनाः | का | १३ चौड्याः | बो |
| ३ कार्दमायनः | म | १४ तित्रीयाः १५ | बो |
| ४ ख ( खा ) दमायनः | बो | १५ तैत्तिरीयाः १४ | ,, |
| ५ गाङ्गायनाः ७ | ,, | १६ पत्पू ( ल्पू ) लाः | ,, |
| ६ गार्त्समदाः | आप, बो | १७ प्रत्यूषाः | का |
| ७ गार्भयनः ५ | बो | १८ प्रत्यूहः | म |
| ८ गृत्समदः | म | १९ भागार्यणाः | बो |
| ९ गृत्समदाः | का | २० मत्स्यगन्दः ( न्धः ) | म |
| १० चक्षुः १२ | म | २१ मत्स्यगन्धाः | बो |
| ११ चौक्षः | का | २२ मांसगन्धाः | का |

| | | | | | |
|---|---|---|---|---|---|
| २३ यज्ञपतिः | | म | ३० श्रौत्रियाः | | बो |
| २४ यज्ञपयः | | बो | ३१ सनकः ३२ | | म |
| २५ याज्ञपयः | | का | ३२ सनयः ३१ | | ” |
| २६ वर्ष्याः | | बो | ३३ सौकराः | | का |
| २७ शुनकाः | आप, आश्व, | बो | ३४ सौगन्धयः | | बो |
| २८ श्रोण्यः ३५ | | म | ३५ सौरिः २८ | | म |
| २९ श्रोत्रियाः | | का | | | |

## (९) नवमः प्रवरः—

**भार्गव च्यावन आप्नवान वात्स पौरोधस**

इत्येतं प्रवरं,

**भार्गव वात्स पौरोधस**

इत्येतं च प्रवरं वत्सपुरोधसयोः दर्पणकारो दर्शयति.

## (९) नवमो गणः—

**वत्सपुरोधसौ.**

## (१०) दशमः प्रवरः—

**भार्गव च्यावन आप्नवान वैजव नैमाथित**

इति प्रवरं वैजवनैमाथितयोः दर्पणकारो दर्शयति.

## (१०) दशमो गणः—

**वैजवनैमाथितौ.**

## (११) एकादशः प्रवरः—

**भार्गव शाठर माठर**

इति प्रवरं शाठरमाठराणां दर्पणकारो दर्शयति..

## (११) एकादशो गणः—

## ( १२ ) द्वादशः प्रवरः—

## आङ्गिरस आयास्य गौतम

इत्येतं प्रवरं आश्वलायनः गौतमानामाह.

आपस्तम्बबोधायनकात्यायनास्तु अयास्यगौतमानामाहुः.

## ( १२ ) द्वादशो गणः—

## आयास्या गौतमाः.

| | | | | | |
|---|---|---|---|---|---|
| १ | अयास्याः ३ | आप, बो | १९ | देवकिः | बो |
| २ | आणिचेयाः २८–२९ | बो | २० | नैकऋषिः २१ | ,, |
| ३ | आयास्याः १ | ,, | २१ | नैकरिष्टिः २० | ,, |
| ४ | कठोरः ( रिः ) ७ | ,, | २२ | पार्थिवाः | ,, |
| ५ | काक्षीवाः १०, ११, १२ | ,, | २३ | बाभ्याः २५ | ,, |
| ६ | काचाक्षयः ९ | ,, | २४ | बाह्याः | ,, |
| ७ | काठोरिः ४ | ,, | २५ | बौभ्याः २३ | ,, |
| ८ | कारु ( रे ) णयः | ,, | २६ | मूढरथः २७ | ,, |
| ९ | कावाक्षयः ६ | ,, | २७ | मूढाः २६ | ,, |
| १० | कासिः ५, ११, १२ | ,, | २८ | श्रोणिचे(वे)याः २, २९ | ,, |
| ११ | कासिवायाः ५, १०, १२ | ,, | २९ | श्रोणिचेषकः २, २८ | ,, |
| १२ | कासीकः ५, १०, ११ | ,, | ३० | सत्यकयः ३२ | ,, |
| १३ | कि(की)लालयः | ,, | ३१ | सात्यकः ३३ | ,, |
| १४ | कौभारवत्यः १५ | ,, | ३२ | सात्यकयः ३० | ,, |
| १५ | कौमाश्वत्याः १४ | ,, | ३३ | सात्यमुग्रीकः ३१ | ,, |
| १६ | ताण्डिः १७ | ,, | ३४ | स्तैपकिः | ,, |
| १७ | तांडिः १६ | ,, | ३५ | स्वैदेहाः | ,, |
| १८ | दाभिः(भिः) | ,, | | | |

## ( १३ ) त्रयोदशः प्रवरः—

### आंगिरस औच ( त ) थ्य गौतम

इत्येतं प्रवरं आश्वलायनापस्तम्बकात्यायनाः औच ( त ) थ्यगौतमाना-मुपदिशन्ति मत्स्यस्तु—

### आंगिरस औचथ्य ( वाचोति ) औशिज

इत्येतं प्रवरमेषां दर्शयाति

## ( १३ ) त्रयोदशो गणः—

### उचथ्या गौतमाः—

| | | | |
|---|---|---|---|
| १ अङ्गायनकाः | का | १९ कारवारिः २० | का |
| २ अभिजितः | का, म | २० काराधारी १९ | ,, |
| ३ आरुणायनिः | म | २१ कारोटः | ,, |
| ४ उचथ्यः ६ | ,, | २२ कारोटकः १५ | म |
| ५ उचथ्याः | आप, आश्व | २३ कावाक्षिः १६, १८ | का, म |
| ६ उतथ्यः ४ | म | २४ कासोरुः | म |
| ७ उपबिन्दुः | का, म | २५ कुण्डबः(वाः) २६ | का |
| ८ ऐरीडवः | म | २६ कुण्डेरवः २५ | ,, |
| ९ औतथ्याः | का | २७ कैरातिः | म |
| १० कटू(ट्ठ)करः | ,, | २८ कैसिल्याः ३१ | ,, |
| ११ करगोण्यः १२ | ,, | २९ कोष्ठः | ,, |
| १२ करसोगिण्यः ११ | ,, | ३० कौटिल्याः १७ | का |
| १३ करालिः | ,, | ३१ कौशिल्यायनः २८ | म |
| १४ करेलः(लिः) | ,, | ३२ कौष्टिकिः | ,, |
| १५ करोटः २२ | म | ३३ क्षपाः ३४ | का, म |
| १६ काचाक्षिः २३ | का | ३४ क्षयः ३३ | म |
| १७ काटल्याः ३० | ,, | ३५ क्षारकारण्डिः | ,, |
| १८ कापाक्षिः २३ | म | ३६ क्षीरः | ,, |

| | |
|---|---|
| ३७ क्षीरकटः ३८ | का |
| ३८ क्षीरकरण्डः ३७ | ,, |
| ३९ गतवः | ,, |
| ४० गौतमः | म |
| ४१ चण्डान्तकः ८० | ,, |
| ४२ णिचोराणिः | ,, |
| ४३ तालेयाः ४७ | का |
| ४४ तुण्डः | ,, |
| ४५ तोष्यकाणिः ४८ | ,, |
| ४६ तौलेयः ५३ | म |
| ४७ तौलेयाः ४३ | का |
| ४८ तौष्ट्यरुणयः ४५ | ,, |
| ४९ नगः ६४, ९६ | म |
| ५० नरोहित्याः | का |
| ५१ निरोधान्मः ७६ | म |
| ५२ नीचयः | का |
| ५३ नैलेयः ४६ | म |
| ५४ नैषकिः | का |
| ५५ पाचिकारोविः ५७ | म |
| ५६ पाण्डुः ८२ | ,, |
| ५७ पात्विकारेविः ५५ | ,, |
| ५८ पार्थिवाः | का, म |
| ५९ पुष्पवः ( वान् ) | म |
| ६० पैष्काञ्जितिः ६१ | ,, |
| ६१ पौष(ष्क)जितिः ६० | ,, |
| ६२ पौष्यण्डिः ७३ | का |
| ६३ वाहुकर्णिः ७४ | म |
| ६४ बौधिः ९६, ४९ | ,, |
| ६५ भागलः | का |
| ६६ भागवित्तिः ६७, ६८ | म |
| ६७ भार्गतवः ६६, ६८ | ,, |
| ६८ भार्गवतः ६६, ६७ | ,, |
| ६९ मान्धर्यः | का |
| ७० मूलवः ( यः ) | म |
| ७१ मै ( मौ ) दहायनाः | का |
| ७२ मौमिनिः १०३ | ,, |
| ७३ यौपिण्डिः ६२ | ,, |
| ७४ राहुकर्णिः ६३ | म |
| ७५ रोविः | ,, |
| ७६ रोधः ५१ | ,, |
| ७७ रोहितायनः | का |
| ७८ रोहिणेयाः | म |
| ७९ लौका ( गा ) क्षिः | का |
| ८० वाडालकः ४१ | म |
| ८१ वाराषिः ८५ | का |
| ८२ वासुः ५६ | म |
| ८३ विश्वान्तिः | ,, |
| ८४ वीरः ८६ | ,, |
| ८५ वीराषिः ८१ | का |
| ८६ सजीवी ८४ | म |
| ८७ सधूपः ८८ | का |
| ८८ सधूपयः ८७ | ,, |
| ८९ सपुष्पयः | ,, |
| ९० समूलयः | ,, |
| ९१ सरावः ९७ | ,, |
| ९२ सलोगा ( मा ) क्षिः ९८, १०५ | म |

| | | | |
|---|---|---|---|
| ९३ सस्तेवयः | का | १०१ सैध ( न्ध ) वः | का |
| ९४ साङ्करः | ,, | १०२ सोमदायिनः १०४ | म |
| ९५ सामलोमाकिः | ,, | १०३ सौमनिः ७२ | का |
| ९६ सार्धनेमिः ४९, ६४ | म | १०४ सोमोदयनिः १०२ | म |
| ९७ सार्वः ९१ | का | १०५ सौगमाक्षिः ९२, ९८ | ,, |
| ९८ सुगोमाक्षिः ९२, १०५ | म | १०६ सौपात्रिः १०७ | ,, |
| ९९ सुतपाः | ,, | १०७ सौपुरिः १०६ | ,, |
| १०० सुरैषिणः | ,, | १०८ स्कार्दः | का |

## ( १४ ) चतुर्दशः प्रवरः—

### आङ्गिरस राहूगण्य गौतम

इत्येतं प्रवरमाश्वलायनः रहूगणानामुपदिशति. बोधायनस्तु—

### आंगिरस गौतम शारद्वत

इतीमं प्रवरं शरद्वन्तानां दर्शयाति.

अनयोर्वैकल्पिकता च एतदीययोः गोत्रगणयोर्द्वयोरपि रहूगणानामदर्शनादुन्नीयते.

## ( १४ ) चतुर्दशो गणः—

### रहूगणाः शरद्वताः ( न्ताः )

| | | | |
|---|---|---|---|
| १ अभिजिताः ( तिः ) | बो | ९ राणयः ४ | बो |
| २ औपबिन्दवः | ,, | १० राहूगणाः ८ | ,, |
| ३ क्षीरकरम्भाः | ,, | ११ रौहिण्याः | ,, |
| ४ गणयः ९ | ,, | १२ शरद्वताः ( न्ताः ) | ,, |
| ५ प्रभूगणाः | आश्व | १३ सौमुचयः ( याः ) | ,, |
| ६ भा ( मा ) षण्याः ७ | बो | १४ सौम्यायनाः १५ | ,, |
| ७ माषण्या ६ | ,, | १५ सौयामुनाः १४ | ,, |
| ८ रहूगणाः १० | ,, | | |

( १५ ) पञ्चदशः प्रवरः–

आंगिरस सौमराज्य गौतम

इतीमं प्रवरमाश्वलायनः सोमराजकानां निर्दिशति,

( १५ ) पञ्चदशो गणः–

सोमराजकाः.

( १६ ) षोडशः प्रवरः–

आंगिरस वामदेव्य गौतम

इत्येतं प्रवरमाश्वलायनः वामदेवानां कथयति. आपस्तम्बस्तु–

आंगिरस वामदेव बार्हदुक्थ

इत्येतं प्रवरं त्वेषामुपदिशति. बोधायनस्तु–

आङ्गिरस गौतम वामदेव

इतीमं प्रवरमेतेषां दर्शयति. मत्स्यस्तु–

आङ्गिरस बार्हदुक्थ वामदेव्य

इत्येतं प्रवरमेषामुपदिदेश.

( १६ ) षोडशो गणः–

( १ ) बृहदुक्थः–म

( २ ) वामदेवः–,,

( ३ ) वामदेवाः–आश्व, आप, बो.

( १७ ) सप्तदश प्रवरः–

आङ्गिरस बार्हदुक्थ गौतम

इत्येतं प्रवरं आश्वलायनापस्तम्बौ बृहदुक्थानामाहतुः

( १७ ) सप्तदशो गणः–

( १ ) बृहदुक्थाः–आश्व, बो.

## ( १८ ) अष्टादशः प्रवरः—

**आङ्गिरस औचथ्य औशिज गौतम काक्षीवत**

इत्येतं प्रवरं कक्षीवतामाश्वलायनो ब्रवीति. आपस्तम्बस्तु—

**आङ्गिरस औशिज गौतम**

इत्येतं प्रवरं औशिजगौतमानाम्, कात्यायनस्तु—

**आंगिरस आयास्य औशिज गौतम काक्षीवत**

इत्येतं प्रवरं आयास्यौशिजगौतमानाम्. बोधायनस्तु—

**आंगिरस औचथ्य काक्षीवत गौतम कौमण्ड**

इत्येतं कौमण्डानाम्.

## ( १८ ) अष्टादशो गणः—

### कक्षीवन्तः

| | | | |
|---|---|---|---|
| १ अञ्जायनाः १० | बो | ८ मासुराक्षाः | बो |
| २ औशिजाः | आप, का | ९ मासुरेषिः | ,, |
| ३ कक्षीवन्तः | आश्व | १० राजायनाः १ | ,, |
| ४ काष्ठरेभ ( ष ) यः | बो | ११ वाजायनाः १२ | ,, |
| ५ कौमण्डाः | ,, | १२ वायनः ११ | ,, |
| ६ मन्धरेषणाः ७ | ,, | १३ वाशारिः | ,, |
| ७ मामन्धरेषणाः ६ | ,, | | |

## ( १९ ) एकोनविंशः प्रवरः—

**आङ्गिरस औचथ्य दैर्घतमस**

इत्येतं प्रवरं आश्वलायनः दीर्घतमसामाह. बोधायनस्तु—

**आंगिरस औचथ्य काक्षीवत गौतम दैर्घतमस**

इत्येतं प्रवरं दीर्घतमसामाह.

## ( १९ ) एकोनविंशो गणः—

**दीर्घतमसः—आश्व, बो.**

## ( २० ) विंशः प्रवरः—

### आंगिरस गौतम औशनस

इत्येतं प्रवरं औशनसानां बोधायन आह.

### ( २० ) विंशो गण औशनसाः—

| | | | |
|---|---|---|---|
| १ औशनसाः | बो | ५ महोदरः | बो |
| २ दिश्यः | ,, | ६ विकंहतः | ,, |
| ३ निहतः | ,, | ७ सुबुद्ध्यः | ,, |
| ४ प्रशस्तः | ,, | ८ सुरूपाक्षः | ,, |

## ( २१ ) एकविंशः प्रवरः—

### आंगिरस गौतम कारेणुपालः—

इत्येतं प्रवरं करेणुपालानां बोधायन आह.

### ( २१ ) एकविंशो गणः कारेणुपालाः—

| | | | |
|---|---|---|---|
| १ अज(ञ्र)गन्धः | बो | ५ कारेणुपालयः ३ | बो |
| २ औदजायनाः | ,, | ५ पाजि(ञ्जि)ष्ठः | ,, |
| ३ करेणुपालाः ४ | ,, | ६ माधु(न्धु)क्षरः | ,, |

## ( २२ ) द्वाविंशः प्रवरः—

### आंगिरस राघव गौतम

इत्येतं प्रवरं राघवाणां दर्पणकारो वदति.

### ( २२ ) द्वाविंशो गणः—

### राघवाः

## ( २३ ) त्रयोविंशः प्रवरः—

### आंगिरस बार्हस्पत्य भारद्वाज वान्दन मातवचस

इत्येतं प्रवरं आश्वलायनापस्तम्बौ ऋक्षाणामाहतुः.

बोधायनस्तु, रौक्षायणानामाह. आपस्तम्बः पुनः—

**आंगिरस वान्दुन मातवच**

इत्येतं प्रवरं ऋक्षाणामेव वैकल्पिकतया ब्रवीति

## ( २३ ) गणः मातवचसः—

| | |
|---|---|
| १ अग्निजिह्वी | बो |
| २ ऋक्षाः | आश्व, आप |
| ३ काणिः ( ण्वी ) | बो |
| ४ कौतु ( थु ) मः ५ | ,, |
| ५ कौथुयः ४ | ,, |
| ६ रौक्षायणाः | ,, |
| ७ वैकिडाः ८ | बो |
| ८ वैपिण्डी ७ | ,, |
| ९ श ( शि ) पिलाः | ,, |
| १० शौपिलाः | ,, |
| ११ सूतिः | ,, |

## ( २४ ) चतुर्विंशः प्रवरः—

**आंगिरस बार्हस्पत्य भारद्वाज**

इत्येतं प्रवरमाश्वलायनादयस्सर्व एवाहुः.

## ( २४ ) गणः भारद्वाजाः—

| | |
|---|---|
| १ अग्निवेशः ३ | म |
| २ अग्निवेशाः ४, ९ | बो |
| ३ अग्निवेश्यः १ | म |
| ४ अग्निवेश्याः २, ९ आश्व, आप, | बो |
| ५ अग्निस्तम्भाः | बो |
| ६ अधिकारग्रीवः ४२ | का |
| ७ आक्ताः १०, १६ | बो |
| ८ आक्षाः २५ | ,, |
| ९ अग्निवेश्याः २, ४ | ,, |
| १० आत्राः ७, १६ | ,, |
| ११ आत्रेयायणाः | बो |
| १२ आत्रेयायानिः | का, म |
| १३ आपस्ताम्बिः | ,, ,, |
| १४ आपस्तम्भाः | बो |
| १५ आरुणाः | ,, |
| १६ आक्ष्णाः ७, १० | ,, |
| १७ आश्वलायनिः १७० | का, म |
| १८ इन्द्रस्तम्भाः | बो |
| १९ इषुमताः | ,, |
| २० उडुपातिः | म |
| २१ उद्वहव्याः | बा |

| | | |
|---|---|---|
| २२ | उरूढाः | बो |
| २३ | ऊर्जायनाः | आप |
| २४ | ऋक्षाः १६९ | बो |
| २५ | औक्षाः ८ | ,, |
| २६ | औदमेघयः | ,, |
| २७ | औदमेघिः | का |
| २८ | औपसेयः २९ | बो |
| २९ | औसेयः २८ | ,, |
| ३० | कक्षलाः ३३, १९९ | ,, |
| ३१ | करभीकयः १७२, १७८ | ,, |
| ३२ | कल्माश्वः ( षाः ) | ,, |
| ३३ | काक्षलाः ३०, १९९ | ,, |
| ३४ | काचकिः ३५ | का, म |
| ३५ | काश्वकिः ३४ | का |
| ३६ | काण्डायनाः ५८ | बो |
| ३७ | काण्यविजलिः | का |
| ३८ | कावल्याः ४६ | बो |
| ३९ | काम्बोदकाः ४७ | ,, |
| ४० | कायनः | का |
| ४१ | कारकिः | म |
| ४२ | कारग्रीविः ६ | का |
| ४३ | कारिषायणाः | बो |
| ४४ | कारुणायनाः | ,, |
| ४५ | कारुपथयः | ,, |
| ४६ | कावल्याः ३८ | ,, |
| ४७ | काष्ठोदकाः ३९ | ,, |
| ४८ | कुक्काः | आप |
| ४९ | कुक्षाः | बो |
| ५० | केशरवयः ५१, २११ | बो |
| ५१ | केशस्वेयाः ५०, २११ | ,, |
| ५२ | कौकाक्षयः | ,, |
| ५३ | कौण्डिन्याः ( ल्याः ) | ,, |
| ५४ | कौमुदगन्धयः | ,, |
| ५५ | कौमुदगन्धिः | का |
| ५६ | कौरुक्षेत्रिः | का, म |
| ५७ | कौरुपतिः | म |
| ५८ | क्रौडायनाः ३६ | बो |
| ५९ | क्षाम्यायणाः | ,, |
| ६० | खांखलायनः | का |
| ६१ | खारिग्रीवयः | बो |
| ६२ | खारुडाः ( णाः ) २१४ | ,, |
| ६३ | खालडिः | म |
| ६४ | खेलकाः ७५, २१५ | बो |
| ६५ | गाङ्गोदकिः | का |
| ६६ | गाङ्गोदधिः | म |
| ६७ | गिरुणकर्णिः ८५ | का |
| ६८ | गोद्वेषिः ( षी ) | ,, |
| ६९ | गोमेदगन्धिकः | म |
| ७० | गोवासीनः १८२ | बो |
| ७१ | गोश्वपिङ्गलिः १५८ | म |
| ७२ | गौरिवायनाः | बो |
| ७३ | चिकिपिः ७४ | म |
| ७४ | चिकीर्षिः ७३ | ,, |
| ७५ | चेलकाः ६४, २१५ | बो |
| ७६ | चौपिष्टः २४२ | का |
| ७७ | जित्यद्रोणिः ७९ | म |

| | |
|---|---|
| ७८ जैक्षलायानिः ८२, ८३ | म |
| ७९ जैत्यद्रोणिः ७७ | ,, |
| ८० जैत्रिः | का |
| ८१ जैत्वलायनः | ,, |
| ८२ जैह्मलायानिः ७८, ८३ | म |
| ८३ जैह्वलायनिः ७८, ८२ | ,, |
| ८४ ज्वलयः २४८, २५२ | बो |
| ८५ तूर्णकार्णिः ६७ | का |
| ८६ तृणवकर्णिः | म |
| ८७ तौल्वलिः | का |
| ८८ त्रैतुटिः ( ण्डिः ) | ,, |
| ८९ दाभयः ९० | बो |
| ९० दार्भवः ८९ | ,, |
| ९१ दिष्टाकिः १२७ | म |
| ९२ देवमतयः ९९ | बो |
| ९३ देवयः | ,, |
| ९४ देवरातिः ( रिः ) | म |
| ९५ देवस्थानिः | का, म |
| ९६ देवागारिः ९७ | का |
| ९७ देवागिरिधिः ९६ | ,, |
| ९८ देवाश्वाः | बो |
| ९९ दैवमतयः ९२ | ,, |
| १०० द्रोणिः | का |
| १०१ द्व्याख्येयः | म |
| १०२ द्व्यौगाः १८६ | बो |
| १०३ धान्यायनः १८७ | ,, |
| १०४ धूमगन्धाः | ,, |
| १०५ धूमितः | म |
| १०६ धौताम्बकिः २१६ | का |
| १०७ ध्रागविः | ,, |
| १०८ ध्रौगयः | ,, |
| १०९ नायकिः १९५, १९६ | म |
| ११० नृत्यायनाः | बो |
| १११ नैतुत ( न्त ) यः | ,, |
| ११२ पराहरयः १७५ | ,, |
| ११३ परिणद्धेधाः ११५ | बो |
| ११४ परे ( रो ) षमतिः | का |
| ११५ पारिणध्येयाः ११३ | बो |
| ११६ पुष्पान्वेषिः | म |
| ११७ पैलः | ,, |
| ११८ पौलिः | का |
| ११९ प्रभुः | म |
| १२० प्रवाहणेयाः | बो |
| १२१ प्रवाहिः १२४ | म |
| १२२ प्राग्वं ( ग्वा ) शयः | बो |
| १२३ प्रालेपिः | म |
| १२४ प्रावहिः १२१ | ,, |
| १२५ प्रावाहणेयः | का |
| १२६ फलाहारः | म |
| १२७ बर्हिसादी ९१ | ,, |
| १२८ बाष्कलाः | बो |
| १२९ बाष्कलिः | म |
| १३० बाहलवाः १८३ | बो |
| १३१ ब्रह्मतान्विः | म |
| १३२ ब्रह्मस्तम्बिः | का |
| १३३ ब्रह्मस्तम्भाः | बो |

| | |
|---|---|
| १३४ भद्राधयः १५३ | बो |
| १३५ भरद्वाजः | का |
| १३६ भरद्वाजाः | आश्व, बो |
| १३७ भरुडेयाः १३८ | बो |
| १३८ भरुण्डेयाः १३७ | ,, |
| १३९ भामान्या १५४ | ,, |
| १४० भारद्वाजाः | आप |
| १४१ भूरयः | बो |
| १४२ मगण्डाः १४३ | ,, |
| १४३ मङ्गडाः १४२ | ,, |
| १४४ मत्स्यकायाः १४५ | ,, |
| १४५ मत्स्यकाधाः १४४ | ,, |
| १४६ मत्स्याच्छादः ( द्यः ) | म |
| १४७ महाकपिः | ,, |
| १४८ महावेलाः १४९ | बो |
| १४९ महावैरिलाः १४८ | ,, |
| १५० माणबिद्व्याः १५१ | ,, |
| १५१ मामभिद्यः १५० | ,, |
| १५२ मात्स्यक्षीपः | का |
| १५३ माद्रपतयः १३४ | बो |
| १५४ मामन्याः १३९ | ,, |
| १५५ मारुतः | म |
| १५६ मार्कण्डिः | का |
| १५७ मार्जवृष्टिः १६३ | म |
| १५८ मार्ष्टपिङ्गलिः ७१ | ,, |
| १५९ मालोहरः | का |
| १६० मूलहरः ( रिः ) | म |
| १६१ मैधुनमतिः १६२ | का |
| १६२ मैधुमतिः १६१ | का |
| १६३ मौञ्जवृष्टिः १५७ | म |
| १६४ यज्ञवेश्यः | का |
| १६५ यमस्तम्बाः | बो |
| १६६ राजस्तम्भयः | ,, |
| १६७ राशुगाः २१० | ,, |
| १६८ रुद्राङ्गपथः | ,, |
| १६९ रौक्षाः २४ | ,, |
| १७० लभायनिः १७ | म |
| १७१ वयोक्षिभेदाः | बो |
| १७२ वलभीकयः ३१, १७८ | ,, |
| १७३ वाताङ्गिरथिः | का |
| १७४ वायुस्तम्भाः | बो |
| १७५ वाराहयः ११२ | ,, |
| १७६ वाहाहिः १८५ | म |
| १७७ वालटिः ( हिः ) | का |
| १७८ वालभीकयः ३१, १७२ | बो |
| १७९ वालिशायनिः १८१ | का |
| १८० वा ( बा ) लिशायनिः | म |
| १८१ वासिनयनिः १७९ | का |
| १८२ वासिनायनाः ७० | बो |
| १८३ वाहलवाः १३० | ,, |
| १८४ वाहिः | का |
| १८५ वाह्यकच्चः २७६ | म |
| १८६ वाह्याः १०२ | बो |
| १८७ विन्धायनाः १०३ | ,, |
| १८८ विष्णुस्तम्भाः | ,, |
| १८९ वेदवेलाः | ,, |

| | |
|---|---|
| १९० वेलाः १९३ | बो |
| १९१ वेशाः ( श्याः ) | ,, |
| १९२ वैयुः १९४ | का |
| १९३ वैलाः १९० | बो |
| १९४ वैषुः १९२ | का |
| १९५ व्यटाकिः १०९, १९६ | म |
| १९६ व्याढाकिः १०९, १९५ | ,, |
| १९७ शठाः | बो |
| १९८ शलालयः २०२ | ,, |
| १९९ शाकलाः ३०, ३३ | ,, |
| २०० शार्दूलयः | ,, |
| २०१ शालङ्कायनिः | म |
| २०२ शालानिः १९८ | बो |
| २०३ शालाहलयः २०४ | ,, |
| २०४ शालाहारिः २०३ | ,, |
| २०५ शिक्षायनाः २०७ | ,, |
| २०६ शिखाग्रीविः २५१ | म |
| २०७ शिखायनाः २०५ | बो |
| २०८ शिलातलिः २०९ | म |
| २०९ शिलास्थलिः २०८ | ,, |
| २१० शृङ्गाः १६७ | बो |
| २११ शैकेयाः ५०, ५१ | ,, |
| २१२ शौद्धयः | ,, |
| २१३ श्यामेयाः | ,, |
| २१४ श्वारुडाः ६२ | ,, |
| २१५ श्वेलकाः ६४, ७५ | ,, |
| २१६ षारितौचाकिः १०६ | का |
| २१७ सघोपकृतिः २१९, २४६ | बो |
| २१८ सत्यकेयाः २३२, २३३ | बो |
| २१९ सद्योपकृताः २१७, २४६ | ,, |
| २२० सरिद्भविः | म |
| २२१ साङ्गिः २३७ | का |
| २२२ साज्यङ्किः २५० | ,, |
| २२३ सात्यमुग्रिः | ,, |
| २२४ साद्यसुग्रीविः | म |
| २२५ सामस्तम्बिः ( विः ) | का |
| २२६ सारावरिः | का |
| २२७ सालडिः | म |
| २२८ सालहिः २२९ | का |
| २२९ सालुटिः २२८ | ,, |
| २३० सिन्धवः | बो |
| २३१ सूर्यस्तम्भाः | ,, |
| २३२ सेध्यकैयाः २१८, २३३ | ,, |
| २३३ सैंहिकेयाः २१८, २३२ | ,, |
| २३४ सोमतन्विः | म |
| २३५ सोमस्तंभाः | बो |
| २३६ सौगेयः | का |
| २३७ सौङ्गिः २२२ | ,, |
| २३८ सौजपृश्निः | ,, |
| २३९ सौद्धयः २१२ | बो |
| २४० सौबुद्धिकः | का |
| २४१ सौरभः | बो |
| २४२ सौविष्ठः ७६ | का |
| २४३ सौविष्ट्यः | म |
| २४४ स्तनकर्णाः | बो |
| २४५ स्तम्बस्तम्भशब्दान्ताः आप, | बो |

| | | | | | |
|---|---|---|---|---|---|
| २४६ | स्तम्भप्रकृतयः २१७, २१९ | बो | २५१ | स्वाराग्रीविः २०६ | म |
| २४७ | स्तैदेहाः २४९ | ,, | २५२ | स्वोज्वलयः ८४, २४८ | बो |
| २४८ | स्तौज्वलयः ८४, २५२ | ,, | २५३ | हरिकर्णिः | का |
| २४९ | स्वौदेहाः २४७ | ,, | २५४ | हारिकर्णिः | ,, |
| २५० | स्वज्याङ्कः २२२ | का | २५५ | हालोहरः | ,, |

## ( २५ ) पञ्चविंशः प्रवरः—

### आंगिरस बार्हस्पत्य भारद्वाज गार्ग्य शैन्य

इत्येतं प्रवरं आश्वलायनबोधायनमत्स्याः गर्गानधिकृत्याहुः.

आश्वलायनबोधायनौ पुनः—

### आंगिरस शैन्य गार्ग्य

इतीमं प्रवरं विकल्पतया वदतः.

कात्यायनस्तु—इममेव त्र्यार्षेयप्रवरं गर्गाणां वदति. आपस्तम्बस्तु—

### आंगिरस गार्ग्य शैन्य

इत्येतं प्रवरं गर्गाणामुपादिपदिश्य,

### भारद्वाज गार्ग्य शैन्य

इतीमं प्रवरं विकल्पतयोपदिशति. कात्यायनश्च—

### आंगिरस बार्हस्पत्य भारद्वाज शैन्य गार्ग्य

इत्येतं प्रवरं आत्रेयायन्यादीनामुक्त्वा तित्तिरिकपिभूमिखन्दिनगर्गाणां

### आंगिरस शैन्य गार्ग्य

इत्येतं प्रवरं प्राह.

## ( २५ ) पञ्चविंशो गणः शैन्याः—

| | | | | | |
|---|---|---|---|---|---|
| १ | ऐन्द्रालिः | का | ५ | कपिभूः | म |
| २ | औपमर्कटाः ९१ | बो | ६ | काकायनः | ,, |
| ३ | औपमर्कटिः | का | ७ | काणायनाः ३६ | बो |
| ४ | कापिः | ,, | ८ | काण्वायनाः | म |

| | | |
|---|---|---|
| ९ | कारिरात्रिः १०, ८३ | बो |
| १० | कारी ९ | ,, |
| ११ | कालकृत् | का |
| १२ | कालायनः | ,, |
| १३ | केवलायनः | म |
| १४ | केशमर्थः १५ | का |
| १५ | केष्मरिः १४ | ,, |
| १६ | कैवल्यः ५० | बो |
| १७ | कोपचयाः १८, १९ | म |
| १८ | कोशचयाः १७, १९ | ,, |
| १९ | कौजपथः १७, १८ | ,, |
| २० | कौतुकयः २४ | बो |
| २१ | कौलास्त्रयः | का |
| २२ | क्रियाश्वः | ,, |
| २३ | क्लीवः | ,, |
| २४ | क्रोष्ठकयः २० | बो |
| २५ | क्रोष्टाक्षिः २६ | म |
| २६ | क्रौडिः २५ | ,, |
| २७ | खण्डितः २८ | का |
| २८ | खन्दिनः २७ | ,, |
| २९ | गर्गाः | आश्व, बो, का |
| ३० | गार्धी ८२ | म |
| ३१ | गान्धरायणः ७७ | बो |
| ३२ | गार्ग्यः | म |
| ३३ | गार्ग्याः ५३, ५४ | का |
| ३४ | चक्री ४० | म |
| ३५ | चाक्री ४९ | ,, |
| ३६ | जायावताः ७ | बो |
| ३७ | तालकृत् ८४ | म |
| ३८ | तित्तिरिः | का, म |
| ३९ | तुल्याः | बो |
| ४० | दामी ३४ | म |
| ४१ | नैद्राक्षिः ८७, ८८ | ,, |
| ४२ | पैंगलायनः | का |
| ४३ | पैलिकायः ४६ | म |
| ४४ | पोचिकः | बो |
| ४५ | पौलयः | ,, |
| ४६ | पौलिकायनिः ४३ | म |
| ४७ | प्रेष्यङ्गाः | का |
| ४८ | बलाकिः ५१ | म |
| ४९ | बहुवीती ३५ | ,, |
| ५० | बाभ्याः १६ | बो |
| ५१ | बालाकिः ४८ | म |
| ५२ | बाहुलकयः | बो |
| ५३ | भागिः ३२, ५४ | म |
| ५४ | भागी ३२, ५३ | ,, |
| ५५ | भालवित् | म |
| ५६ | भाल्लविः | का |
| ५७ | भूमिः | ,, |
| ५८ | भृष्टबिन्दवः ६१, ६७ | बो |
| ५९ | भ्रष्टकाः ६० | ,, |
| ६० | भ्रष्टयः ५९ | ,, |
| ६१ | भ्रष्टबिन्दयः ५८, ६७ | ,, |
| ६२ | भ्रष्टकृत् ६९ | म |
| ६३ | भ्रष्टविष्णः ८१, ९४ | ,, |
| ६४ | भ्राजिताक्षयः ६५, ६६ | बो |

| | | | |
|---|---|---|---|
| ६५ भ्राजिताक्षिः ६४, ६६ | बो | ९३ वार्ष्णी | म |
| ६६ भ्राजिनाक्षत्रेयः ६४, ६५ | ,, | ९४ विदुः ६३, ८१ | ,, |
| ६७ भ्राष्टुविदुः ५८, ६१ | ,, | ९५ वेणुहानिः ९६ | बो |
| ६८ भ्राष्ट्रकृत् | का | ९६ बैलहानिः ९५ | ,, |
| ६९ भ्राष्ट्रकृत् ६२ | म | ९७ शङ्खिनाः १०४ | ,, |
| ७० भ्राष्ट्रामितिः | का | ९८ शाकलायनः | म |
| ७१ मधुरावहः | म | ९९ शालङ्कायनः | का |
| ७२ मर्कटिः ७४ | ,, | १०० शिखायनयः | बो |
| ७३ मातुलेयः | का | १०१ श्यामायनाः | का |
| ७४ मार्कटिः ७२ | म | १०२ श्यामायनिः | म |
| ७५ मृत्सङ्गः ११९, १२०, १२३ | ,, | १०३ श्वक्रीडी | ,, |
| ७६ यावक्रिः | का | १०४ सखीनाः ९७ | बो |
| ७७ यौगन्धरायणः ३१ | बो | १०५ सत्यापचयः १०८ | ,, |
| ७८ राजयः | ,, | १०६ सांख्यायनः | म |
| ७९ रातः | म | १०७ साङ्गहवान् | बो |
| ८० रायः | ,, | १०८ सात्यायनिः १०५ | ,, |
| ८१ राष्ट्रपिण्डी ६३, ९४ | ,, | १०९ सापरिवाराः १११ | का |
| ८२ रोषः ३० | ,, | ११० साभारः | म |
| ८३ रौतिः ९ | बो | १११ साम्परिवाराः १०९ | का |
| ८४ लातकृत् ३७ | म | ११२ साम्भरायणाः ११३ | बो |
| ८५ लायकृत् ८६ | ,, | ११३ साम्भरावणाः ११२ | ,, |
| ८६ लावकृत् ८५ | ,, | ११४ सायकायनिः | म |
| ८७ लैत्यालिः ४१, ८८ | ,, | ११५ साहनिः | ,, |
| ८८ लैन्द्राणिः ४१, ८७ | ,, | ११६ साहरिः | ,, |
| ८९ वत्सतरायणः ९० | का | ११७ सोहर्ता १२१ | बो |
| ९० वत्सरायणः ८९ | ,, | ११८ सौयामुनिः | ,, |
| ९१ वाटाः २ | बो | ११९ स्कन्दः ७५, १२०, १२३ | म |
| ९२ वात्स्यतरायणाः | म | १२० स्कन्दसः ७५, ११९, १२३ | ,, |

| | | | | | |
|---|---|---|---|---|---|
| १२१ | स्वाहतः ११७ | बो | १२४ | हात्रायविः १२५, १२६ | बो |
| १२२ | स्वन्दितिः | का | १२५ | होत्रपचयः १२४, १२६ | ,, |
| १२३ | स्वश्वः ७५, ११९, १२० | म | १२६ | होत्रापचयः १२४, १२५ | ,, |

## ( २६ ) षड्विंशः प्रवरः—

## आंगिरस आमहीयव औरुक्षय ( स )

इत्येतं प्रवरं कपीनां आश्वलायनादयस्सर्वे प्राहुः. मत्स्यस्तु—
तित्तिरिकपिभूगार्ग्याणां आङ्गिरस तैत्तिरिकापिभुव इति प्रवरमाह.

## ( २६ ) गणः कपयः—

| | | | | | |
|---|---|---|---|---|---|
| १ | अध्वासुः | का | १९ | काट्यः २३ | म |
| २ | अमावाश्यायनः ५५ | ,, | २० | कात्यायनः | का |
| ३ | ऊर्ध्वस्थः ४, ५ | ,, | २१ | कारीरयः | म |
| ४ | ऊर्वः ३, ५ | ,, | २२ | कुशीदकिः | ,, |
| ५ | ऊर्वसुः ३, ४ | ,, | २३ | क्ष्वजः १९ | ,, |
| ६ | ऐतिशायनाः | बो | २४ | चैतकिः | का |
| ७ | औपीतकिः ५० | ,, | २५ | जलसन्धिः २६, २७ | म |
| ८ | कण्ठरिः | का | २६ | जलसिन्धकिः २५, २७ | ,, |
| ९ | कण्वः | म | २७ | जलसिम्बिः २५, २६ | ,, |
| १० | कपयः | आप, आश्व, बो | २८ | तरस्विः | बो |
| ११ | कपिः १२ | का | २९ | ताण्डिनः | ,, |
| १२ | कापिस्तरिः ११ | ,, | ३० | तित्तिरिः ७४ | का |
| १३ | कपीतरः १४ | म | ३१ | तिवरथिः ३२ | ,, |
| १४ | कपैतरः १३ | ,, | ३२ | तैवरन्धिः ३१ | ,, |
| १५ | करखण्डाः १६ | बो | ३३ | दण्डिः | ,, |
| १६ | करसिखण्डाः १५ | ,, | ३४ | दाक्षिः ३६ | म |
| १७ | कलशीकण्ठाः | म | ३५ | दाडः ४९ | ,, |
| १८ | कलसी | म, का | ३६ | दिक्षः ३४ | ,, |

| | | | |
|---|---|---|---|
| ३७ देवमतिः | म | ५७ विदिः ५८ | का |
| ३८ धान्यायनिः ५६ | ,, | ५८ विदुः ५७ | ,, |
| ३९ पतञ्जलाः | बो | ५९ वैतलायनाः | बो |
| ४० पतञ्जलिः | का, म | ६० वौपडिः ५३ | म |
| ४१ पौष्ट्यः | बो | ६१ शक्तिः | का |
| ४२ बिन्दुः | म | ६२ शम्सपिः ७० | म |
| ४३ भारद्वाजः ४४ | ,, | ६३ शाकरवाः ६४ | बो |
| ४४ भारद्वाजिः ४३ | ,, | ६४ शार्भरवाः ६३ | ,, |
| ४५ भावास्यायनिः ६९ | ,, | ६५ शालिः ६६ | म |
| ४६ भूयसी | का, म | ६६ सलिः ६५ | ,, |
| ४७ भोजसयः ४८ | बो | ६७ सागरः ६८ | बो |
| ४८ भोजासिनः ४७ | ,, | ६८ साम्शयः ६७ | ,, |
| ४९ मादः ३५ | म | ६९ सावस्यायनिः ४५ | म |
| ५० मर्षीतकिः ७ | बो | ७० सासविः ६२ | ,, |
| ५१ राजकेशी | म | ७१ सौजारिः ७२ | ,, |
| ५२ राजिकेशी | का | ७२ सौबुद्धिः ७१ | ,, |
| ५३ रोजदिः ६० | म | ७३ स्वर्दांतरः ७५, ७६ | ,, |
| ५४ लघ्वी | ,, | ७४ स्वस्तरिः ३० | का |
| ५५ वान्यायनः २ | का | ७५ स्वास्तितरः ७३, ७६ | म |
| ५६ वान्यायनिः ३८ | म | ७६ स्वैदतरः ७३, ७५ | ,, |

## ( २७ ) सप्तविंशः प्रवरः—

### आंगिरस बार्हस्पत्य भारद्वाज मान्त्रवर आत्मभुव

इतीमं प्रवरं आत्मभुवां मत्स्य आह.

## ( २७ ) सप्तविंशो गणः आत्मभुवः—

| | | | |
|---|---|---|---|
| १ आत्वारिः २, ५ | म | ३ आत्मभवः ४, ६, ९ | म |
| २ आश्वरिष्कः १, ५ | ,, | ४ आत्महवः ३, ६, ९ | ,, |

| | | | |
|---|---|---|---|
| ५ ऋक्षः १, २ | ग | ८ मन्ववरः १० | ग |
| ६ कथिश्वान् ३, ४, ९ | ,, | ९ मानवः ३, ४, ६ | ,, |
| ७ भरद्वाजः | ,, | १० मैत्रवर ८ | ,, |

## (२८) अष्टाविंशः प्रवरः—

### आंगिरस बार्हस्पत्य भारद्वाज कात्य आत्की (क्षी) ल

इत्येतं प्रवरं आश्वलायनापस्तम्बौ शौङ्गशैशिरीणामाहतु.:

आपस्तम्भः पुनः—

### आंगिरस कात्य आक्षील

इत्येतं प्रवरं विकल्पतयाऽऽह. कात्यायनस्तु—

### आंगिरस बार्हस्पत्य भारद्वाज शौङ्ग शैशिर

इतीमं प्रवरमेषामाह.

## (२८) गणः शौङ्गशैशिरयः—

| | | | |
|---|---|---|---|
| १ ग्राधाः | का | ६ शौङ्गः | का |
| २ भरद्वाजाः | ,, | ७ शौङ्गशैशिरयः | आप, आश्व |
| ३ भारद्वाजः | ,, | ८ शौङ्गाः | का |
| ४ शिशिराः | ,, | ९ हुतः | ,, |
| ५ शैशिरेयः | ,, | | |

## (२९) एकोनत्रिंशः प्रवरः—

### आंगिरस पार्षदश्व वैरूप

इत्येतं प्रवरं पृषदश्वानां आश्वलायन आह. स एव पुनः,

### आष्टादंष्ट्र पार्षदश्व वैरूप

इतीमं प्रवरं विकल्पतया ब्रूते आपस्तम्वबोधायनमत्स्यास्तु—

### आंगिरस वैरूप पार्षदश्व

इत्येतं प्रवरं रथीतराणामाहुः.

## (६६) षट्षष्टितमः प्रवरः–

## वासिष्ठ मैत्रावरुण काण्डिन्य

इतीमं प्रवरं कुण्डिनानां आश्वलायनादयस्सर्वे कथयन्ति.

## (६६) गणः–कुण्डिनाः

| | | | | | |
|---|---|---|---|---|---|
| १ | अक्षतयः | का | २३ | पादपः १५ | म |
| २ | अश्मरथ्यः | बो | २४ | पालोहाः ३९ | ,, |
| ३ | अश्वत्थः | ,, | २५ | पेटकाः २६ | बो |
| ४ | आबल्लबदरः ५ | ,, | २६ | पेठकाः २५ | ,, |
| ५ | आविश्वबदरः ४ | ,, | २७ | पैप्पलादयः | ,, |
| ६ | औपस्वस्थाः | का, म | २८ | पैप्पलादिः | का, म |
| ७ | कापटवः | बो | २९ | बाहवः ४७ | बो |
| ८ | कुण्डिनः ४६ | म | ३० | बोधायनाः ३१ | का |
| ९ | कुण्डिनाः | आश्व, आप, बो, का | ३१ | बौधिः ३० | ,, |
| १० | कौक्रोल्यः ११ | बो | ३२ | भाज्यकिः | बो |
| ११ | क्रोङ्कोल्यः १० | बो | ३३ | माक्षतयः ३४ | म |
| १२ | ग्गुलिः | ,, | ३४ | माक्षितयः ३३ | ,, |
| १३ | जातूकण्याः ५४ | म | ३५ | माध्यन्दिनः ३६ | बो, म |
| १४ | जातूकर्ण्याः | का | ३६ | माध्यन्दिनिः ३५ | बो |
| १५ | जादयाः २३ | म | ३७ | मित्रावरुणाः | का |
| १६ | तिन्दुः | ,, | ३८ | मौद्गलाः | ,, |
| १७ | तैकर्णयः ५२ | ,, | ३९ | यालोहाः २४ | म |
| १८ | त्रैभृङ्गाः १९ | का | ४० | लुलायाः | का |
| १९ | त्रैश्रृङ्गाः १८ | ,, | ४१ | लोहयः ४२ | का, म |
| २० | त्रैश्रृङ्गायनः | म | ४२ | लोहलाः ४१ | ,, ,, |
| २१ | नवग्रामाः | बो | ४३ | लोहायनाः | बो |
| २२ | पाटलयः | का | ४४ | वयः ४५ | म |

| | | | |
|---|---|---|---|
| ४५ वसिष्ठः ४४ | म | ५७ सामङ्गलिः ५५ | बो |
| ४६ वागुढिनः ८, ५६ | ,, | ५८ सैवल्काः ५९ | म |
| ४७ वाहवः २९ | बो | ५९ सौगूलिः ५८ | ,, |
| ४८ विचक्षुषः ४९ | म | ६० सौपक्षिः ६१ | बो |
| ४९ विचत्कषिः ४८ | ,, | ६१ सौपथिः ६० | ,, |
| ५० विथङ्कषिः ५१ | का | ६२ स्वलोकाः ६३ | का |
| ५१ विश्वङ्कशः ५० | ,, | ६३ स्वलोक्याः ६२ | ,, |
| ५२ वैकर्णयः १७ | बो | ६४ स्वसुलः ६५ | ,, |
| ५३ शान्तिः ६७ | ,, | ६५ स्वस्थयः ६४ | ,, |
| ५४ शिवकर्णः १३ | म | ६६ स्वस्थलयः | म |
| ५५ साङ्गलिनः ५७ | बो | ६७ स्वातिः ५३ | बो |
| ५६ सातमाः ४६ | म | ६८ हिरण्याक्षायणाः | ,, |

## ( ६७ ) सप्तषष्टितमः प्रवरः—

## वासिष्ठ आत्रेय जातूकर्ण्य

इतीमं प्रवरं जातूकर्ण्यानां मत्स्य उपदिशति.

## ( ६७ ) गणः—जातूकर्ण्याः

| | | | |
|---|---|---|---|
| १ अलम्बवाचनाः | म | ६ पादपः | म |
| २ क्रोडोदरायणाः | ,, | ७ महाचर्याः | ,, |
| ३ दानकायाः | ,, | ८ वयः | ,, |
| ४ नागेयाः | ,, | ९ शिवकर्णः | ,, |
| ५ परमाः | ,, | | |

## ( ६८ ) अष्टषष्टितमः प्रवरः—

## आगस्त्य दार्ढ्यच्युत ऐध्मवाह

इतीमं प्रवरं आश्वलायनापस्तम्बबोधायनकात्यायना अगस्तीनां वदन्ति.

आपस्तम्बः पुनः—

**आगस्त्य**

इत्येकार्षेयं प्रवरं विकल्पमाह.

आश्वलायनः पुनः—

**आगस्त्य दार्ढ्यच्युत सौमवाह**

इतीमं प्रवरं विकल्पमाह. बोधायनस्तु—

इममेव प्रवरं सोमवाहानधिकृत्य कथयाति.

## ( ६८ ) गणः—सौमवाहाः

| | | | | | |
|---|---|---|---|---|---|
| १ | अगवाः | का | १९ | धारिणिः २३ | का |
| २ | अगस्तयः | आश्व, आप, बो | २० | निर्वैरिणः ४४ | ,, |
| ३ | अर्बुदाः | का | २१ | पाथोद्धताः २२ | बो |
| ४ | अवतानः | ,, | २२ | पाथोहृताः २१ | ,, |
| ५ | उपकुलः | ,, | २३ | पारिणिः १९ | का |
| ६ | औदहयनः ७ | बो | २४ | बवदयः ३९ | बो |
| ७ | औपदहनयः ६ | ,, | २५ | बुधोदयः २६ | ,, |
| ८ | कल्मापः | का | २६ | बुधोदरिः २५ | ,, |
| ९ | कालायनाः १२ | बो | २७ | मेदिनपञ्चकः | का |
| १० | कुल्माषः | ,, | २८ | मोक्षतिः ११ | ,, |
| ११ | क्षौमितिः २८ | का | २९ | मौजिकयः ३० | बो |
| १२ | खलायनाः ९ | बो | ३० | मौञ्जिकयः २९ | ,, |
| १३ | गाव्यवाः १४ | का | ३१ | मौशलयः ३२ | ,, |
| १४ | गोव्याधिः १३ | ,, | ३२ | मौसलयः ३१ | ,, |
| १५ | दाण्डः | बो | ३३ | रोहिः ३४ | ,, |
| १६ | दारुतापायनाः | का | ३४ | रोहिष्याः ३३ | ,, |
| १७ | देवताः | ,, | ३५ | लाप्यः ३७ | ,, |
| १८ | द्वारिग्रीवाः ५१ | बो | ३६ | लावणिः ३८ | ,, |

| | | | |
|---|---|---|---|
| ३७ लाब्यः ३५ | बा | ४५ शाल्यातपाः | बो |
| ३८ वावर्णाः ३६ | ,, | ४६ शैरिषः | का |
| ३९ वरण्डिः २४ | ,, | ४७ सुकुलापकारी | ,, |
| ४० वित्तपः | का | ४८ सैवपथयः | बो |
| ४१ विशालाद्याः | बो | ४९ सोमवाहाः | ,, |
| ४२ वैरणयः ४३ | ,, | ५० सौरिभागः | का |
| ४३ वैरण्डिः ४२ | ,, | ५१ हारिग्रीवाः १८ | बो |
| ४४ वैरिणिः २० | का | ५२ हैमवहवाः | ,, |

## ( ६९ ) एकोनसप्ततितमः प्रवरः—

### आगस्त्य दार्ढ्यच्युत साम्भवाह

इतीमं प्रवरं सम्भवाहानां बोधायन आह.

### ( ६९ ) गणः—साम्भवाहाः

| | |
|---|---|
| १ सम्भवाहाः | बो |

## ( ७० ) सप्ततितमः प्रवरः—

### आगस्त्य दार्ढ्यच्युत याज्ञवाह

इतीमं प्रवरं यज्ञवाहानां बोधायन आह.

### ( ७० ) गणः—याज्ञवाहाः

| | |
|---|---|
| १ यज्ञवाहाः | बो |

## ( ७१ ) एकसप्ततितमः प्रवरः—

### आगस्त्य माहेन्द्र मायोभुव

इतीमं प्रवरं कात्यायनमत्स्यावाहतुः.

### ( ७१ ) गणः—मायोभुवाः

| | | | |
|---|---|---|---|
| १ अगस्तयः | का, म | ३ करम्भयः | का, म |
| २ करटाः | ,, ,, | ४ कुनाडाः ५ | का |

| | | | |
|---|---|---|---|
| ५ कुरुनाडचः ४ | का | १३ गान्धारायणाः | म |
| ६ कौशल्याः ७ | का, म | १४ पुलहः | का |
| ७ कौसल्या ६ | ,, ,, | १५ पौलस्त्यः | ,, |
| ८ क्रतुः | का | १६ पौलस्त्याः | म |
| ९ क्रतुवंशभवाः | म | १७ पौलहाः | ,, |
| १० खगेवसः ११ | का | १८ मयोभुवः | का, म |
| ११ खमेवसः १० | ,, | १९ सुमेधसः | ,, ,, |
| १२ गान्धरायणाः | ,, | | |

## ( ७२ ) द्विसप्ततितमः प्रवरः—

### आगस्त्य पौर्णमास पौरण

इतीमं प्रवरं कात्यायनमत्स्यावाहतुः.

### ( ७२ ) गणः—पौरणाः

| | | | |
|---|---|---|---|
| १ पारणाः | का, म | २ पूर्णमासाः | का, म |

## ( ७३ ) त्रिसप्ततितमः प्रवरः—

### आगस्त्य हैमवर्च हैमोदक

इतीमं प्रवरं शाक्रादीनां दर्पणकारो दर्शयति—

**शाक्रः शुकः हंसः चाषः हिमोदकः हेमवर्मिः**

### आगस्त्य पौनायक पाणिक

इतीमं प्रवरं विमल्यादीनां दर्पणकारो दर्शयति—

**विमलिः मामिकिः पाणिकः पिनायकः नन्दिः भिलिः चिलिः**

### ( ७३ ) गणः—पाणिकाः

## ( ७४ ) चतुस्सप्ततितमः प्रवरः—

### मानव ऐल पौरुरवस

इतीमं प्रवरं क्षत्रियाणां आश्वलायनापस्तम्बबोधायनकात्यायना वदन्ति.

## ( ७५ ) पञ्चसप्ततितमः प्रवरः–

### भालन्दन वात्सप्रि मौङ्कल

इतीमं प्रवरं वैश्यानां बोधायन आह. आपस्तम्बस्तु—

### वात्सप्रि

इत्येकार्षेयप्रवरमेषामुपदिशति. तथा आपस्तम्बकात्यायनौ—

### मानव

इत्येकार्षेयं प्रवरं क्षत्रियवैश्ययोरुपदिशतः.

इत्याश्वलायनापस्तम्बबोधायनकात्यायनमत्स्योक्ताः दर्पणकृदुक्ताः प्रवरा गोत्रगणाश्च सम्पूर्णाः.



*

# आश्वलायनप्रवरकाण्डं

## नारायणीयवृत्तिसहितम्.

## आश्वलायनश्रौतसूत्रे उत्तरषट्के षष्ठाध्याये दशमी कण्डिका.

**सर्वे समानगोत्रास्स्युरिति गाणगारिः कथं ह्याप्रीसूक्तानि भवेयुः कथं प्रयाजा इति ॥ १ ॥**

सत्राण्युक्तानि तेषां च बहुयजमानत्वमुक्तम्। बहुषु च समानार्षेयाः भिन्नार्षेयाश्च संभवन्ति। तत्र भिन्नार्षेयाणां सत्रासनं नास्तीति गाणगारिराचार्यो मन्यते। कुतः? कथं ह्याप्रीसूक्तानि भवेयुः कथं प्रयाजा इति, भिन्नार्षेयत्वे सत्येवमादीनि कथं भवेयुरित्यर्थः। अतः सर्वे सत्रिणः समानगोत्राः स्युरित्युक्तम्। आर्षेयः प्रवर इति पर्यायौ। ऋषिरिति वंशनामधेयभूता वत्सविदार्ष्टिषेणादयः शब्दा उच्यन्ते। गोत्रशब्दः 'अपत्यं पौत्रप्रभृति गोत्रम्' इत्येवं पारिभाषिकोऽस्ति। अन्यथा च अपारिभाषिक एवास्ति। यथोक्तं भगवता बोधायनेन— 'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयोऽगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते।' अयमर्थः। एतेषामपत्यमिति ये स्मर्यन्ते ते तद्गोत्रमित्युच्यन्ते। यथा—जमदग्नेर्गोत्रं वत्सादयः। तथा गौतमस्यायास्यादयः। भरद्वाजस्य दक्षगर्गादयः। तथाऽन्यादीनां स्वस्ववर्ग्या इति। तथाऽर्षेयगोत्रशब्दयोः भिन्नविषयत्वं शिष्टव्यवहारे दृष्टम्। यथाऽऽह याज्ञवल्क्यः—'अरोगिणीं भ्रातृमतीमसमानर्षगोत्रजाम्' इति। तथा— 'पिण्डगोत्रऋषिसम्बन्धा रिक्थं भजेरन्' इत्येवं व्यवहारा बहवः सन्ति। अस्मिंस्तु सूत्रे गोत्रशब्द आप्यादेरनुष्ठेयत्वादनर्थमित्येकत्वादेकोपाधिवचनेनाभिप्रेतः। 'यावन्तोऽनन्तर्हिताः समानगोत्रास्तावतां सकृत्' इत्यत्र सूत्रे समानप्रवरमात्रोपाधिवचनो गोत्रशब्दः प्रयुक्तः। यस्त्वगस्त्याष्टमानां अन्येष्वपि गोत्रशब्दो लोके प्रयुज्यमानो दृश्यते मित्रयुवगोत्रोऽहं मुद्गलगोत्रोऽहमित्येवमादिषु, स चौपचारिकोऽ-

परामर्शजः प्रयोगः अगस्त्याष्टमानामपत्येषु अयास्यगर्गकुण्डिनादिषु गौतमभरद्वाजवसिष्ठादिषु गोत्रत्वमस्ति, तत्सामान्यं दृष्ट्वा मित्रयुवमुद्गलादिषु अपरामर्शेन लौकिकाः प्रयुञ्जते। अस्यायमर्थः इति स्मरन्ति। अतो भगवतो बोधायनस्य स्मृत्यन्तर उक्त एव गोत्रशब्दस्यार्थ इति निश्चिनुमः। व्याकरणस्मृतिश्चाप्यस्या न बाधिका सामान्यविशेषरूपत्वात्तयोः ॥ १ ॥

**अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात् ॥ २ ॥**

गाणगारिणा समानविधानानामेव सत्रसम्बन्धे उक्ते शौनक आचार्य आह समानगोत्राणामेवेति न नियमः। नानागोत्रा अपिः सत्रमासीरन्निति। कुतः? तन्त्राणां व्यापित्वात्। तन्त्रशब्देनात्र सर्वपुरुषसाधारणोऽङ्गसमुदाय उच्यते। तस्य च व्यापित्वमस्त्येव ॥ २ ॥

कथं पुनरसाधारण इति पदार्थ इति तत्राह—

**गृहपतिगोत्रान्वया विशेषाः ॥ ३ ॥**

अयमर्थः—ये विशेषा असाधारणाः ते गृहपतिगोत्रान्वया गृहपतिविधानानुगुणाः कर्तव्याः। एतदुक्तं भवति—असमानविधानानामपि सत्रासनं भवति। प्रायेणाङ्गसमुदायस्य अविरोधित्वात्। ये केचन विरोधिनस्ते गृहपतेरविरोधित्वेन कर्तव्या इति ॥ ३ ॥

ननु गृहपत्यविरोधेन सत्रे कृते येषां विरोधस्तेषां फलसम्बन्धो न स्यादित्यत आह—

**तस्य राद्धिमनु राद्धिः सर्वेषाम् ॥ ४ ॥**

तस्य गृहपतेः फलसिद्धिमनु सर्वेषां सत्रिणां फलसिद्धिर्भवत्येव। कुतः! 'तन्मुखाः सत्राण्यासते' इति वचनात्। अत एव सूत्रकारस्यायमेव पक्ष इति गम्यते ॥ ४ ॥

**प्रवरास्त्वावर्तेरन्नावापधर्मित्वात् ॥ ५ ॥**

आप्यन्त इत्यावापा आहवनीयाः, ते च प्रवरेण धर्मेण धर्मिणः तस्य प्रवरस्याहवनीयसंस्कारत्वादाहवनीयधर्म इत्युच्यते, अत आहवनीयबहुत्वात् प्रतिप्रधानमावर्तन्त इत्युच्यते आवापधर्मित्वादित्ययमर्थः। आवापानामाहवनीयानां प्रवरं प्रति धर्मित्वादिति। एवं प्रवरानुक्रमणस्य प्रसङ्गमापाद्यानन्तरं प्रवराननुक्रमिष्यति

' जामदग्न्या वत्साः ' इत्येवमादिना ग्रन्थेन । तत्तदनुक्रमणस्येदं प्रयोजनं श्रुतावेतावन्मात्रमस्ति । कस्यांचिदेवं श्रूयते ' आर्षेयान् वृणीते आम्नातानृषीन् मन्त्रकृतो वृणीते न चतुरो वृणीते न पञ्चातिवृणीते ' इति । अयमर्थः, आर्षेयवरण मन्त्रकृत्त्वं विशेषणत्वेनोच्यत । अतो ये आम्नातानामृषीणां मन्त्रकृत्त्वेनाम्नायन्ते तेषामेकाहाहीनानां यथेष्टसंख्याकानां वरणे प्राप्ते ' न चतुरो वृणीते न पञ्चातिवृणीते ' इति चतुर्णामतिपञ्चानां च प्रतिषेध इति वाक्यत्रयमस्यां श्रुताविति वर्णयन्ति । अन्यस्यामन्यथा श्रूयते । ' आर्षेयं वृणीते एक वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते ' इति । अयमर्थः । ' त्रीन् वृणीते ' इत्येवात्र विधिः, इतरेषां कश्चिदवयुत्यानुवादं इति वर्णयन्ति । इमामेव श्रुतिमुपन्यस्य न्यायविद्भिरयमेवार्थो वर्णितः ' अत्र्यार्षेयस्य हानं स्यादधिकारात् ' इति । पूर्वोक्तश्रुत्यनुसारेणात्र्यार्षेयाणामप्यधिकारोऽस्तीति कल्पकाराणां सूत्रकाराणां च प्रवृत्तिरिति सैवानुसृताऽस्माभिः । तत्र ये आत्मीया ऋषयस्तेषां ये मन्त्रकृतस्ते प्रोक्तसंख्या वरीतव्या इत्येतावन्मात्रं श्रुतितोऽवगतम् । तत्रैते आत्मीयाः तेषामेते मन्त्रकृत इति ज्ञाने न श्रुतिः स्मृतिरेवात्र शरणम् । तत्र एतावदेव लौकिकानां स्मरणं दृश्यते वयं वत्साः वयं विदाः वयमायास्या वयं रथीतराः वयं कण्वाः वयं गविष्ठिराः वयं कर्षणाः वयं कुण्डिनाः वयं गर्गाः इति नास्माकमेते श्रूयन्ते तन्त्रकृतो मन्त्रकृतः इति स्मरन्ति अपिच द्व्यार्षेयास्त्र्यार्षेयाः पञ्चार्षेया इति च स्मरन्ति । अपि चास्माकमाङ्गिरोमुख्यः प्रवरोऽष्टादंष्ट्रमुखो वेति च स्मरन्ति । अथ चैतेषां ज्ञानस्य स्मरणादन्यत् प्रमाणं नास्ति । आर्षेयवरणविध्यपेक्षितं चैतज्ज्ञानम् । एवं चेत् कल्पसूत्राणां वंशनामधेयभूतभित्रयुवादिविषया श्रुतिर्लोके उपजीव्या । उद्देशेनास्यैत एतावन्तः अस्यैको द्वावस्य पञ्चास्य त्रयोऽस्य त्रयो वा पञ्च वाऽस्य एको वा त्रयो वा पञ्च वा इत्यस्यार्षं मुखतः पञ्चैवेत्येवमादिपदार्थविषयत्वादिकल्पानां*श्रुतिमागच्छन्तोऽयं प्रभ्रंशपरिहारार्थं स्वेस्वे कल्पे सूत्रेण निरुन्धन्ति । प्रवरादिस्वीयसंज्ञायाः आपत् प्रवरानुक्रमस्य प्रयोजनमित्यवगन्तव्यम् ॥ ९ ॥

---

* कल्पानामित्यस्य स्थाने कालानामित्येकस्मिन् पाठः प्रामादिकः.

इदानीं प्रवरा अनुक्रम्यन्ते—

**जामदग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति ६**

द्विविधा वत्सा जामदग्न्या अजामदग्न्याश्च । तत्र ये जामदग्न्याः वत्साः वयमिति स्मरन्ति तेषां पञ्चार्षेयः प्रवरो भवति, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति ॥ ६ ॥

**अथ ह्यजामदग्न्यानां भार्गवच्यावनाप्नवानेति ॥ ७ ॥**

ये तु वयमजामदग्न्या वत्सा इति स्मरन्ति तेषां त्र्यार्षेयः प्रवरो भवति, भार्गवच्यावनाप्नवानेति । एतेषामजामदग्न्यत्वादौर्वजामदग्न्यशब्दौ न भवतः । अत एव तौ शब्दौ जामदग्न्यत्वप्रयुक्तौ । द्विप्रकाराणां वत्सानां परस्परमविवाहः त्र्यार्षेयसन्निपातात् । एतदुक्तं भगवता बोधायनेन " त्र्यार्षेयाणामविवाहः " इति ॥ ७ ॥

**आर्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति ॥ ८ ॥**

अयमपि पञ्चार्षेयः प्रवरः ॥ ८ ॥

**बिदानां भार्गवच्यावनाप्नवानौर्वबैदेति ॥ ९ ॥**

अयमपि पञ्चार्षेय एव । बिदानामौर्वशब्दसमन्वयाज्जमदग्न्यगोत्रत्वमप्यस्ति । वत्सानां बिदानामार्ष्टिषेणानां च क्वचिदृषिसंनिपातात् क्वचित्सगोत्रत्वाच्च परस्परमविवाहः । सर्वेषु च समानप्रवरत्वादविवाहः । सर्वत्र चैवं समानधर्मेषु ॥९॥

**यस्कवाधौलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्यायनानां भार्गववैतहव्यसावेतसेति ॥ १० ॥**

अयं गणः त्र्यार्षेयः । यस्कादीनां दशानां परस्परमविवाहः । प्रवरेषु क्वचिच्छास्त्रान्तरवशात् पदविपर्यासो वर्णविपर्यासो वा पदान्यत्वं वाऽस्ति न तेन प्रवरान्यत्वं भवतीति मन्तव्यम् ॥ १० ॥

**श्यैतानां भार्गववैन्यपार्थेति ॥ ११ ॥**

त्र्यार्षेयोऽयम् ॥ ११ ॥

**मित्रयुवां वाध्र्यश्वेति त्रिप्रवरं वा भार्गवदैवोदासवाध्र्यश्वेति ॥ १२ ॥**

मित्रयुवामेकार्षेयोऽयं, त्र्यार्षेयो वा प्रवरो भवति । अयं प्रवरविकल्पः सर्वेषां मित्रयुवां भेदेन स्मरणाभावात् । वत्सानां तु स्मरणादेव वत्सभावतद्भेदात् तत्प्रवरस्य व्यवस्था युक्ता । यस्तु तद्विशेषभेदेन प्रवरान्यग्रहणमिति । तदयुक्तं, अगृह्यमाणस्य भेदस्य सत्त्वे प्रमाणाभावात् । प्रवरणभेदः प्रमाणमिति चेत्, न तत् साधकं,

प्रयोगविकल्पेनापि संभवात् । अतो भेदाग्रहणात् व्यवस्थायां प्रमाणं नास्तीति विकल्प एव प्रवरयोरित्यध्यवसितम् । एवमेव त्र्यार्षेयपञ्चार्षेयविकल्पे आद्यपद-विकल्पे वा अन्यस्मिन्नप्येवंविधे ऋषिभेदग्रहणे सति व्यवस्था नास्तीति निश्चीयते ॥ १२ ॥

**शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति॥ १३॥**

एकार्षेयोऽयं त्र्यार्षेयो वा शुनकानां प्रवरः ॥ १३ ॥

इति दशमी कण्डिका.

**गोतमानां आङ्गिरसायास्यगौतमेति । उचथ्यानां आङ्गिरसौचथ्य-गौतमेति । रहूगणानां आङ्गिरसराहूगण्यगौतमेति । सोमराजकानां आंगिरससौमराज्यगौतमेति । वामदेवानां आंगिरसवामदेव्यगौतमेति । बृहदुक्थानां आंगिरसबार्हदुक्थगौतमेति । पृषदश्वानां आंगिरसपार्षदश्ववै-रूपेति । अष्टादंष्ट्रं हैके ब्रुवतेऽतीत्यांगिरसं अष्टादंष्ट्रपार्षदश्ववैरूपेति १॥**

आङ्गिरसाष्टादंष्ट्रयोर्विकल्पः । अतीत्य त्यक्त्वेत्यर्थः ॥ १ ॥

**ऋक्षाणां आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति ॥ २ ॥**

अयं पञ्चार्षेयः प्रवरः ॥ २ ॥

**कक्षीवतां आंगिरसौचथ्यगौतमौशिजकाक्षीवतेति ॥ ३ ॥**

अयमपि पञ्चार्षेय एव ॥ ३ ॥

**दीर्घतमसां आंगिरसौचथ्यदैर्घतमसेति ॥ ४ ॥**

अयं त्र्यार्षेयः । अयास्यौचथ्यरहूगणसोमराजकिवामदेवबृहदुक्थकक्षीवद्दीर्घ-तमस इत्येते गौतमाः । उचथ्यशब्दसमन्वयाद्दीर्घतमसां गौतमत्वमस्त्येव । गौत-मानां सर्वेषामविवाहः । 'पृषदश्वा रथीतरसश्च' इति स्मरन्ति । एतत्पातिन ऋक्षाः पुनर्भारद्वाजाः ॥ ४ ॥

**भरद्वाजाग्निवेश्यानां आंगिरसबार्हस्पत्यभारद्वाजेति ॥ ५ ॥**

भरद्वाजानामाग्निवेश्यानां च अयं प्रवरो भवात ॥ ५ ॥

इत्येकादशी कण्डिका.

मुद्गलानां आंगिरसभार्म्यश्वमौद्गल्येति । तार्क्ष्यं हैके ब्रुवतेऽतीत्यांगिरसं तार्क्ष्यभार्म्यश्वमौद्गल्येति ॥ १ ॥

अयं त्र्यार्षेयः आङ्गिरसतार्क्ष्ययोर्विकल्पः ॥ १ ॥

विष्णुवृद्धानां आंगिरसपौरुकुत्स्यत्रासदस्यवेति । गर्गाणां आंगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । आंगिरसशैन्यगार्ग्येति वा ॥ २ ॥

गर्गाणां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवति । व्यवस्थया विकल्पः न वर्गभेदानवगमादित्युक्तम् । एते च भरद्वाजाः । अग्निवेश्यानां गर्गाणां च भरद्वाजत्वात् सर्वेषां च परस्परमविवाहः । मुद्गला विष्णुवृद्धाश्च एतत्पातिनः ॥ २ ॥

हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति ॥ ३ ॥

हरितकुत्सपिङ्गशङ्खदर्भभैमगवा इत्येतेषां षण्णामयं प्रवरो भवति ॥ ३ ॥

मन्धातारं हैके ब्रुवतेऽतीत्यांगिरसं मान्धात्राम्बरीषयौवनाश्वेति ॥ ४ ॥

अयं वा हरितादीनां षण्णां प्रवरो भवति ॥ ४ ॥

संकृतिपूतिमाषतण्डिशम्बुशैवगवानामांगिरसगौरिवीतसांकृत्येति ॥ ५ ॥

संकृत्यादीनां पञ्चानामयं प्रवरो भवति ॥ ५ ॥

शाक्त्यो वा मूलं शाक्त्यगौरिवीतसांकृत्येति ॥ ६ ॥

संकृत्यादीनामयं वा प्रवरो भवति । एते संकृत्यादयः प्रकरणादंगिरश्शब्दसमवायाच्चांगिरसा इति प्रतीयन्ते । शक्तिगुरुवीतसमन्वयाद्वसिष्ठा इत्यपि प्रतीयन्ते । तथा क्वचित् प्रवराम्नायेऽङ्गिरसां प्रकरण एव संकृत्यादीनादिश्याङ्गिरोमुखमेव प्रवरं पठ्यमानं पश्यामः । तथा कस्मिंश्चित् प्रवराम्नाये वसिष्ठानां प्रकरण एतानवोद्दिश्य शाक्त्यमुखं प्रवरं पठ्यमानं पश्यामः । एवं द्वाभ्यामपि सम्बन्धदर्शनादुभयोरन्यतरसम्बन्धिन एवेत्यवगन्तुं न शक्यते । यद्येषां वंशभेदास्थितिरस्ति तदा इमे आङ्गिरसा इमे वासिष्ठा इत्यवगम्येत । तत्राङ्गिरसानामयं वसिष्ठानामयमिति निवेशे विकल्पाभावः । अतो वंशाभेदात् विकल्प एव प्रवरयोः । ततः संकृत्यादीनां वसिष्ठत्वाभावे प्रमाणाभावाद्वसिष्ठैरेषामविवाहः ॥ ६ ॥

इति द्वादशी कण्डिका ।

कण्वानामांगिरसाजमील्हकाण्वेति । घोरमु हैके ब्रुवतेऽवकृष्याजमील्हमांगिरसघौरकाण्वेति ॥ १ ॥

अवकृष्येति अपोह्येत्यर्थः ॥ १ ॥

कपीनामांगिरसामहीयवौरुक्षयसेति । अथ य एते द्विप्रवाचना यथैतच्छौंगशैशिरयो भरद्वाजाश्शुंगाः कताश्शैशिरयः ॥ २ ॥

अथेदानीमिदमुच्यते । ये एते द्विप्रवाचना ऋषिद्वयव्यपदेश्याः । यथा एते शौङ्गशैशिरयो द्व्यामुष्यायणाश्शौङ्गेयस्य क्षेत्रे शैशिरेयबीजोत्पन्नानां वंशाः । अन्येषां वा भिन्नार्षेयक्षेत्रजोत्पन्नानां वंशा इत्यैवोदाहरणम् । शौङ्गशैशिरिग्रहणं प्रदर्शनार्थम् । सर्वे हि ते भिन्नार्षेयाः । यस्माद्भरद्वाजाश्शुङ्गास्तेषामयं प्रवरः आंगिरसबार्हस्पत्यभारद्वाजेति ॥ कताश्शैशिरयस्तेषां वैश्वामित्रकात्यात्कीलेति । एवं स्थिते कथमेतेषामार्षेयप्रवरणामिति प्रसङ्गमुक्त्वाऽऽह ॥ २ ॥

तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः ॥ ३ ॥

त्र्यार्षेयवरणपक्षे एवं भवति ॥ ३ ॥

द्वौ वेतरतस्त्रीनितरतः ॥ ४ ॥

पञ्चार्षेयवरणपक्षोऽयम् ॥ ४ ॥

न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामति प्रवरणम् ॥ ५ ॥

अत उभयतो द्वौद्वौ न ग्रहीतव्यौ । कुतः चतुर्णां वरणानिषेधात्, अति पञ्चानां प्रवरानिषेधात् । तत् द्वयोरेकार्षेयत्वेऽपि द्व्यार्षेयवरणमनुज्ञातमिति गम्यते ॥ ५ ॥

आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ॥ ६ ॥

प्रदर्शनमात्रमेतत् । द्व्यामुष्यायणलक्षणमुच्यते ।
अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुतः ।
आवयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

इति याज्ञवल्क्यवचनादेवंप्रकारमेव द्व्यामुष्यायणत्वं, नान्यथेति मन्तव्यम् । द्व्यामुष्यायणानां सर्वेषां पक्षद्वयेऽप्यविवाहः द्व्यामुष्यायणात्वाभावे वा 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च' इत्यस्य वचनस्याविषयः ॥ ६ ॥

इति त्रयोदशी कण्डिका.

अत्रीणामात्रेयार्चनानसश्यावाश्वेति । गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति ॥ १ ॥

अत्र द्विविधा अत्रय उक्ताः अन्यत्रान्ये च सन्ति । तेषां सर्वेषामत्रीणां परस्परमविवाहः । एवमुत्तरे क्वचिद्द्रष्टव्यम् ॥ १ ॥

चिकितगालवकालबवमनुतन्तुकुशिकानां वैश्वामित्रदैवरातौदलेति २

चिकितानां गालवानां कालानां बवानां मनुतन्तूनां कुशिकानामित्येतेषां षण्णामयं प्रवरो भवति ॥ २ ॥

श्रौमतकामकायनानां वैश्वामित्रदैवश्रवसदैवतरसेति ॥ ३ ॥

श्रौमतानां कामकायनानामयं प्रवरः ॥ ३ ॥

धयञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति । अजानां वैश्वामित्रमाधुच्छन्दसाज्येति । रोहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति । अष्टकानां वैश्वामित्रमाधुच्छयन्दसाष्टकेति ॥ ४ ॥

धनञ्जयाजरोहिणाष्टकविश्वामित्रास्त्रिप्रवराः ॥ ४ ॥

पूरणवारिधापयन्तानां वैश्वामित्रदैवरातपौरणेति ॥ ५ ॥

पूरणानां वारिधापयन्तानामयं प्रवरः ॥ ५ ॥

कतानां वैश्वामित्रकात्यात्कीलेति । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । रेणूनां वैश्वामित्रगाधिनरैणवेति । वेणूनां वैश्वामित्रगाधिनवैणवेति । शालङ्कायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति ॥ ६ ॥

पञ्चानामयं प्रवरो भवति । लोहितजह्नूनामिति समस्यैके । एते विश्वामित्राः एतेषां सर्वेषामविवाहः ॥ ६ ॥

कश्यपानां काश्यपावत्सारासितेति । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । रेभाणां काश्यपावत्साररैभ्येति । शण्डिलानां शाण्डिलासितदैवलेति ॥ ७ ॥

एते कश्यपाः । एतेषां परस्परमविवाहः ॥ ७ ॥

**काश्यपासितदैवलेति वा ॥ ८ ॥**

शण्डिलानां काश्यपशाण्डिलयोर्विकल्पः ॥ ८ ॥

इति चतुर्दशी कण्डिका.

---

**वासिष्ठेति वसिष्ठानां येऽन्य उपमन्युपराशरकुण्डिनेभ्यः ॥ १ ॥**

उपमन्युपराशरकुण्डिनातिरिक्ता वासिष्ठा एकार्षेयाः ॥ १ ॥

**उपमन्यूनां वासिष्ठाभरद्वस्विन्द्रप्रमदेति । पराशराणां वासिष्ठशाक्त्यपाराशर्येति । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति ॥ २ ॥**

उपमन्युपराशरकुण्डिना वसिष्ठाः एतेषां सर्वेषामविवाहः ॥ २ ॥

**अगस्तीनामागस्त्यदार्ढच्युतैध्मवाहेति । सोमवाहो वोत्तमः आगस्त्यदार्ढच्युतसौमवाहेति ॥ ३ ॥**

उत्तमपदविकल्पः ॥ ३ ॥

**पुरोहितप्रवरो राज्ञाम् ॥ ४ ॥**

उत्तरविवक्षार्थमेतत् 'पौरोहित्यान् राजन्यविशां' इति सिद्धत्वात् ॥ ४ ॥

**अथ यदि सार्ष्टं प्रवृणीरन् मानवैलपौरूरवसेति ॥ ५ ॥**

राजर्षीन्वा राज्ञां इत्युक्तं तस्य स्वरूपमेतेनोच्यते । यदि राज्ञां राजर्षीन् वृणीते तदेत्यर्थः । ( सार्ष्टशब्दो वदनोच्यते । अगौरवं सार्ष्टं सनुत्पत्तिरित्यर्थः ) तथा हि सर्वेषां राजन्यानां मन्विलपुरूरवादयो वंशकारा इति स्मर्यते तेषां वरणमित्यर्थः ॥ ५ ॥

## अथ श्रौतसूत्रपरिशिष्टभागः ।

**भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः ।**
**श्यैतादयस्त्रयस्तेषां विवाहो मिथ इष्यते ॥ १ ॥**
**षण्णां वै गौतमादीनां विवाहो नेष्यते मिथः ।**
**दीर्घतमा औचथ्यः कक्षीवांश्चैकगोत्रजाः ॥ २ ॥**

भरद्वाजाग्निवेश्यर्क्षाश्शुङ्गाश्शैशिरयः कृताः ।
एते समानगोत्रास्स्युर्गर्गानेके वदन्ति वै ॥ ३ ॥
पृषदश्वा मुद्गला विष्णुवृद्धाः कण्वोऽगस्त्यो हरितस्संकृतिः कपिः ।
यस्कश्चैषां मिथ इष्टो विवाहः सर्वैरन्यैर्जामदग्न्यादिभिश्च ॥ ४ ॥
यावत्समानगोत्रास्स्युर्विश्वामित्रो न ( नु ) वर्तते ।
तावद्वसिष्ठश्चात्रिश्च कश्यपश्च पृथक्पृथक् ॥ ५ ॥
द्व्यार्षेयाणां त्र्यार्षेयसन्निपाते अविवाहः ।
त्र्यार्षेयाणां पञ्चार्षेयसन्निपाते अविवाहः ॥ ६ ॥
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥ ७ ॥
सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते ॥ ८ ॥
एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमन्यत्र भृग्वंगिरसां गणात् ॥ ९ ॥
इत्यसमानप्रवरैर्विवाहो विवाहः ॥ १० ॥

आश्वलायनीयं प्रवरकाण्डं संपूर्णम् ।

# आपस्तम्बप्रवरखण्डं

## कपर्दिस्वामिभाष्यसमेतम्.

सत्रानन्तरं तदर्थं होतृप्रवरा अध्वर्युप्रवराश्चानुक्तत्वाद्वक्ष्यन्ते—

**प्रवरान्व्याख्यास्यामः ॥ १ ॥**

प्रज्ञातबन्धूनां यैरग्निर्व्रीयते ते प्रवराः । तानेतान्विस्तरेण प्रवरान् प्रपञ्चेन वक्ष्यामः ॥ १ ॥

**आर्षेयं वृणीते ॥ २ ॥**

आ                    प्रार्थयते संकीर्तयति । अथवा आर्षेयमृषेरपत्यमाग्निं यजमानोत्पादितत्वात् यजमानस्य ऋषिसन्तानत्वात् । तं वृणीते प्रार्थयते होत्रादिरिति ॥ २ ॥

एवं—

**बन्धोरेव नैत्यथो सन्तत्यै ॥ ३ ॥**

पूर्वऋषिसम्बन्धात् नैव च्यवते । अथो अपि च सन्तत्यै आत्मनः पूर्वेषां च सन्तानावेति ॥ ३ ॥

**न देवैर्न मनुष्यैरार्षेयं वृणीते ऋषिभिरेव वाऽऽर्षेयं वृणीत इति विज्ञायते ॥ ४ ॥**

अपि च विज्ञायते । न देवैः प्रजापत्यादिभिः आर्षेयं वृणीते । न च मनुष्यैर्देवदत्तादिभिरार्षेयं वृणीते । ऋषिभिरेव मन्त्रद्रष्टृभिः वसिष्ठादिभिरार्षेयं वृणीते ॥ ४ ॥

**आर्षेयमन्वाचष्ट ऋषिणा हि देवाः पुरुषमनुबुध्यन्ते इति विज्ञायते५**

अथापरं विज्ञायते—आर्षेयं प्रवरमन्वाचष्टे ऋष्यानुपूर्वीमन्वाचष्टे कस्मादृषिणा पूर्वतनेन देवाः तदपत्यं पुरुषमनुबुध्यन्ते जानते हीति ॥ ५ ॥

**यो वा अन्यस्सन्नथान्यस्यार्षेयेण प्रवृणीते स वा अस्य तदृषिरिष्टं वीतं वृङ्क्ते इति विज्ञायते ॥ ६ ॥**

अपि च विज्ञायते—यो वै यजमानोऽन्यगोत्रस्सन्नन्यस्यार्षेयेण प्रवृणीते स वा ऋषिः अस्य यजमानस्य तदिष्टं यागफलं वीतं ब्राह्मणतर्पणादिफलं वृङ्क्ते गृह्णातीति ॥ ६ ॥

**त्रीन्वृणीते मन्त्रकृतो वृणीते यथर्षिमन्त्रकृतो वृणीत इति विज्ञायते ७**

त्रीन्वृणीते मन्त्रकृतः मन्त्रदृशः मन्त्राणां करणाशक्तेः कृतौ चानित्यत्वप्रसङ्गात् योयो यस्य ऋषिः यथर्षिमन्त्रकृतो वृणीते इति विज्ञायते श्रुतौ ॥ ७ ॥

**अथैकेषामेकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चाति प्रवृणीत इति विज्ञायते ॥ ८ ॥**

अथैकेषां शाखिनां श्रुतौ श्रूयते—आर्षेयं वृणीते एकमृषिं वृणीते इति । अथ द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातित्य षडादीन्वृणीते ॥ ८ ॥

**इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होतेति विज्ञायते ॥ ९ ॥**

इत आर्षेयादारभ्य ऊर्ध्वानार्षेयान् अध्वर्युर्वृणीते तथा—जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अमुतो मूलप्रकृतेरारभ्य अर्वाचः अर्वाक् जातान् होता वृणीते यथा—भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । एवं सर्वत्र ॥ ९ ॥

**पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते ॥ १० ॥**

पुर एनं दधातीति क्षत्रियवैश्ययोर्दार्विहोमिकः अभिजनविद्यावृत्तसहितः तस्य प्रवरेण राजा अभिषिक्तः प्रवृणीते । दर्शपूर्णमासयोरत्र च वचनात् ब्राह्मणोऽपि राज्यं प्राप्तः पुरोहितस्य प्रवरेण प्रवृणीते ॥ १० ॥

**भृगूणामेवाग्रे व्याख्यास्यामः ॥ ११ ॥**

प्रवरव्याख्या प्रतिज्ञाता येषां प्रवरा वक्तव्यास्तेषां मध्ये भृगूणामेव भृगोस्सन्ततिजातानामेव ब्राह्मणानामग्रे प्रथमं व्याख्यास्यामः। किमर्थमिदमुच्यते । वक्ष्यमाणानां वत्सप्रभृतीनां वैन्यान्तानां भृगुत्वं यथा स्यात् इति । तेन तेषां 'भृगूणां त्वेति यथर्ष्याधानं स्यात्' इति 'भार्गवो होता भवति' इति 'तेषां भार्गवः प्राशितृणामेकस्स्यात्' इत्यत्र च ग्रहणमेषां स्यादिति । उक्तिक्रमादेव च सिद्धे अग्रवचनमग्रः एव ये भृगवस्त इह वक्ष्यन्ते न द्व्यामुष्यायणत्वेन पश्चात् भृगुत्वमापन्ना इति ख्यापनार्थम् । एवमविद्यमानभृगुशब्दानां मित्रयूनां च भृगुत्वमेवेति ज्ञापनार्थम् । अथ वा अग्रग्रहणं प्रथमेषां भृगुणा समाख्यानं पश्चादन्यैः ऋषिभिश्चेति ख्यापनार्थम् । तेन जमदग्नीनामौर्वो गौतमः यथर्ष्याधानं भार्गवस्येत्येदमादौ तदपत्यानां ग्रहणं समाख्यानसिद्धं भवतीति । एवकारस्य तु पूर्वोक्तमेव प्रयोजनम् ॥ ११ ॥

**जामदग्ना वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति ॥ १२ ॥**

जामदग्न्या भवन्ति वत्सास्तेषां पञ्चार्षेयः प्रवरो भवति । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता प्रवृणीते जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति अध्वर्युः प्रवृणीते । होतुः प्रवरोऽध्वर्योः प्रवर इति वाऽध्याहारः । एवं सर्वत्र ॥ १२ ॥

**त्र्यार्षेयमु हैके भार्गवौर्वजामदग्न्येति जमदग्निवदूर्ववद्भृगुवदिति १३**

उ हेत्यवधारणे इति होता प्रवृणीते भार्गवौर्वजामदग्न्येति । जमदग्निवदूर्वद्भृगुवदित्यध्वर्युः प्रवृणीते । अस्य ' जामदग्न्योऽजामदग्न्यमामनन्त्येके ' इत्येकवचनान्तेन प्रयोगदर्शनात् बहुवचनान्ते ' जामदग्न्या वत्सा जमदग्नीनां तु पञ्चावत्तं ' इति दर्शनात् शिवादिषु गर्गादिषु च पाठोऽनुमेयः । जमदग्निशब्दस्य शिवादिषु पाठाज्जामदग्नः । जमदग्निशब्दस्य गर्गादिषु पाठाज्जामदग्न्यशब्दे बहुष्वपत्यप्रत्ययस्य लुक् स्यात् ॥ १३ ॥

**एष एवाविकृतः सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डुप्राचीनयोग्यानाम् ॥ १४ ॥**

एष प्रवरोऽविकृतस्स्यात् । सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डुप्राचीनयोग्या इत्येतेषाम् । जाबालशब्दाद्यञि जाबाल्याः ( जाबाल्यवद्वा एव च ) एवमन्येष्वपि गोत्रप्रत्ययान्तेषु समाधिरूहितव्यः । विरोहितशब्दाद्यञि वैरोहित्याः । एवं प्राचीनयोग्याः । इह भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत् समानार्षेया बहव इति सर्वेषां प्रवराचार्याणां दर्शनम् । वसिष्ठानां काश्यपानां च भिन्नविवाहं गर्गा इच्छन्ति । कठानां प्रवरे चैवम् । अन्ये तेषां भिन्नविवाहं नेच्छन्ति । तत्रैतेषां त्रयाणां पक्षाणां बहूनां ऋषीणां समसनाभावादविवाहः । वत्सा बिदा आर्ष्टिषेणा एते पञ्चावत्तिनः एतेषामविवाह इति बोधायनमतिः ॥ १४ ॥

इति प्रथमः पटलः.

---

**अथार्ष्टिषेणानां पञ्चार्षेयः भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति । अनूपवदार्ष्टिषेणवदाप्नवानवच्च्यवनवद्भृगुवदिति । त्र्यार्षेयमु हैके भार्गवार्ष्टिषेणानूपेति । अनूपवदार्ष्टिषेणवद्भृगुवदिति ॥ १ ॥ अथ वीतहव्या यास्कवाधूलमौनमोकाः ॥ २ ॥**

अथ वीतहव्यानाम् । यास्कवाधूलमौनमोका इति पाठः ॥ 'यस्कादिभ्यो गोत्रे' इति बहुषु लोपानित्यत्वाद्यास्कवाधूल इत्येवं बभूव प्रवरे पाठः 'प्रवरान्त्ये तु मोक इत्येव पाठः ॥ १ ॥ २ ॥

**तेषां त्र्यार्षेयो भार्गववैतहव्यसावेदसेति । सवेदोवद्वीतहव्यवद्भृगुवदिति ॥ ३ ॥ अथ गृत्समदाश्शुनकास्तेषामेकार्षेयो गार्त्समदेति होता गृत्समदवदित्यध्वर्युः ॥ ४ ॥**

प्रवृणीत इत्युभयोश्शेषः । सर्वत्रैकार्षेयेषु होता वाध्र्यश्वेति वध्र्यश्ववदित्यध्वर्युरिति ब्रवीति । अन्यत्राध्याहर्तव्यप्रदर्शनार्थम् । आचार्यशैली चैषा ॥ ३ ॥ ४ ॥

**अथ वाध्र्यश्वा मित्रयुवस्तेषामेकार्षेयो वाध्र्यश्वेति होता वध्र्यश्ववदित्यध्वर्युः ॥ ५ ॥**

मित्रयुवो वाध्र्यश्वा भवन्ति तेषामेकार्षेयः । वाध्र्यश्वेति होता । वध्र्यश्ववदित्यध्वर्युः ॥ ५ ॥

**अथ वैन्याः पार्थाः तेषां त्र्यार्षेयो भार्गववैन्यपार्थेति पृथुवद्वेनवद्भृगुवदिति ॥ ६ ॥**

वैन्याः पार्थाः वृद्धिभूताः । इमे भृगवो व्याख्याताः । तेषां चतुर्णां पक्षाणां ऋषीणामसमानत्वात् अन्योन्यतश्च पूर्वैषां च सह विवाहः ॥ ६ ॥

**अथाङ्गिरसाम् ॥ ७ ॥**

अथेत्यधिकारः । अनन्तरं भृगुभ्योऽङ्गिरसां प्रवरा वक्तुमधिक्रियन्ते पृथगधिकारकरणं भूयस्त्वाद्वक्तव्यानाम् । पूर्वत्रोत्तरत्र च प्रतिप्रवरमथशब्देनाधिक्रियते । अर्थवत्वाच्च ॥ ७ ॥

**आयास्या गौतमाः ॥ ८ ॥**

आयास्या केचन गौतमा भवन्ति ॥ ८ ॥

**तेषां त्र्यार्षेयः आंगिरसायास्यगौतमेति गौतमवदयास्यवदंगिरोवदिति । अथौचथ्या गौतमाः तेषां त्र्यार्षेयः । आंगिरसौचथ्यगौतमेति ।**

गौतमवदुचथ्यवदंगिरोवदिति । अथौशिजा गौतमास्तेषां त्र्यार्षेयः आंगिरसौशिजकाक्षीवतेति कक्षीवतवदुशिजवदंगिरोवदिति । अथ वामदेवा गौतमाः । तेषां त्र्यार्षेयः । आंगिरसवामदेवबार्हदुक्थेति । बृहदुक्थवद्वामदेववदंगिरोवदिति ॥ ९ ॥

अथाविद्यमाने गौतमशब्दे औशिजा गौतमा वामदेवा गौतमा इत्येतयोर्गौतमशब्देन विशेषणं क्रियते अन्यैर्गौतमैरेतेषां विवाहो मा भूदिति । किंच एतेषामपि मन्त्रकृदृषिर्गौतमो विद्यत इति ख्यापनार्थं च ॥ ९ ॥

अथ भारद्वाजानां त्र्यार्षेयः । आंगिरसबार्हस्पत्यभारद्वाजेति भरद्वाजवद्बृहस्पतिवदंगिरोवदिति एष एवाविकृतः ॥ १० ॥

कुक्कादिशब्दानां एष एव प्रवरः अविकृतस्स्यात् ॥ १० ॥

कुक्काग्निवैश्यौर्जायनानां सर्वेषां च स्तम्बस्तम्भशब्दानाम् ॥ ११ ॥

ब्रह्मस्तम्बा राजस्तम्बा अग्निस्तम्बास्सोमस्तम्बाः इह कुक्काः कौक्कायना उच्यन्ते । दर्शपूर्णमासयोर्द्विगोत्रस्य आर्षेयवरणमुक्तं सूत्रान्तरे ' द्विगोत्रस्य त्रींस्त्रीनेकैकस्मात् गोत्रादुपलक्षयेत् ' इति । तथा षण्णां प्रवरप्राप्तौ इह ' न पञ्चाति प्रवृणीते ' इति त्रयाणां एकस्मात् गोत्रात् उपलक्षणं अपरस्माद्द्वयोः प्राप्तं तस्य दर्शनार्थं त्र्यार्षेयस्यैवाधिकारे च वरणेऽपि प्रदर्शनार्थं च पुरातनं द्विगोत्रमुदाहर्तुमाह–' अथ द्व्यामुष्यायणानाम् ' इति अस्मिन्नेव प्रदेशे भारद्वाजेन पञ्चार्षेयत्वात् उदाहियमाणस्य ॥ ११ ॥

अथ द्व्यामुष्यायणानां कुलानां यथा शुंगशैशिरयो भारद्वाजाश्शुंगाः कताश्शैशिरयः ॥ १२ ॥

अथ द्व्यामुष्यायणानां द्विगोत्राणां प्रदर्शनार्थं प्रवरा उच्यन्ते । यथा शुङ्गशैशिरयो नाम पुरातनं द्विगोत्रम् । शुङ्गाश्च शैशिराश्च शुङ्गशैशिरयः भरद्वाजाः शुङ्गाः आङ्गिरसाः कताः शैशिरयो विश्वामित्राः ॥ १२ ॥

तेषां पञ्चार्षेयः । आंगिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति अंक्षीलवत्कतवद्भरद्वाजवद्बृहस्पतिवदंगिरोवदिति । त्र्यार्षेयमु हैके आंगिरस-

कात्याक्षीलेति । अक्षीलवत्कतवदंगिरोवदिति । अथ ऋक्षाणां पञ्चार्षेयः । आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति । मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदंगिरोवदिति । त्र्यार्षेयमु हैके आंगिरसवान्दनमातवचसेति । मतवचोवद्वन्दनवदंगिरोवदिति । अथ कपीनां त्र्यार्षेयः आंगिरसामहय्योरुक्षयेति उरुक्षयवदमहय्यवदंगिरोवदिति ॥ १३ ॥

यदस्योत्पत्तिकं गोत्रं तत्र प्रथमवरणं इतरतो द्वितीयमिति द्व्यामुष्यायणप्रवरे अथ द्विगोत्राणां उभयोर्गोत्रयोः अविवाहः तत्सगोत्राणां च ॥ १३ ॥

अथ गर्गाणां त्र्यार्षेय आंगिरसगार्ग्यशैन्येति । शिनिवद्गर्गवदंगिरोवदिति । भरद्वाजमु हैके अंगिरसस्स्थाने भारद्वाजगार्ग्यशैन्येति शिनिवद्गर्गवद्भरद्वाजवदिति ॥ १४ ॥

भरद्वाजमु हैकेऽङ्गिरसस्स्थान इच्छन्ति त्र्यार्षेयाः । त्र्यार्षेयस्यैवाधिकारः न पञ्चार्षेयादीनाम् । अतोऽन्योऽनुज्ञायते भरद्वाजादन्येऽप्यार्षेया एषां विद्यन्त इति । तेन बृहस्पतिरपि । एषामृषिरिति गम्यते तेन सह पञ्चार्षेयो नाम प्रवरः स्यात् आंगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । एवं बहृचानां महाप्रवराचार्याणां च वचनं त्र्यार्षेयत्वे प्रवरः पूर्वोक्तो वा स्यात् भरद्वाजादिर्वा । तत्र भरद्वाजस्य सप्तर्षिस्मरणात् तस्यापि परत्वमिति सह परेणेत्येतन्न विरुध्यते । तत्र प्रवरः भारद्वाजगार्ग्यशैन्येति शिनिवद्गर्गवद्भरद्वाजवदिति । तत्र ऋक्षाणां गर्गाणां भारद्वाजानां परस्परं विवाहो नास्ति । समानार्षेयाणां बहुत्वात् । त्र्यार्षेयत्वे सप्त ऋषयस्सन्तीति अविवाह एव 'त्र्यार्षेयगर्गाणां भरद्वाजऋक्षाणां चाविवाहः' इति गार्गीयप्रवरे चोक्तम् । पञ्चार्षेयाणां वचनमन्तरेणापि अविवाहास्सिद्ध इति ॥ १४ ॥

अथ हरितानां त्र्यार्षेय आङ्गिरसाम्बरीषयौवनाश्वेति । युवनाश्ववदम्बरीषवदाङ्गिरोवदिति । मान्धातारमु हैकेऽङ्गिरसस्स्थाने मान्धात्राम्बरीषयौवनाश्वेति । युवनाश्ववदम्बरीषवन्मान्धातृवदिति ॥ १५ ॥

मान्धातारमु हैकेऽङ्गिरसस्स्थान इच्छन्ति यतः चतुर्णां प्रवरः प्रतिषिध्यते अत-

स्तस्य स्मरणमनर्थकं मा भूदिति अङ्गिरसा तस्यैव विकल्पो न्याय इति वाऽङ्गिरसो यथर्ष्याधाने कृतार्थत्वात् नैव प्रवरो न्याय इति ॥ १५ ॥

**अथ कुत्सानां त्र्यार्षेय आङ्गिरसमान्धात्रकौत्सेति कुत्सवन्मान्धातृवदङ्गिरोवदिति ॥ १६ ॥**

मान्धातुराङ्गिरसश्च तुल्यत्वात् हरितकुत्सानामाविवाहः । बह्वृचानां तु हरितकुत्सपिशङ्गशङ्खदर्भहैमगवानामिति कुत्सानामपि हरितानामेव प्रवरः । तेन च सुतरामविवाहः ॥ १६ ॥

**अथाजमीढाः काण्वास्तेषां त्र्यार्षेय आङ्गिरसाजमीढकाण्वेति । कण्ववदजमीढवदंगिरोवदिति । अथ विरूपा रथीतरास्तेषां त्र्यार्षेय आंगिरसवैरूपपार्षदश्वेति । पृषदश्ववद्विरूपवदंगिरोवदिति । अष्टादंष्ट्रमु हैकेऽङ्गिरसस्थानेऽष्टादंष्ट्रवैरूपपार्षदश्वेति । पृषदश्ववद्विरूपवदष्टादंष्ट्रवदिति ॥ १७ ॥**

पञ्चर्षयो व्रियन्ते । तत्र पञ्चार्षेयोऽपि संभवति स त्वन्योक्तस्तस्मात् समानायामपि सकुल्यतायां व्यवस्थितेनैव विकल्पेन स्मृतिसाध्यव्यवस्था स्यात् इत्यवगन्तव्यः ॥ १७ ॥

**अथ मुद्गलानां त्र्यार्षेयः आंगिरसभार्म्यश्वमौद्गल्येति । मुद्गलवद्भर्म्यश्ववदंगिरोवदिति ॥ तृक्षमु हैकेऽङ्गिरसस्थाने तार्क्ष्यभार्म्यश्वमौद्गल्येति । मुद्गलवद्भर्म्यश्ववत्तृक्षवदिति । अथ विष्णुवृद्धानां त्र्यार्षेय आंगिरसपौरुकुत्सत्रासदस्यवेति । त्रसदस्युवत्पुरुकुत्सवदंगिरोवदिति ॥ १८ ॥**

**एष एवाविकृतश्शठमर्षणभद्रणमन्द्रणबादरायणौपमित्यौपगविसात्याकिसात्यङ्काम्यारुणिनितुन्दीनाम् ॥ १९ ॥**

शठाः मर्षणाः भद्रणाः मन्द्रणाः बादरायणाः औपमितयः औपगवयः सात्यकयः सात्यङ्कामयः आरुणयः नितुन्दयः एष एवाविकृतः ॥ १८ ॥ १९ ॥

**अथात्रीणां त्र्यार्षेयः ॥ २० ॥**

अत्रीणां सर्वेषां त्र्यार्षेयः । पृथगाधिकारो नैव क्रियते अथात इति, अल्पत्वात् प्रवराणाम् ॥ २० ॥

आत्रेयार्चनानसश्यावाश्वेति श्यावाश्ववदर्चनानसवदत्रिवदिति । अथ गविष्ठिराणां त्र्यार्षेयः आत्रेयार्चनानसगाविष्ठिरेति । गविष्ठिरवदर्चनानसवदत्रिवदिति ॥ २१ ॥ अथातिथीनां त्र्यार्षेयः आत्रेयार्चनानसातिथेति । अतिथिवदर्चनानसवदत्रिवदिति ॥ २२ ॥

सर्वेषामत्रीणामविवाहः । ऋषिभूयस्त्वात् ॥ २१॥२२ ॥

एष एवाविकृतो वामरथ्यसुमंगलबीजवापीनाम् ॥ २३ ॥

वामरथ्यानां सुमङ्गलानां बीजवापीनां च अविकृतः ॥ २३ ॥

इति द्वितीयः पटलः

अथ विश्वामित्राणाम् ॥ १ ॥

अथानन्तरमत्रिभ्यो विश्वामित्रा वक्तुमधिक्रियन्ते ॥ १ ॥

देवराताश्चिकितमनुतन्त्वौलकिवारलकियज्ञवल्कोलूकबृहदग्निबभ्रुशालिनीशालावतशालङ्कायनकालबलाः ॥ २ ॥

तत्र चिकिता मनुतन्तवः औलकयो वारलकयः यज्ञवल्काः उलूकाः बृहदग्नयः बभ्रवः शालिन्यः शालावताः शालङ्कायनाः कालबलाः इत्येते देवराता भवन्ति ॥ २ ॥

तेषां त्र्यार्षेयः वैश्वामित्रदैवरातौदलेति । उदलवद्देवरातवद्विश्वामित्रवदिति । अथ श्रौमतकामकायनानां त्र्यार्षेयो वैश्वामित्रदैवश्रवसदैवतरसेति । देवतरसवद्देवश्रवोवद्विश्वामित्रवदिति ॥ ३ ॥

श्रौमताश्च कामकायनाश्च श्रौमतकामकायनाः ॥ ३ ॥

अथाज्यानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसाज्येति । अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति ॥ ४ ॥ अथ माधुच्छन्दा एव धनञ्जयाः तेषां त्र्यार्षेयः वैश्वामित्रमाधुच्छन्दसधानञ्जयेति । धनञ्जयवन्मधुच्छन्दोव-

द्विश्वामित्रवदिति । अथाष्टका लोहिताः तेषां द्व्यार्षेयः वैश्वामित्राष्टकेति । अष्टकवद्विश्वामित्रवदिति ॥ ५ ॥ अथ पूरणाः परिधापयन्त्यः तेषां द्व्यार्षेयो वैश्वामित्रपौरणेति । पूरणवद्विश्वामित्रवदिति ॥ ६ ॥

अथ पूरणाः पारिधापयन्त्यः पूरणवदित्येव पाठः ॥ ४ ॥ ५ ॥ ६ ॥

अथ कतानां त्र्यार्षेयः वैश्वामित्रकात्याक्षीलेति । अक्षीलवत्कतवद्विश्वामित्रवदिति । अथाघमर्षणाः कुशिकास्तेषां त्र्यार्षेयः वैश्वामित्राघमर्षणकौशिकेति । कुशिकवदघमर्षणवद्विश्वामित्रवदिति । अथ कश्यपानां त्र्यार्षेयः काश्यपावत्सारनैध्रुवेति । निध्रुववदवत्सारवत्कश्यपवदिति ॥ ७ ॥

कश्यपानां सर्वेषां त्र्यार्षेयप्रवरो भवति । येषामाहत्यविहितो नास्ति प्रवरस्तेषां काश्यपादीनामपि । पृथगधिकारो न क्रियते पक्षाणामल्पत्वात् । निध्रुवाणां एष एव कश्यपानां प्रवरो न्याय्यः ॥ ७ ॥

अथ रेभाणां त्र्यार्षेयः काश्यपावत्साररैभेति । रेभवदवत्सारवत्कश्यपवदिति ॥ ८ ॥ अथ शाण्डिलानां द्व्यार्षेयः दैवलासितेति । असितवद्देवलवदिति । त्र्यार्षेयमु हैके काश्यपदैवलासितेति । असितवद्देवलवत्कश्यपवदिति । द्व्यार्षेयास्त्वेवं न्यायेन ॥ ९ ॥

द्व्यार्षेया एव शण्डिला भवितुमर्हन्ति न त्र्यार्षेया इत्येके व्याचक्षते । तदनुपपन्नमत्र्यार्षेयस्यानधिकारात् । तस्मादयमर्थः । द्व्यार्षेयास्सर्वे एवमनेन प्रकारेण त्र्यार्षेया एव भवितुमर्हन्ति न शण्डिला एवेति । तेनाष्टकानां लोहितानां वैश्वामित्रलोहिताष्टकेति स्मृत्यन्तरस्य विद्यमानत्वात् त्र्यार्षेयत्वमेव स्यात् । पूरणानां परिधापयन्तीनां वैश्वामित्रदैवरातपौरणेति स्मृतेस्त्र्यार्षेयत्वमेव । तत्र सर्वेषां च शण्डिलानां ऋषिबाहुल्यादविवाहः । विश्वामित्रपक्षेऽपि आज्यानां धनञ्जयानां चाविवाहः । अनुक्तानां सह विवाहः ॥ ८ ॥ ९ ॥

एकार्षेया वासिष्ठा अन्यत्र पराशरेभ्यः ॥ १० ॥

एकार्षेयास्सर्वे वसिष्ठा भवन्ति । अन्यत्रोपमन्युकुण्डिनपराशरेभ्य इति हिरण्यकेशिमातिः उपमन्यून् कुण्डिनान् पराशरान्वर्जयित्वेत्यर्थः ॥ १० ॥

**वासिष्ठेति होता वसिष्ठवदित्यध्वर्युः ॥ ११ ॥**

प्रवृणीत इति शेषः । किमर्थमुपमन्युप्रभृतीनां प्रतिषेधः क्रियते त्र्यार्षेयवत् सिद्धमनेकार्षेयत्वम् । सत्यं सिद्धं नियमार्थं एतेभ्योऽन्येषां तद्वैकल्पिकमिति । तेन जातुकर्णिकानां वैकल्पिकत्र्यार्षेयसम्बन्धो न तु सर्वेषामेव त्र्यार्षेयमु हैक इत्ययं प्रवर उक्तो नोपमन्यूनां पराशराणां कुण्डिनानां च प्रवरान्तरमेव वासिष्ठेन्द्रप्रमदाभरद्वसव्येति आभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदिति ॥ ११ ॥

**अथ पराशराणां त्र्यार्षेयः वासिष्ठशाक्त्यपाराशर्येति । पराशरवच्छक्तिवद्वसिष्ठवदिति । अथ कुण्डिनानां त्र्यार्षेयो वासिष्ठमैत्रावरुणकौण्डिन्येति । कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदिति । अथ सङ्कृतिपूतिमाषाणां त्र्यार्षेयश्शाक्त्यसांकृत्यगौरिवीतेति । गुरिवीतवत्संकृतिवच्छक्तिवदिति ॥ अथागस्तीनामेकार्षेयः आगस्त्येति होता । आगस्त्यवदित्यध्वर्युः ॥ १२ ॥**

प्रवृणीत इति शेषः ॥ १२ ॥

**त्र्यार्षेयमु हैके आगस्त्यदार्ढ्यच्युतैध्मवाहेति । इध्मवाहवद्दृढच्युतवदगस्त्यवदिति ॥ १३ ॥ अथ क्षत्रियाणां यद्यह सार्षं प्रवृणीरन् एक एवैषां प्रवरः ॥ १४ ॥**

अथ क्षत्रियाणां गोत्राणि । अथ क्षत्रियाणां त्र्यार्षेयप्रवरो भवति । अहेति विनिग्रहार्थः । यदि सर्वे क्षत्रिया एकार्षेयं प्रवरं प्रवृणीरन् सार्षं सहार्षेयेण एक एवैषां प्रवरः । अनेन ज्ञायते पृथगार्षेया अपि क्षत्रियास्सन्तीति ॥ १३ ॥ १४ ॥

**मानवैडपौरूरवसेति होता । पुरूरवोवदिडवन्मनुवदित्यध्वर्युः । अथ येषां मन्त्रकृतो न स्युः सपुरोहितप्रवरास्ते प्रवृणीरन् । अथ येषां स्युरपुरोहितप्रवरास्ते ॥ १५ ॥**

अथ येषां क्षत्रियाणां मन्त्रकृतस्स्युः भवन्तीत्यर्थः ॥ १५ ॥

**पुरोहितप्रवरानेव ते प्रवृणीरन् ॥ १६ ॥**

आत्मीयानेव प्रवरान् प्रवृणीरन्नित्यर्थः ॥ १६ ॥

**सपुरोहितप्रवरास्त्वेव न्यायेन ॥ १७ ॥**

तुशब्दो विशेषणार्थः एवशब्दोऽवधारणार्थः । अयमर्थः—क्षत्रियाणां विशेषः। पुरोहितप्रवरा एव ते भवितुमर्हन्ति । न्यायेन सर्वेषां पुरोहितस्य विद्यमानत्वात् आत्मनः कर्मण्यनधिकारात् पुरोहितप्रधाना एव ते भवितुमर्हन्ति इति ॥ १७ ॥

**एकार्षेया विशस्त एव वैश्या उच्यन्ते ॥ १८ ॥**

विट् क्षत्रमोजीयसी स्यादित्यादिव्यपदेशात् बहुवचनं विश इति । सर्वे विशो वैश्याः एकार्षेयाः समानार्षेया भवितुमर्हन्तीति ॥ १८ ॥

**वात्सप्रीति होता वत्सप्रिवदित्यध्वर्युः ॥ १९ ॥ अथासंप्रज्ञातबन्धुः आचार्यामुष्यायणमनु प्रब्रवीत ॥ २० ॥**

आचार्यप्रवरं प्रवृणीत । सम्यक् ज्ञातः प्रवरो यस्य स संप्रज्ञातबन्धुः आचार्यामुष्यायणमाचार्यप्रवरमनुप्रब्रवीत आनुपूर्व्येण ब्रूयात् । आचार्यप्रवरेण प्रवृणीतेत्यर्थः । सामर्थ्यात् ब्राह्मणस्यायं विधिः क्षत्रियाणां पुनरसंप्रज्ञातबन्धूनां पुरोहितप्रवर एव ॥ १९ ॥ २० ॥

**अथाह ताण्डिन एकार्षेयं सार्ववर्णिकं समामनन्ति ॥ २१ ॥**

अहेति विनिग्रहार्थः । ताण्डिनो नाम छन्दोगाः । एकार्षेयं एकमेवार्षेयं सार्ववर्णिकं समामनन्ति पठन्ति ॥ २१ ॥

**मानवेति होता मनुवदित्यध्वर्युः । मानव्यो हि प्रजा इति हि ब्राह्मणमिति हि ब्राह्मणम् ॥ २२ ॥**

मानवेति होता प्रवृणीते मनुवदित्यध्वर्युः । कुत एतदवगम्यते । मानव्यः मा [ मानव ] जातिसामान्याभ्यामित्यधिकारलक्षणयुक्ताः शब्देनोच्यन्ते । यद्यपि ताण्डिनां संदर्शनेन सर्वे मानवगोत्राः प्रभवंति । तथाऽपि भिन्नविवाहं कुर्वन्तीत्येव प्रवरणमात्र एव कल्पितत्वात् । यस्माद्धेतोः ब्राह्मणं प्रत्यक्षमेव श्रुतम् । द्विरुक्तिर्मङ्गलार्था ॥ २२ ॥

इति कपर्दिस्वामिविरचितं आपस्तम्बप्रवरसूत्रभाष्यं समाप्तम्.

॥ श्रीः ॥

# गोत्रप्रवरनिर्णयः ।

## अभिनवमाधवाचार्यविरचितः सव्याख्यः ।

**प्रणम्य परमात्मानं स्वतस्सर्वार्थदायिनम् ।**
**श्रुतीनामादिवक्तारं निमित्तं जगतामपि ॥ १ ॥**

श्रीमद्वैदिकमार्गप्रवर्तकबोधायनापस्तम्बादिमहामुनिप्रणीतप्रवर*सूत्रेषु वैदिकमार्गरक्षणार्थं संगृहीतब्रह्ममीमांसादिविविधन्यायोपबृंहितगोत्रप्रवरसूत्रतात्पर्यं कलिकालमाहात्म्यान्निर्णेतुमक्षमाः गतानुगतिकभ्रान्त्या गोत्रप्रवरशास्त्रविरुद्धसमानगोत्रप्रवरवधूवरविवाहाद्यसत्कर्मप्रवर्तकाः वैदिकबालिशा घोरनरकेषु बहुकालं पतन्तीति शास्त्रदृष्ट्या विचार्य तेषां हितेच्छया गोत्रप्रवरनिर्णयाङ्कश्रौतस्मार्तकर्माणि कृत्वा स्वर्गापवर्गौ विन्दन्त्विति मनीषया वैदिकमार्गप्रतिष्ठान्वयसम्भूतोऽभिनवमाधवाचार्यः अत्यन्तगभीरगोत्रप्रवरशास्त्रसरित्पतिं शास्त्रविचाराभिधमन्दरेण निर्मन्थ्य गोत्रप्रवरनिर्णयामृतं दुदुहे ।

तस्यायमाद्यः श्लोकः—

**सर्वेश्वरं प्रणम्याथ गोत्रसूत्रकृतो मुनीन् ।**
**तनुते माधवाचार्यो गोत्रप्रवरनिर्णयम् ॥ १ ॥**

सर्वोपाधिविनिर्मुक्तं सर्वजगतामाश्रयं मायातीतं सर्वज्ञं सर्वशक्तिस्वलीलाविशेषविहितजगत्सृष्टिस्थितिसंहारहेतुं निर्विकल्पं परं ब्रह्म प्रणम्य, अथ वक्ष्यमाणगोत्रप्रवरकृतो जामदग्न्यादीन् मुनीन्, सूत्रकृतो बोधायनापस्तम्बसत्याषाढहिरण्यकेशियाज्ञवल्क्यप्रभृतीन्मुनींश्च प्रणम्य माधवाचार्यो गोत्रप्रवरनिर्णयाख्यं ग्रन्थं तनुते ॥

**आराधितस्स सर्वेशः श्रौतस्मार्तक्रियापरैः ।**
**सन्तुष्टस्तत्फलं दद्याद्वैदिकेभ्यो न चान्यथा ॥ २ ॥**

* कल्प ।

अग्न्याधानादिश्रौतकर्मसु सन्ध्यावन्दनादिस्मार्तकर्मसु च निष्णातैर्वैदिकैः सम्यक्तुष्टस्स सर्वेशस्तेभ्यो वैदिकेभ्यो यथाविधिविहितकर्मफलं दद्यात् । अन्यथा तत्तत्कर्माकरणे तत्तत्कर्मफलं न ददाति । गोत्रप्रवरनिर्णयाज्ञाने समानगोत्रप्रवरवधूविवाहे पातित्यमेव, न वैदिककर्माधिकारः ततो नरकाद्यनर्थमेव विन्दतीति तदर्थं गोत्रप्रवरनिर्णयाख्यो ग्रन्थ आवश्यको भवतीत्यर्थः ॥

बोधायनापस्तम्बाद्या मुनयो यस्य धारणात् ।
ब्रह्मलोकप्राप्तिमाहुर्ज्ञानाद्ब्राह्मण्यरक्षणम् ॥ ३ ॥
अज्ञानाद्ब्राह्मणत्वादिहान्यनर्थपरम्परा ।
तस्मात्सर्वेष्टसिद्ध्यर्थं सर्वानिष्टानवाप्तये ॥ ४ ॥
अल्पग्रन्थोऽप्यनल्पार्थः सम्यग्बालप्रबोधकः ।
अवश्यमध्येतव्योऽयं विज्ञातव्यश्च वैदिकैः ॥ ५ ॥

स्पष्टोऽर्थः । तस्मादस्य गोत्रप्रवरनिर्णयाख्यग्रन्थस्य गोत्रप्रवरो विषयः गोत्रप्रवरनिर्णयोऽवान्तरव्यापारः स्वर्गापवर्गाद्याः परमप्रयोजनम् । ब्राह्मण्यरक्षणमानुषङ्गिकं फलं, तत्र श्रौतस्मार्तकर्माधिकार्येवाधिकारी, शास्त्रस्य च विषयस्य च प्रतिपाद्यप्रतिपादकभावस्सम्बन्धः । विषयः प्रयोजनं सम्बन्धोऽधिकारी चेत्यनुबन्धचतुष्टयं विज्ञेयम् ॥

अथानुक्रमाणिका—

प्रथमेऽत्र प्रकरणे परिभाषा निरूप्यते ।
द्वितीये जमदग्नेस्तु गोत्रं शुद्धभृगोस्ततः ॥ ६ ॥
तृतीये गौतमस्याथ भरद्वाजस्य तुर्यके ।
तत्रैव शुद्धांगिरसः पञ्चमेऽत्रिमुनेस्ततः ॥ ७ ॥
विश्वामित्रस्य षष्ठेऽथ सप्तमे कश्यपस्य तु ।
वसिष्ठस्याष्टमे गोत्रं अगस्त्यस्य ततः परम् ॥
दशमे क्षत्रियादीनां प्रवराद्यं निरूप्यते ॥८ ॥

अत्र गोत्रनिर्णयाख्ये ग्रन्थे प्रकरणानि दश । तत्र प्रथमप्रकरणे शास्त्रारम्भसमर्थनपूर्वकं परिभाषा निरूप्यते । द्वितीये प्रकरणे जमदग्निगोत्रं, शुद्धभृगुगणः । तृतीये प्रकरणे गौतमगोत्रकाण्डः । चतुर्थे प्रकरणे भरद्वाजगोत्रकाण्डः, शुद्धाङ्गिरोगणश्च । पञ्चमे प्रकरणे अत्रिगोत्रकाण्डः । षष्ठे प्रकरणे विश्वामित्रगोत्रकाण्डः । सप्तमे प्रकरणे कश्यपगोत्रकाण्डः । अष्टमे प्रकरणे वसिष्ठगोत्रकाण्डः । नवमे प्रकरणे अगस्त्यगोत्रकाण्डः । दशमे प्रकरणे क्षत्रियप्रवरवैश्यप्रवरसार्ववर्णिकप्रवरतनूनपान्नाराशंसविषयसमानगोत्रप्रवरविवाहप्रायश्चित्तादिप्रकारो निरूपित इति सर्वेषां सुखप्रतिपत्त्यर्थमनुक्रमणिका निरूपिता ॥

**गोत्रप्रवरशास्त्रेषु बोधायनमुनीरितम् ॥ ९ ॥**
**अतिप्रसिद्धं तेनात्र तत्प्राधान्येन कथ्यते ।**

गोत्रप्रवरशास्त्रेषु बोधायनमुनिकृतं शास्त्रमपि प्रसिद्धम्, तेनाऽत्र ग्रन्थे बोधायनमतमेव प्राधान्येन निरूप्यते ॥

**अस्मिन्मन्वन्तरे गोत्रकृतोऽष्टौ मुनयः स्मृताः ॥ १० ॥**
**जमदग्निप्रभृतयो न भृग्वङ्गिरसौ तथा ।**

ब्रह्मण एकमहरेकः कल्पः अस्मिन् कल्पे चतुर्दश मनवः ससन्धयो यान्ति अस्मिन् श्वेतवराहकल्पे स्वायम्भुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाख्याः षण्मनवो गताः इन्द्राश्च चतुर्दश भवन्ति। इन्द्रा अपि मनुसदृशाः षडतीताः । अस्मिन् वैवस्वतमन्वन्तरे पुरन्दराख्य इन्द्रः । वसवो रुद्रा आदित्याश्च देवाः, विष्णुपुराणे तृतीयांशे प्रथमाध्याये—श्लो० " वसिष्ठः कश्यपोऽथात्रिर्जमदग्निश्च गौतमः । विश्वामित्रभरद्वाजौ सप्त सप्तर्षयोऽत्र तु" इति वचनात् सप्तर्षयः सिद्धाः । भागवते अष्टमस्कन्धे त्रयोदशाध्याये—श्लो० " कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रश्च गौतमः । जमदग्निर्भरद्वाज इति सप्तर्षयस्स्मृताः " इति वचनादपि प्रागभिहिता एव पठिताः ततोऽस्मिन् वैवस्वतमन्वन्तरे जमदग्निगौतमभरद्वाजात्रिविश्वामित्रकश्यपवसिष्ठागस्तयो बोधायनादिभिः गोत्रकृतः कीर्तिताः भृग्वङ्गिरसौ तथा कश्यपादिवद्गोत्रकृतौ नोक्तौ ॥

**तेषां मध्ये तथाऽष्टानां यस्यापत्यमृषित्वभाक् ॥ ११ ॥**
**तदस्य गोत्रमुदितं तदर्थं पाणिनेर्वचः ।**

यतो भृग्वङ्गिरसोः न गोत्रकर्तृत्वं अतस्तेषामगस्त्याष्टमानां मध्ये यस्यापत्यं सन्तानः ऋषित्वं भजते तदपत्यं तस्य ऋषेः गोत्रमिति बोधायनादिभिरभिहितम् । ' समानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते ' इति आश्वलायनसूत्रे लक्षणस्याभिहितत्वात् ' अपत्यं पौत्रप्रभृति गोत्रम् ' इति पाणिनीयसूत्रमपि तदर्थमभिदधाति सामान्यविषयं पाणिनीयसूत्रं विशेषविषयबोधायनसूत्रे पर्यवस्यति गोत्रकर्तृत्वेऽपि भृग्वङ्गिरसोः गोत्रकर्तृत्वं ' जीवति तु वंश्ये युवा ' इति पाणिन्यभिहितयुवसंज्ञावच्छब्दसाधुत्वार्थं मन्तव्यम् । भृगोर्गोत्रकर्तृत्वाभावात् । पुरस्ताद्वक्ष्यमाणाः ' यस्काः मित्रयुवाः वेनाश्शुनकाः ' इति चत्वारश्शुद्धभृगवः एते भृगवो न एतेषामपि भृगुगणत्वे एकगोत्रत्वाद्विवाहो न स्यात् यतः पातित्यमापतेत् एवमङ्गिरा अपि गोत्रकर्तृमुन्यष्टकान्तःपातित्वाभावात् । विष्णुवृद्धकण्वप्रभृतयः शुद्धांगिरोगणाः तेषामेव गोत्रत्वात् स्वस्वगणव्यतिरिक्तैः शुद्धांगिरोभिर्विवाहो न स्यात् विष्णुवृद्धादिसन्ततेरेव गोत्रशब्दवाच्यत्वम् न तथाऽङ्गिरोगणसन्ततेः गोत्रकृन्मुन्यष्टकसन्ततित्वाभावात् । अतो भृगुः यस्कमित्रयुवप्रभृतिषु अंगिरोविष्णुवृद्धकण्वादिषु च गोत्रशब्दस्सामान्यतः प्रवृत्तः अमुं गोत्रशब्दार्थं सम्यगज्ञात्वा वक्ष्यमाण*गोत्रव्यवहारो न ज्ञायते जमदग्निगोत्रो भरद्वाजगोत्र इति व्यवहारस्तु जमदग्न्यादिगोत्रमेव गोत्रमिति मध्यमपदलोपसमासाश्रयणेन युज्यते ॥

**ऋषयो दश तेषां तु सन्ततावृषितां गताः ॥ १२ ॥**
**यज्ञे प्रवीयमाणास्ते प्रवरा इति कीर्तिताः ।**

भृग्वंगिरसौ भरद्वाजादयो गोत्रकृतोऽष्टौ मुनयः तेषां सन्ततौ ये जातास्ते च यज्ञे प्रवीयमाणा प्रवराः इति बोधायनादिभिः कीर्तिताः ॥

**गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ॥ १३ ॥**
**ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ।**

स्पष्टोऽर्थः ॥

---

* समान.

चत्वाराश्शुद्धभृगवस्त्रयोऽत्र जमदग्नयः ॥ १४ ॥
एते भृगुगणास्सप्त सप्ताथो गौतमा मताः ।
भरद्वाजास्त्रयस्सप्त शुद्धांगिरस एव च ॥ १५ ॥
अथांगिरोगणास्सप्त दशैवं मुनिना स्मृताः ।
ततोऽत्रयश्च चत्वारो विश्वामित्रास्ततो दश ॥ १६ ॥
कश्यपाश्च वसिष्ठाश्च चत्वारस्स्युः पृथक्पृथक् ।
चत्वारोऽगस्तयश्चोनपञ्चाशत्प्रवरास्स्मृताः ॥ १७ ॥

स्पष्टोऽर्थः ॥

आपस्तम्बमते पञ्च भृगवोऽष्टांगिरोगणाः ।
अत्र्यादयो गणाः पञ्चेत्यष्टादशगणास्स्मृताः ॥ १८ ॥

स्पष्टोऽर्थः ॥

एको द्वौ वा त्रयो वाऽथ पञ्च वा प्रवरर्षयः ।
न षडाद्या न चत्वारस्तथैव श्रुतिशासनात् ॥ १९ ॥

प्रवरे ऋषयः एको द्वौ वा त्रयो वाऽथ पञ्च वा भवितव्याः । न चत्वारो न षडाद्या भवन्ति । श्रुतौ 'एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चाति प्रवृणीते' इति नियमितत्वात् । भृगुगणे यस्कस्य बिदस्यार्ष्टिषेणस्य त्रयाणां पञ्चार्षेयप्रवरः । अङ्गिरोगणे कौमण्डस्य दीर्घतमसः काक्षायणस्य गर्गस्य चेति चतुर्णां पञ्चार्षेयप्रवरः । गर्गस्य त्र्यार्षेयप्रवरः । विश्वामित्रगणे पूरणाख्यस्य द्वार्षेयप्रवरः । शुनकानां वसिष्ठानां च एकार्षेयप्रवरः । इतरेषां त्र्यार्षेयप्रवरः ॥

एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वं अन्यत्राङ्गिरसो भृगोः ॥ २० ॥

अङ्गिरसो भृगोरन्यत्र भृग्वङ्गिरोगणौ विहाय प्रवरेषु इतरेषु एकः ऋषिर्यावद्वर्तते तावत्समानगोत्रत्वं भवति । 'शुद्धभृगवः शुद्धाङ्गिरसः गौतमो भरद्वाजो जमदग्निरत्रिर्विश्वामित्रः कश्यपोऽगस्त्यो वसिष्ठः' इति एते दश गोत्रकर्तारः । तत्र शुद्धभृगुगणं शुद्धाङ्गिरसं च विहाय इतरेष्वष्टसु गणेषु एकऋष्यनुवर्तने समान-

गोत्रत्वम् । भृग्वङ्गिरोगणयोस्तु एकऋष्यनुवर्तनेऽपि समानगोत्रत्वम् । यथा जमदग्निप्रवरे भृगुप्रवरे च भृगुरनुवर्तते । तथाऽपि जमदग्नेश्शुद्ध भृगूणां च समानप्रवरत्वं न भृगोर्गोत्रकर्तृत्वाभावात् । एवं गौतमप्रवरेषु शुद्धाङ्गिरोगणेषु च अङ्गिरोऽनुवर्तनेऽपि गौतमानां भरद्वाजानां शुद्धाङ्गिरसां च मिथो विवाहोऽस्ति। अङ्गिरसो गोत्रकर्तृत्वाभावात् ॥

**द्व्यार्षेयसन्निपातान्न त्र्यार्षेयाणां करग्रहः ।**
**त्र्यार्षेयसन्निपातान्न पञ्चार्षेयकरग्रहः ॥ २१ ॥**
**भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वार्यते ।**

भृग्वङ्गिरोगणेषु वधूवरयोः त्र्यार्षेयप्रवरयोर्मध्ये द्वावृपी यदि समानौ स्यातां तदा न करग्रहः पञ्चार्षेयप्रवरयोर्मध्ये त्र्यार्षेयसन्निपाते न विवाहः । वधूवरप्रवरयोरर्धाधिकमुनिसाम्ये न विवाहः । त्र्यार्षेयप्रवरसन्निपाते ऋषिद्वयसाम्ये न करग्रहः । पञ्चार्षेयसन्निपाते प्रवरस्थऋषित्रयसाम्येऽपि न करग्रहः। एकस्य पञ्चार्षेयत्वे इतरस्य त्र्यार्षेयत्वे प्रवरस्थऋषिणामर्धाधिकसाम्ये न विवाहः । अयं नियमो भृग्वङ्गिरोगणेषु इतरत्र एकऋषिसाम्येऽपि न करग्रहः ॥

**इत्यूनविंशतिश्लोकैः परिभाषा निरूपिता ॥ २२ ॥**

इत्थमेकोनविंशतिश्लोकैः शास्त्रारम्भपूर्वकं परिभाषाप्रकरणं

समाप्तम् ।

अथ द्वितीये प्रकरणे भृगुगणः तत्र गोत्रकर्ता जमदग्निः । तस्य गोत्राणि शुद्धभृगुगणाः निरूप्यन्ते—

**वत्सा बिदा आर्ष्टिषेणा इत्येते जमदग्नयः ।**
**ते पञ्चावर्त्तिनस्तेषां न विवाहः परस्परम् ॥ २३ ॥**

मार्कण्डेयमाण्डव्यदार्भायणपौलस्त्यकाशकृत्स्नपाणिनिवाल्मीकिरजतवाहप्रभृतयो वत्साः । तेषां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति पञ्चार्षेयप्रवरो भवति । बिदप्रभतीनां भार्गवच्यावनाप्नवानौर्वबैदेति पञ्चार्षेयप्रवरो भवति । आर्ष्टिषेणप्रभृतीनां भार्गवच्यावनाप्नवानूपार्ष्टिषेणेति पञ्चार्षेयप्रवरो भवति एषु प्रवरेषु

भार्गवच्यावनाप्नवानेति ऋषित्रयसाम्येन त्र्यार्षेयसन्निपातेन विवाहः पञ्चार्षेयाणामिति परिभाषान्यायेन वत्सा बिदा आर्ष्टिषेणा इत्येतेषां परस्परमविवाहः । ते पञ्चावर्त्तिन इति बोधायनमुनिवचनेन स्वस्वगणैरितरगणाभ्यां च न विवाहः । एते त्रयः पञ्चावर्त्तिनः ॥

**चत्वारश्शुद्धभृगवोः यस्का मित्रयवस्तथा ।**
**वैनाश्च शुनकास्तेषां विवाहोऽस्ति परस्परम् ॥ २४ ॥**

यस्काः मित्रयवः वेनाश्शुनका इति चत्वारः शुद्ध भृगवः । यास्कमौनमौकवाधूलसंकृतीनां भार्गववैतहव्यसावेदसोति त्र्यार्षेयप्रवरः । मित्रयूनां भार्गववाध्र्यश्वदैवोदासेति त्र्यार्षेयः प्रवरः । वैनानां भार्गववैन्यपार्थेति त्र्यार्षेयप्रवरः । शुनकानां शौनकेति वा गार्त्समदेति वा एकार्षेयप्रवरः । भृगोर्गोत्रकर्तृत्वाभावात् यस्कादिषु त्रिषु प्रवरेषु भृगोरनुवर्तनेऽपि न समानगोत्रता । त्र्यार्षेयेष्वेषु त्रिषु प्रवरेषु ऋषिद्वयानुवर्तनाभावात् समानप्रवरता न च । शुनकानां यस्कादिभिस्त्रिभिस्समानगोत्रता न च । यतो यस्कादीनां चतुर्णां गणानां स्वंस्वं गणं विहायेतरैस्त्रिभिर्विवाहोऽस्ति । एषां चतुर्णां भृगुगणानां प्रागुक्तजमदग्निगणत्रयस्य च समानप्रवरत्वं न भृगोर्गोत्रकर्तृत्वाभावात् समानगोत्रता न च अत्र स्मृत्यर्थसारवचनमुदाहरणम् ॥

यस्का मित्रयवो वैन्या शुनकाः प्रवरैक्यतः ।
स्वंस्वं हित्वा गणं सर्वे विवहेयुः परस्परम् ॥

इति बोधायनमते सप्त भृगवो व्याख्याताः । आपस्तम्बमते. भृगुगणाः पञ्च । तत्र विशेषज्ञानार्थं संग्रहकारवचनान्युदाहृतानि—

जामदग्न्या वीतहव्यास्तथा गार्त्समदा अपि ।
वाध्र्याश्वाश्चैव वैन्याश्च भृगोः पञ्च गणास्स्मृताः ॥

इति । तत्र जामदग्न्याः कथ्यन्ते—

अथ प्रथमो भृगुगणः—

**भृगवो जामदग्न्याश्च वत्सश्रीवत्ससंज्ञिकाः ।**
**भार्गवाश्च्यावनास्तद्वत् आप्नवानास्तथोर्वजाः ॥ २५ ॥**
**सावर्णयश्च जीवन्तिसंज्ञा जाबालयस्तथा ।**

ऐतिशायननामानो वैरोहित्यास्तथैव च ॥ २६ ॥
अवत्सा मण्डुजाश्चैव ततः प्राचीनयोगजाः ।
आर्ष्टिषेणा देवराता अनूपाश्च सगोत्रजाः ॥ २७ ॥
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।
माण्डव्यैर्दर्भसंज्ञैश्च रैवताख्यैस्तथैव च ॥ २८ ॥
भृगवो जामदग्न्याद्या न विवाह्याः प्रकीर्तिताः ।

अत्रोक्तानां मुनीनां जमदग्निगणत्वात्तत्रत्यैर्विवाहो न ॥

इति प्रथमो भृगुगणः ।

अथ द्वितीयो भृगुगणः ।

भृगवो वीतहव्याश्च यस्का वाधूलसंज्ञिकाः ॥ २९ ॥
सावेदसा मौनमोका न विवाह्याश्च सप्त ते ।
एते रजतवाहैश्च न विवाह्याः कथंचन ॥ ३० ॥

अत्रत्या भृगवो रजतवाहान्ता अष्टौ मुनयः मिथो न विवाह्याः ॥

इति द्वितीयो भृगुगणः ।

अथ तृतीयो भृगुगणः ।

भृगवो गृत्समदजाश्शुनकाश्च त्रयोऽप्यमी ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥ ३१ ॥

स्पष्टोऽर्थः ॥

इति तृतीयो भृगुगणः ।

अथ चतुर्थो भृगुगणः ।

भृगवश्चैव वाध्यश्वास्तथा मित्रयवस्त्रयः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥ ३२ ॥

स्पष्टोऽर्थः ॥

इति चतुर्थो भृगुगणः ।

अथ पञ्चमो भृगुगणः ।

**भृगवो वैन्यसंज्ञाश्च पार्थिवाश्च त्रयोऽप्यमी ।**
**मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥ ३३ ॥**

स्पष्टोऽर्थः ॥

इति पञ्चमो भृगुगणः ॥

**मिथो विवाह्याः पञ्चैते गणा आद्यं भृगुं विना ।**

एते पञ्च भृगुगणाः आद्यं भृगुगणं विना मिथो विवाह्याः ॥

**विश्वामित्रा जामदग्न्या विवाह्याः स्युः परस्परम् ॥ ३४ ॥**
**देवरातान्वर्जयित्वेत्याहुर्धर्मप्रवर्तकाः ।**

भृगुगणेषु पञ्चसु मध्ये आद्यं भृगुगणं जमदग्निगणं वर्जयित्वा इतरैश्चतुर्भिः भृगुगणैः विश्वामित्रगणानां परस्परं विवाहोऽस्ति देवरातान्वर्जयित्वा । देवरातस्य जमदग्निगणस्थऋचीकपुत्रत्वात् विश्वामित्रेण पुत्रत्वेन स्वीकृतत्वाच्च द्विगोत्रत्वम् । द्विगोत्राणां द्व्यामुष्यायणप्रकरणे गोत्रद्वयेन सह मिथो विवाहस्य निषिद्धत्वात् । देवरातस्य द्विगोत्रत्वं शुनश्शेफोपाख्याने स्पष्टमभिहितम् ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठवासिष्ठान्वयाभिनवमाधवाचार्य-
कृतगोत्रप्रवरनिर्णये द्वितीयं प्रकरणम् ।

**अथाङ्गिरस उच्यन्ते त्रिविधास्तत्र गौतमाः ॥ ३५ ॥**
**आयास्याश्च शरद्वन्तः कुमण्डाह्वास्ततः परम् ।**
**तथैव दीर्घतमसस्ततः कारेणुपालयः ॥ ३६ ॥**
**वामदेवा औशनसा इत्येषां न मिथोऽन्वयः ।**

अथ भृगुगणविवेचनानन्तरं त्रिविधा गौतमा भरद्वाजाश्शुद्धाङ्गिरस इति त्रिप्रकाराः आङ्गिरसा उच्यन्ते—तत्र गौतमाः आयास्याः शरद्वन्तः कौमण्डाभिधाः दीर्घतमसः कारेणुपालयः वामदेवा औशनसाः इति सप्तविधाः । तत्रायास्यगौतमानां आङ्गिरसायास्यगौतमेति त्र्यार्षेयप्रवरः । शरद्वद्गौतमानां आङ्गिरसशारद्वन्तगौतमेति त्र्यार्षेयप्रवरः । कुमण्डगौतमानामाङ्गिरसौचिथ्यका-

क्षीवतगौतमकौमण्डेति पञ्चार्षेयः प्रवरः । दीर्घतमोगौतमानां आङ्गिरसौचिथ्य-काक्षीवतगौतमदैर्घतमसेति पञ्चार्षेयप्रवरः । कारेणुपालगौतमानां आङ्गिरसगौतमकारेणुपालेति त्र्यार्षेयप्रवरः। वामदेवगौतमानां आङ्गिरसवामदेवगौतमेति त्र्यार्षेयः प्रवरः । औशनसगौतमानां आङ्गिरसौशनसगौतमेति त्र्यार्षेयः प्रवरः । एवं सप्तसु प्रवरेषु गोत्रकर्तुर्गौतमस्य अनुवर्तनात् ' एक एव ऋषिर्यावत् ' इति परिभाषायां सम्यग्विवेचितत्वात् सप्तनामपि समानगोत्रत्वम् । पञ्चार्षेयाणां त्र्यार्षेयाणां च सन्निपाते एकत्र गौतमस्य इतरत्र अङ्गिरोगौतमयोरनुवृत्तिः । समानगोत्रप्रवरत्वं द्वयोः पञ्चार्षेयप्रवरत्वेऽपि आङ्गिरसौचथ्यकाक्षीवतेति त्रयाणामनुवृत्तेः समान-प्रवरत्वं, पञ्चार्षेयत्र्यार्षेययोर्वा सन्निपाते तु गोत्रकर्तुर्गौतमस्यानुवृत्तेश्च समान-प्रवरत्वाद्गौतमानां परस्परमविवाहः । इतरैर्विवाहोऽस्त्येव । तथा चापस्तम्बः—

आङ्गिरसास्तथाऽऽयास्या औचथ्या औशिजास्तथा:।
काक्षीवता वामदेवा बृहदुक्थाश्च सप्त ते ॥
एतं गौतमसंज्ञास्स्युर्भिन्नप्रवरजा अपि ।
समानप्रवरत्वेन व्यवहारार्हतां गताः ॥
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

इति वैदिकमार्गप्रतिष्ठानिष्ठवशिष्ठान्वयाभिनवमाधवाख्या-
योल्लिखितगोत्रप्रवरनिर्णये तृतीयं प्रकरणम् ।

---

**भारद्वाजा अथो गर्गास्तथा रौक्षायणा इति ॥ ३७ ॥**
**भरद्वाजास्ततस्तेषां न विवाहः परस्परम् ।**

रौक्षायणशुङ्गप्रभृतीनां आङ्गिरसबार्हस्पत्यभारद्वाजेति त्र्यार्षेयप्रवरः । गर्गाणां आंगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति पञ्चार्षेयो वा, आंगिरसगार्ग्यशैन्येति त्र्यार्षेयो वा प्रवरः । रौक्षायणानां आंगिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति पञ्चार्षेयः प्रवरः । अत्र गोत्रकर्तुर्भरद्वाजस्य त्रिष्वपि प्रवरेष्वनुवृत्तेः ' एक एव ऋषिर्यावत् ' इति परिभाषया समानगोत्रत्वं पञ्चार्षेययोर्गर्गरौक्षायणयोः अंगिरो-भरद्वाजबृहस्पतीनां त्रयाणामनुवृत्तेःसमानमुनिभूयस्त्वेन गोत्रकर्तुर्भरद्वाजस्यानुवृत्तेश्च समानप्रवरत्वम् । गर्गाणां त्र्यार्षेयपक्षे व्रीयमाणतया भरद्वाजानुवृत्तः गोत्रकर्तृत्वात् समानगोत्रत्वम् । आपस्तम्बमतेऽपि भारद्वाजगार्ग्यशैन्येति त्र्यार्षेयत्वेन भरद्वाजा-

नुवृत्तेस्त्रयाणामपि प्रकाराणां समानगोत्रत्वात् समानप्रवरत्वाच्च । 'भरद्वाजानां सर्वेषामपि अविवाहः' इति बोधायनमुनिना निरूपितत्वात् स्वस्वप्रवरैरितराभ्यां च न विवाहः ॥

भारद्वाजेन शुंगेन विश्वामित्रस्य शैशिरेः ॥ ३८ ॥
क्षेत्रजातो द्विगोत्रर्षिः प्रोच्यते शौंगशैशिरिः ।
विश्वामित्रैर्भरद्वाजैस्तज्जानां तेन नान्वयः ॥ ३९ ॥
कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः ॥

भरद्वाजगोत्रोद्भवेन शुङ्गाख्येन मुनिना विश्वामित्रगोत्रोद्भवस्य कतमुनिसुतस्य शैशिराख्यस्य मुनेः भार्यायां तन्नियोगेनोत्पादितः शुङ्गस्य शैशिरेश्च सुतत्वात् द्व्यामुष्यायणत्वेन शौङ्गशैशिरिरिति संज्ञामलभत। अयं शौङ्गशैशिरिः भरद्वाजसन्तानत्वात् मिश्वामित्रसन्तानत्वाच्च भरद्वाजगोत्रो मिश्वामित्रगोत्रश्च द्विगोत्रो भवति । ततस्तज्जानां शौङ्गशैशिरिजातानां विश्वामित्रैर्भरद्वाजैश्च न विवाहः । तथा च याज्ञवल्क्यः—

अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ इति ॥

ततस्तत्सन्ततेः सर्वस्या अपि विश्वामित्रभारद्वाजैर्नान्वयः । द्व्यामुष्यायणसन्ततित्वात्तस्य शौङ्गशैशिरेस्तत्सन्तानस्य च आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति पञ्चार्षेयः प्रवरः । उत्पादकस्य शुंगस्य प्रवरे त्रयः क्षेत्रिणश्शैशिरेर्द्वौ एवमुभयमपि संयोज्य प्रवरणात् । यद्वा—क्षेत्रिणस्त्रयः उत्पादकस्य द्वौ एवं पञ्चार्षेयः प्रवरः । यद्वा—उत्पादकस्य द्वौ क्षेत्रिण एकं च संयोज्य त्र्यार्षेयः । उत्पादकस्यैकं क्षेत्रिणो द्वौ संयोज्य त्र्यार्षेयः प्रवरः कार्यः । तथा च सूत्रम्—'अथैते द्विप्रवचना यथैतच्छौंगशैशिरयस्तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतो द्वौ वेतरतस्त्रीनितरतः' इति अथ अष्टादशगणस्थशुंगस्य गोत्रप्रवरनिर्णयानन्तरं एते वक्ष्यमाणा द्विप्रवरवचना द्व्यामुष्यायणा भवन्ति । यथा शौंगशैशिरयः । शौंगशैशिरिग्रहणं प्रदर्शनार्थम् । वामरथ्यादयो जातुकर्ण्यादयो लौगाक्ष्यादयोऽहर्वासिष्ठाः निशिकश्यपादयश्च द्व्यामुष्यायणाः ज्ञेयाः । तेषां प्रवरप्रकारमाह—तेषामुभयतः प्रवृणीतेति । तेषां शौंगशैशिर्यादीनां द्व्यामुष्यायणानामुभयस्मादुभयगोत्रात्प्रविष्टकुलाज्जनक-

कुलाच्च प्रवृणीत । प्रवरप्रकारमाह—एकमितरतो द्वावितरत इति । इतरतः इतरस्मात्प्रविष्टकुलात् एकमृषिं इतरतः जनककुलाद्वावृषी प्रवृणीत यद्वा—प्रविष्टकुलाद्वौ जनककुलादेकं संयोज्य त्र्यार्षेयं प्रवरं कुर्यात् । प्रकारान्तरमप्याह—द्वावितरतस्त्रीनितरत इति । अस्यार्थः प्रविष्टकुलाद्वौ जनककुलात्रीन् । यद्वा—प्रविष्टकुलात्रीन् जनककुलाद्वौ । एवं पञ्चार्षेयप्रवरं कृत्वा प्रविष्टजनकगोत्रद्वयवत्त्वं तत्सन्ततेरुभयगोत्रत्वं विधेयमित्यर्थः । एतत्कलौ निषिद्धम् । द्व्यामुष्यायणात्पुत्रस्वीकारे तस्य त्र्यामुष्यायणत्वम् । उभयोरपि द्व्यामुष्यायणत्वे तज्जनितपुत्रस्वीकारे चतुरामुष्यायणत्वम् ततोऽपि द्व्यामुष्यायणस्य पुत्रस्वीकारे पञ्चामुष्यायणत्वादिना गोत्रसाङ्कर्यं प्रसज्येत । एवं रौक्षायणप्रवरजानितस्य कपिलस्य द्व्यामुष्यायणत्वात् भरद्वाजैर्विश्वामित्रैश्च विवाहो न । मतान्तरश्लोकः—

**भरद्वाजाश्च कपयो गर्गा रौक्षायणा इति ॥ ४० ॥**
**चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ।**

भरद्वाजाः कपयो गर्गाः रौक्षायणा इत्येते चत्वारोऽपि भरद्वाजाः । गोत्रकर्तुर्भरद्वाजस्य सन्ततित्वात् परस्परं नान्वियुः ॥

**नैतत्स्वतन्त्रास्वतन्त्रौ द्वौ कपी कथितौ यतः ॥ ४१ ॥**
**स्वतन्त्रस्य कपेस्तत्र भरद्वाजैस्सहान्वयः ।**

पूर्वश्लोके 'भरद्वाजाश्च कपयः' इति कपीनां भरद्वाजैस्सह विवाहो नेत्येतत् युक्तं नेत्यर्थः । यतः कारणात् कपी स्वतन्त्रास्वतन्त्रौ कथितौ तत्र स्वतन्त्रस्य कपेर्भरद्वाजैः सह अन्वयोऽस्ति । अत्रास्वतन्त्रस्य कपेर्भारद्वाजैस्सह नान्वयः । तेषामस्वतन्त्रकपीनां आङ्गिरसबार्हस्पत्यभारद्वाजेति वा आङ्गिरसबार्हस्पत्यकापेति वा त्र्यार्षेयः प्रवरः । तेषां गोत्रकर्तुर्भरद्वाजस्य उभयत्र वरणात् मिथो नान्वय इति अस्वतन्त्रकपिविषये निषेध इत्यर्थः । बोधायनसूत्रे शुद्धाङ्गिरोगणेषु पठितानां स्वतन्त्रकपीनां आङ्गिरसामहीयौरुक्षय्येति त्र्यार्षेयः प्रवरः । एतेषां भारद्वाजैस्समानगोत्रत्वाभावात् असमानप्रवरत्वाच्च विवाहोऽस्त्येव । अस्मिन्नर्थे प्रयोगदीपिका—

आंगिरसा भरद्वाजा बार्हस्पत्याश्च कुत्सजाः ।
अग्निवैश्योर्जायनौ च ऋक्षाश्शुङ्गाः कतास्तथा ॥

सर्वे स्तम्बस्तम्भशब्दा वान्दनर्क्षेयशैशिराः ।
कपयो मातवचसा गार्ग्यश्येनौ च कापिलाः ॥
भरद्वाजाभिधानास्स्युरेत एकोनविंशतिः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥

अस्यार्थः—अङ्गिरःप्रभृत्येकोनविंशतिऋषयः भरद्वाजास्तेषामन्योन्यं न विवाहः। तत्र कतो विश्वामित्रगोत्रः। तेन भरद्वाजानां न विवाहः ॥

तत्र विशेषः—

**एतेषां तु विशेषोऽयमामहीयाभिधानकैः ॥ ४२ ॥**
**औरुक्षय्यैश्च कपिभिर्विवाहस्त्रिभिरिष्यते ।**

आङ्गिरसामहीयौरुक्षय्येति स्वतन्त्रकपिगोत्रप्रवरः । एतैस्सह भरद्वाजानां विवाहः कार्यः। अस्मिन्नर्थे दीपिका च—

कपी प्रसिद्धावुदिताविह द्वौ स्वतन्त्र एकस्त्वपरोऽस्वतन्त्रः ।
तत्र स्वतन्त्रस्य कपेर्विवाहं मिथो भरद्वाजकुलस्य चाहुः ॥

इति. आपस्तबसंग्रहे—

विश्वामित्रा भरद्वाजा विवाह्यास्स्युः परस्परम् ।
कतशैशिरशुङ्गांश्च वर्जयित्वा समन्ततः ॥

अस्यार्थः—विश्वामित्रा भरद्वाजाश्च कतशैशिरशुङ्गान् वर्जयित्वा मिथो विवाह्याः। एते च भरद्वाजैस्सह न विवाह्याः ॥

इति भरद्वाजकाण्डः ।

अथ शुद्धाङ्गिरोगणाः कथ्यन्ते ।

**शुद्धाङ्गिरोगणास्सप्त तत्र स्युर्विष्णुवृद्धजाः ॥ ४३ ॥**
**कण्वा रथीतराश्चैव हरिता मुद्गला इति ।**
**पञ्च स्वस्वगणं हित्वा विवहेयुः परावरैः ॥ ४४ ॥**
**वासिष्ठान्कश्यपान्स्वीयान् विना संकृतयोऽन्वियुः ।**
**कपीनामुदितास्सप्त दशाङ्गिरस ईरिताः ॥ ४५ ॥**

विष्णुवृद्धाः कण्वाः रथीतराः हरिताः मुद्गलाः संकृतयः कपय इति सप्त शुद्धां-

गिरोगणाः। तत्र विष्णुवृद्धगणस्य आंगिरसत्रासदस्यपौरुकुत्सेति त्र्यार्षेयः प्रवरः कण्वगणस्य आंगिरसाजमीढकाण्वेति त्र्यार्षेयः प्रवरः। रथीतरगणस्य आंगिरसवैरूपराथीतरेति आंगिरसवैरूपपार्षदश्वेति वा त्र्यार्षेयः प्रवरः। हरितगणस्य आंगिरसाम्बरीषयौवनाश्वेति त्र्यार्षेयः प्रवरः। मुद्गलगणस्य आंगिरसभार्म्यश्वमौद्गल्येति त्र्यार्षेयः प्रवरः। संकृतिगणस्य आंगिरससांकृत्यगौरिवीतेति त्र्यार्षेयः प्रवरः। स्वतन्त्रकपिगणस्य आंगिरसामहीयौरुक्षय्येति त्र्यार्षेयः प्रवरः। तत्र विष्णुवृद्धकण्वरथीतरहरितमुद्गलानां पञ्चानां स्वतन्त्रकपिगणस्य च स्वंस्वं गणं हित्वा इतरैस्सह विवाहोऽस्ति। संकृतयो द्व्यामुष्यायणाः। कश्यपाः वसिष्ठाश्च। अतः संकृतीनां वसिष्ठैः कश्यपैश्च विवाहो निषिद्धः। एवं सप्तदशांगिरसस्सम्यग्विवेचिताः। गौतमगणास्सप्त। भरद्वाजगणास्त्रयः। शुद्धांगिरोगणास्सप्त एवं सप्तदशेत्यर्थः। तथा चापस्तम्बप्रयोगदीपिका—

गौतमाश्च भरद्वाजाः कपयो हरितास्तथा।
कण्वो विरूपो मौद्गल्यो विष्णुवृद्धोऽष्टमोऽङ्गिराः॥

आपस्तम्बमते गौतमा भरद्वाजाः कपयो हरिताः कण्वाः विरूपाः मौद्गल्याः विष्णुवृद्धाः इत्यंगिरोगणाः अष्ट। तत्र गौतमा भरद्वाजाः कपयश्च निरूपिताः॥

अथ हरितगणः।

**आंगिरसाश्च हरिता अम्बरीषास्ततःपरम्।**
**यौवनाश्वाश्च मान्धाता कुत्साः पैङ्ग्यास्त्वनन्तरम्॥ ४६॥**
**शङ्खा दर्भा हैमगवा एते च दश गोत्रजाः।**
**मिथो विवाहं नार्हन्ति समानप्रवरा यतः॥ ४७॥**

आंगिरसप्रभृतयो हैमगवान्ताः दश हरितगणाः। एषां परस्परं विवाहो न। समानप्रवरत्वात्। अत्र गोत्रशब्दः समानप्रवरवचनः न तु गोत्रवचनः॥

अथ कण्वगणाः।

**आंगिरसा आजमीढाः कण्वाश्चैव त्रयोऽप्यमी।**
**मिथो विवाहं नार्हन्ति समानप्रवरा यतः॥ ४८॥**

आंगिरसाः आजमीढाः कण्वाः इत्यमी कण्वाः इत्युच्यन्ते। एषां परस्परं विवाहो न। समानप्रवरत्वात्॥

अथ विरूपगणः ।

आंगिरसा विरूपाश्च तथा राथीतरा अपि ।
पृषदश्वा आष्टदंष्ट्राः तथैते पञ्च गोत्रजाः ॥ ४९ ॥
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

आंगिरसप्रभृतयः पञ्च परस्परं विवाहार्हा न । समानप्रवरत्वात् ॥

अथ मौद्गलगणः ।

आंगिरसाश्च भार्म्याश्च मौद्गलास्त्र्यक्षसंज्ञिकाः ॥ ५० ॥
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

एते चत्वारो विवाहार्हा न भवन्ति । समानप्रवरत्वात् ॥

अथ विष्णुवृद्धगणः ।

आंगिरसा विष्णुवृद्धा भद्रणा मद्रणास्तथा ॥ ५१ ॥
त्रासदस्याः पौरुकुत्साः शठमर्षण एव च ।
औपमित्यौपगवयः सात्यकिर्बादरायणः ॥ ५२ ॥
सात्यकामा अरुणयो नितुन्दाश्च चतुर्दश ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ॥ ५३ ॥

आंगिरसाद्या नितुन्दान्ता विष्णुवृद्धाः । ते च परस्परं विवाहार्हा न भवन्ति । समानप्रवरत्वात् ॥

अथ विवाहार्हा गणाः कथ्यन्ते ।

आजमीढा विरूपाश्च मुद्गला विष्णुवृद्धजाः ।
एते चतुर्गणाः प्रोक्ता विवाह्यास्स्युः परस्परम् ॥ ५४ ॥

स्वतन्त्रकपीनां भरद्वाजैस्सह विवाहोऽस्तीति निरूपितम् । आपस्तम्बसूत्रे हरितगणानन्तरं कुत्सस्य अभिहितत्वात् । कुत्सानन्तरं चतुर्णां गणानां संग्रहकारेणाभिधानं कृतम् । ततः स्वतन्त्रकपिगणः एकः हरितगणः कुत्सगणश्चेत्येतद्गणत्रयं एको गणः अजमीढगणः विरूपगणः मुद्गलगणः विष्णुवृद्धगणः चेति षट् शुद्धांगि-

रोगणाः । एतेषां षण्णां गणानां स्वंस्वं गणं विहाय इतरैः पञ्चभिस्सह विवाह इष्टः ॥

**मिथो विवाह्योऽष्टगणः आद्यमांगिरसं विना ।**

गौतमगणः भरद्वाजगणः स्वतन्त्रकापिगणः हरितगणः कण्वगणः विरूपगणः मुद्गलगणः विष्णुवृद्धगणश्चेत्येतेषामष्टानां स्वंस्वं गणमाद्यमांगिरसं विहाय इतरैस्सह विवाहोऽस्ति । अस्मिन्नर्थे प्रयोगपारिजातोक्तसम्मतिश्लोकः—

गौतमादिगणा ह्यष्टौ यद्यप्याङ्गिरसोगणः ।
तथाऽप्येषां गणानां च विवाहः स्यात्परस्परम् ॥

इति । अस्यार्थः—गौतमाद्योऽष्टौ गणाः अंगिरोगणः एव सर्वत्रांगिरसोऽनुवर्तनात् । तथाऽप्याद्यमांगिरसं विना परस्परं विवाहोऽस्ति ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठवसिष्ठान्वयाभिनवमाधवाचार्योद्धृतगोत्रप्रवरनिर्णये चतुर्थं प्रकरणम् ।

---

अथात्रिगोत्रकाण्ड उच्यते ।

**अत्रिर्गविष्ठिरश्चैव तथा बाहूदकादयः ॥ ५५ ॥**
**मुद्गलश्चेति चत्वारस्सगोत्रत्वान्न चान्वियुः ।**

अत्रीणां आत्रेयार्चनानसश्यावाश्वेति त्र्यार्षेयः प्रवरः । गविष्ठिराणां आत्रेयार्चनानसगाविष्ठिरेति त्र्यार्षेयः प्रवरः । बाहूदकानां आत्रेयार्चनानसबाहूदकेति त्र्यार्षेयः प्रवरः । मुद्गलानां आत्रेयार्चनानसपौर्वातिथेति त्र्यार्षेयः प्रवरः । एतेषु चतुर्षु प्रवरेषु गोत्रकर्तुरत्रेरनुवर्तनात्समानप्रवरत्वम् । ' एक एव ऋषिर्यावत् ' इति परिभाषया ज्ञेयं, आर्चनानसेत्यनुवर्तनाच्च । अतः सगोत्रत्वान्न विवाहः ॥

तत्र विशेषः कथ्यते ।

**विश्वामित्रात्रिगोत्रैश्च नोद्वहेयुर्धनञ्जयाः ५६ ॥**
**अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ।**
**तथैव जातूकर्ण्याश्च वसिष्ठैरत्रिभिस्सह ॥ ५७ ॥**

वैश्वामित्रस्य बीजादात्रेयक्षेत्र उत्पन्नत्वाद्धनंजयो द्विगोत्रो भवति । विश्वामित्र-

गोत्रोऽत्रिगोत्रश्च शौंगशैशिरिवद्भवाति । अतस्तस्य तत्सन्ततेरत्रिभिर्विश्वामित्रैश्च न विवाहः ।

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रस्स मे पुत्रो भवेदिति ॥

नियमपूर्वकं दत्तत्वात् । तस्यां कन्यायां वामरथ्यादय उत्पन्नाः । अतस्ते तत्सन्ततिजाश्च विश्वामित्रबीजत्वात् वैश्वामित्राश्च । अतस्तेऽपि द्व्यामुष्यायणाः अत्रिगोत्रजैर्विश्वामित्रगोत्रजैश्च नान्वियुः । एवं जातूकर्ण्याश्च द्व्यामुष्यायणत्वाद्वसिष्ठैरात्रिभिश्च सह मिथो नान्वियुः । तथा चापस्तम्बः—

**अत्रिजाश्चाथ वक्ष्यन्ते आत्रेयाश्चार्चनानसाः ।**
**तथा श्यावाश्वसंज्ञाश्च गविष्ठिरतदुद्भवाः ॥ ५८ ॥**
**धनञ्जया अतिथयो वामरथ्यास्सुमंगलाः ।**
**वैजवापिन इत्येते नवैवात्रिगणास्स्मृताः ॥ ५९ ॥**
**मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।**

अत्र्यादयो नवात्रिगणाः । एतद्गणस्थानां परस्परं विवाहो न ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठवसिष्ठान्वयाभिनवमाधवाचार्योद्धृतगोत्रप्रवरनिर्णये
पञ्चमं प्रकरणम् ।

---

अथ विश्वामित्रगोत्रकाण्ड उच्यते ।

**कुशिका रौहिताश्चैव रौक्थकाः कामकायनाः ॥ ६० ॥**
**अजा धनञ्जयाश्चैव कताख्या इन्द्रकौशिकाः ।**
**तथाऽघमर्षणाख्याश्च पूरणा इत्यमी दश ॥ ६१ ॥**
**विश्वामित्रास्सगोत्रत्वान्नोद्वहेयुः परस्परम् ।**

कुशिकादिविश्वामित्राणां प्रवरा उच्यन्ते—कुशिकानां वैश्वामित्रदैवरातौदलेति त्र्यार्षेयः प्रवरः । रौहितानां वैश्वामित्राष्टकरौहितेति त्र्यार्षेयः प्रवरः । रौक्थकानां वैश्वामित्ररौक्थकरैवतकेति त्र्यार्षेयः प्रवरः । कामकायनानां वैश्वामित्रदैवश्रवसदैवतरसेति त्र्यार्षेयः प्रवरः । अजानां वैश्वामित्रमाधुच्छन्दसाजेति त्र्यार्षेयः

प्रवरः । धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानंजयेति त्र्यार्षेयः प्रवरः । कतानां वैश्वामित्रकात्याक्षीलेति त्र्यार्षेयः प्रवरः । इन्द्रकौशिकानां वैश्वामित्रैन्द्रकौशिकेति त्र्यार्षेयः प्रवरः । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति त्र्यार्षेयः प्रवरः । पूरणानां वैश्वामित्रपौरणेति द्व्यार्षेयः प्रवरः । एषु दशसु प्रवरेषु गोत्रकर्तुर्विश्वामित्रस्यानुवर्तनात् 'एक एव ऋषिर्यावत्' इति परिभाषया दशानां प्रवराणां समानगोत्रत्वम् । विश्वामित्रानां सर्वेषामविवाह इति बोधायनसूत्राच्च परस्परमविवाहः । भृग्वंगिरसोः गोत्रकर्तृत्वाभावात् तदनुवर्तनेऽप्यस्ति विवाहः । विश्वामित्रस्य गोत्रकर्तृत्वात् तद्गोत्राणां दशानामविवाहः । अस्मिन्नर्थे स्मृत्यर्थसारसंगृहीतश्लोकः—

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः ।
वसिष्ठः कश्यपोऽगस्त्यो मुनयो गोत्रकारिणः ॥

इति । बोधायनसूत्रेऽपि—

"विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः सप्तानां ऋषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याक्षते" इत्युक्तत्वात् विश्वामित्रो गोत्राधिकारी । विश्वामित्रादीनामगस्त्याष्टमानां गोत्रकर्तृत्वात् स्वस्वगणैर्न विवाहः । इतरैर्विवाहोऽस्त्येव ॥

अथ विशेषः कथ्यते ।

**देवरातं च पनसं विनैषां जमदग्निभिः ॥ ६२ ॥**
**विवाह इष्यते तद्वद्भरद्वाजैः कतादिकान् ।**
**धनञ्जयं वामरथ्यमुखान् हित्वा तथाऽत्रिभिः ॥ ६३ ॥**

देवरातः पनसश्च जामदग्न्यौ विश्वामित्रेण पालितत्वाद्वैश्वामित्रौ । अतो जामदग्न्यैर्विश्वामित्रैश्च न विवाह्यौ तौ विहाय विश्वामित्राणां जमदग्नीनां च मिथो विवाहः । तथा धनञ्जयं वामरथ्यमुख्यांश्च विहाय विश्वामित्रगणस्य अत्रिगणस्य च मिथो विवाहः । धनञ्जयवामरथ्यादीनां विश्वामित्रैरात्रिभिश्च न विवाहः । कतादिकांश्च शौङ्गशैशिरीन् कापिलांश्च विहाय विश्वामित्राणां भरद्वाजानां च मिथो विवाह इष्टः ॥

तथा प्रयोगपारिजाते आपस्तम्बः—

विश्वामित्रो देवरातो मनुस्तन्तुस्तथौलकिः ।
वाल्मीकिश्चाकितोलूकौ याज्ञवल्क्यश्च वालुहिः ॥
बृहदग्निः कालबलौ शबलो बभ्रुलोहितौ ।
शालङ्कायनवारण्यौ कामकायनपूरणौ ॥
शालावतोऽग्निवैश्यश्च मदनः कौशिकोऽष्टमः ।
अजो माधुच्छन्दसश्च देवश्रवधनञ्जयौ ॥
शुङ्गः कतश्शैशिरिश्च पारिधाप्योऽघमर्षणः ।
सूनुः पनश्च धूम्राख्यो जठरस्त्वेकहव्यजः ॥
अष्टत्रिंशच्च गोत्राणि विश्वामित्रगणस्स्मृतः ।
एतस्मिन्नपि चान्योन्यं न कुर्यात्पाणिपीडनम् ॥

अस्यार्थः—विश्वामित्रगणस्थानामष्टत्रिंशदृषीणां परस्परं न विवाहः समानप्रवरत्वात्, गोत्रकर्तुर्विश्वामित्रस्यानुवृत्तेश्च ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठनसिष्ठान्वयाभिनवमाधवाचार्योद्धृतगोत्रप्रवरनिर्णये
षष्ठं प्रकरणम् ।

अथ सप्तमे प्रकरणे कश्यपगोत्रकाण्डः प्रस्तूयते ।

**कश्यपा अथ तत्र स्युर्निध्रुवा रेभशण्डिलाः ।**
**एषां समानगोत्रत्वान्न विवाहः परस्परम् ॥ ६४ ॥**

कश्यपास्त्रिविधाः; निध्रुवाः रेभाः शण्डिलाश्चेति । निध्रुवाणां काश्यपावत्सारनैध्रुवेति त्र्यार्षेय प्रवरः । रेभाणां काश्यपावत्साररैभेति त्र्यार्षेयः प्रवरः । शण्डिलानां काश्यपावत्सारशाण्डिल्येति वा काश्यपावत्सारदेवलेति वा काश्यपावत्सारासितेति वा शाण्डिल्यासितदेवलेति वा त्र्यार्षेयः प्रवरः । देवलासितेति वा त्र्यार्षेयः प्रवरः । एषां त्रयाणां गोत्रकर्तुः कश्यपस्यानुवृत्तेः 'एक एव ऋषिर्यावत्' इति परिभाषया च नान्योन्यमन्वयः समानगोत्रत्वात् । शण्डिलगोत्रस्य चतुर्थे प्रवरे कश्यपानुवृत्त्यभावेऽपि शण्डिलगोत्रस्य प्राक्तनप्रवरत्रयेऽपि कश्यपस्यानुवृत्तेर्विद्यमानतया अनुवृत्तिरस्ति । अस्मिन् त्र्यार्षेयप्रवरत्रये काश्यपावत्सारयोरनुवृत्तेः समानमुनिभूयस्त्वात् त्रयाणां न मिथोऽन्वयः ॥

अथ विशेष उच्यते—

**लोगाक्षिः कश्यपसुतो वसिष्ठेनोपनीतवान् ।**
**अहर्वसिष्ठो रात्रौ तु कश्यपस्तेन स स्मृतः ॥ ६८ ॥**
**नान्वियुस्तेन तद्वंश्या वसिष्ठैः कश्यपैरपि ।**

लोगाक्षिर्नाम कश्यपसन्तानः वसिष्ठेन कृतोपनयनः । तेनासावहर्वसिष्ठो रात्रौ कश्यपो जातः । उपनयनं द्वितीयं जन्म । उपनयनस्य दिवा विहितत्वात् अहर्वसिष्ठत्वम् । निषेकस्य प्रथमजन्मनो रात्रौ जातत्वाच्च रात्रौ कश्यपत्वम् । अतस्तज्जानां वसिष्ठैः कश्यपैश्च नान्वयः । द्व्यामुष्यायणत्वात् तेषां काश्यपावत्सारवासिष्ठेति वा, वासिष्ठकाश्यपावत्सारेति वा त्र्यार्षेयः प्रवरः । अत एव भिन्नगोत्रे उपनीतस्य द्व्यामुष्यायणत्वं, अहरुपदेष्टृ रात्रौ निषेक्तुरिति । अत एव निध्रुवरेभशण्डिललोगाक्षीणां मिथो नान्वयः ॥

तथा च प्रयोगपारिजाते आपस्तम्बः—

कश्यपो रेभरैभौ च शण्डिलो देवलोऽसितः ।
संकृतिः पूतिमापश्चावत्सारो निध्रुवो दश ॥
गोत्राणि कश्यपगणा अन्योन्यं न करग्रहः ।

अस्यार्थः—संकृतिपूतिमाषौ बोधायनसूत्रे शुद्धांगिरोगणे पठितौ कश्यपगणे च । आपस्तम्बसूत्रे वासिष्ठगणे पठितौ । अतस्तयोश्शुद्धांगिरोभिः संकृतिभिः कश्यपैर्वसिष्ठैश्च नान्वयः । अथ लोगाक्षिगणः आपस्तम्बसंग्रहे पठितः—

अनष्टयोऽराकुलयस्ताततयो राजवारयः ।
शैराश्च क्षीरजाश्चापि बाहवस्तदनन्तरम् ॥
तथा चाशुचयः प्रोक्तास्सैरन्ध्यो राजसेवकाः ।
खापुलिंगाश्च लोगाक्षिस्तथैव शरदम्बराः ॥
एते त्रयोदश प्रातर्वसिष्ठा निशि कश्यपाः ।
गायत्रीयोनिसम्बन्धावंगीकृत्य प्रवर्तकाः ॥
तेषां गोत्रद्वयं मुक्त्वा वसिष्ठं कश्यपं तथा ।
सर्वत्रापि विवाहस्स्यादिति वेदविदो विदुः ॥

अस्यार्थः—लोगाक्षिप्रभृतीनां त्रयोदशानां गायत्रीसम्बन्धादहर्वसिष्ठत्वम् ।

योनिसम्बन्धान्निशि कश्यपत्वम् । तेषां वसिष्ठैः कश्यपैश्च विवाहो न । इतरैस्तु विवाह इष्टः ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठवसिष्ठान्वयाभिनवमाधवाचार्योद्धृत-
गोत्रप्रवरनिर्णये सप्तमं प्रकरणम्.

---

अथाष्टमे प्रकरणे वसिष्ठगोत्रकाण्ड उच्यते ।

**वसिष्ठकुण्डिनौ तद्वदुपमन्युपराशरौ ॥ ६६ ॥**
**चतुर्णामेकगोत्रत्वान्न विवाहः परस्परम् ।**

वसिष्ठगणाश्चत्वारः, केवलवासिष्ठाः कुण्डिनाः उपमन्यवः पराशराश्चेति । तत्र केवलवसिष्ठानां, वासिष्ठेत्येकार्षेयः प्रवरः । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति त्र्यार्षेयः प्रवरः । उपमन्यूनां वासिष्ठेन्द्रप्रमदाभरद्वसव्येति त्र्यार्षेयः प्रवरः । पराशराणां वासिष्ठशाक्त्यपाराशर्येति त्र्यार्षेयः प्रवरः । एतेषां चतुर्णां गोत्रकर्तुर्वसिष्ठस्यानुवृत्तेस्समानप्रवरत्वात् न मिथो विवाहः ॥

अथ विशेष उच्यते ।

**वसिष्ठैरत्रिभिश्चापि जातूकर्ण्यस्य नान्वयः ॥ ६७ ॥**
**लोगाक्षेस्संकृतेनैव वसिष्ठैः कश्यपैरपि ।**

जातूकर्ण्यः अत्रेः पुत्र्यां विवाहात्पूर्वं वसिष्ठवीर्योत्पन्नः । कन्यकानां दानेनान्यगोत्रं; दानाभावे जनकगोत्रमेव । अतो जातूकर्ण्यः अत्रिगोत्रो वसिष्ठगोत्रश्च । अतस्तत्सन्ततेस्तस्य च वसिष्ठैरत्रिभिश्च नान्वयः; द्व्यामुष्यायणत्वात् । लोगाक्षेस्संकृतेश्च वसिष्ठैः कश्यपैश्च न मिथो विवाहः ॥

तथा चापस्तम्बः—

वासिष्ठ इन्द्रप्रमदाभरद्वसुपराशराः ।
शक्तिश्चैवोपमन्युश्च मैत्रावरुण एव च ॥
कुण्डिनः पूतिमाषश्च गौरिवीतश्च संकृतिः ।
जातूकर्ण्यश्च लोगाक्षिरिति प्रोक्तास्त्रयोदश ॥
एते वसिष्ठप्रभवा न विवाह्याः परस्परम् ॥

अस्यार्थः—वसिष्ठप्रभृतयस्त्रयोदश वसिष्ठगणाः । एषां मिथो नान्वय इत्यर्थः ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठवसिष्ठान्वयाभिनवमाधवाचार्योद्धृतगोत्र-
प्रवरनिर्णये अष्टमं प्रकरणम् ।

नवमे प्रकरणे अगस्त्यगोत्रकाण्डः कथ्यते ।

**अगस्तयोऽथेध्मवाहाश्शाम्भवाहास्तथैव च ॥ ६८ ॥**
**सोमवाहा यज्ञवाहास्सगोत्रा न मिथोऽन्वियुः ।**

इध्मवाहाः, शाम्भवाहाः, सोमवाहाः, यज्ञवाहाः, इत्यगस्त्यगणाश्चत्वारः । तेषां परस्परं नान्वयः । तत्रेध्मवाहानां आगस्त्यदार्ढ्यच्युतेध्मवाहेति त्र्यार्षेयः प्रवरः । शाम्भवाहानां आगस्त्यदार्ढ्यच्युतशाम्भवाहेति त्र्यार्षेयः प्रवरः । सोमवाहानां आगस्त्यदार्ढ्यच्युतसोमवाहेति त्र्यार्षेयः प्रवरः । यज्ञवाहानां आगस्त्यदार्ढ्यच्युतयाज्ञवाहेति त्र्यार्षेयः प्रवरः । एषां चतुर्णां गोत्रकर्तुरगस्त्यस्यानुवृत्तेस्समानप्रवरत्वात्समानमुनिभूयस्त्वाच्च परस्परं न विवाहः ॥

तथा चापस्तम्बः—

**अगस्तिरिध्मवाहश्च दृढच्युत इति त्रयः ॥ ६९ ॥**
**मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।**

स्पष्टोऽर्थः ॥

**प्रवरा ऊनपञ्चाशद्बोधायनमुनीरिताः ॥ ७० ॥**
**आपस्तम्बमते प्रोक्ता अष्टादश गणा अपि ।**

परिभाषा प्रकरणे—

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥

इति बोधायनसूत्रप्रोक्तानि गोत्राणि प्रयुतान्यर्बुदानि च । तेषां प्रवरा ऋषिभिर्दृष्टत्वादूनपञ्चाशदेव । आपस्तम्बमते अष्टादशगणा उदिताः ॥

इति वैदिकमार्गप्रतिष्ठानिष्ठवसिष्ठान्वयाभिनवमाधवाचार्योद्धृत-
गोत्रप्रवरनिर्णये नवमं प्रकरणम् ।

---

अथ दशमे प्रकरणे क्षत्रियविशो प्रवरः कथ्यते ।

**अथ राज्ञां विशां तद्वद्वर्णानां प्रवरस्स्मृतः ॥ ७१ ॥**

क्षत्रियाणां मानवैलपौरूरवसेति त्र्यार्षेयः प्रवरः । वैश्यानां भालन्दनवात्सप्रिमा-

क्लीलेति त्र्यार्षेयः प्रवरः । वणिजां मानवेत्येकार्षेयः प्रवरः इमे त्रयो बोधायनेन मुनिना प्रोक्ताः ॥

**स्वस्वमन्त्रदृशस्तेषां विवाहप्रवरास्स्मृताः ।**
**न चेन्मन्त्रदृशस्तस्य प्रवरास्स्वपुरोधसः ॥ ७२ ॥**
**अतस्समानप्रवरदोषस्तेषां न विद्यते ।**

क्षत्रियादिप्रवराणां परस्परं विवाहो दृष्टः तेषां स्वस्वमन्त्रदृशः स्वेषां मन्त्रद्रष्टार एतेषां प्रवराः स्मृताः । न चेन्मन्त्रद्रष्टारः पुरोहितस्य प्रवरा ज्ञेयाः स्वस्वपुरोहितभेदादेव तेषां प्रवरभेदः । स्वस्वमन्त्रद्रष्टृणामभावे पुरोहितप्रवरो द्रष्टव्यः । मनुप्रभृतीनां साम्येऽपि अवान्तरप्रवरभेदाद्विवाहः समानप्रवरदोषः । क्षत्रियादीनामप्येवम् । तत्र शिष्टाचारो व्यवस्थापकः ॥

अथ मतान्तरमप्याह ।

**अविज्ञातस्वगोत्रश्चेद्भवेदाचार्यगोत्रकः ॥ ७३ ॥**
**आचार्यगोत्रप्रवरोद्वाहोऽप्यस्मिन्न सम्मतः ।**
**विज्ञातनिजगोत्रो यः स्वाचार्यतनुजां न सः ॥ ७४ ॥**
**तद्गोत्रप्रवरां कन्यां उद्वहेदिति केचन ।**

माणवको यद्यविज्ञातगोत्रस्स्यात्तदा कंचिदाचार्यं नियुज्य तद्गोत्रो भवेत् । अत आचार्यगोत्रप्रवरोद्वाहोऽपि न कार्यः । अज्ञातकुलगोत्रः पित्राद्युपनयनकर्त्रभावादन्येन यद्युपनीतः तत्तनुजां नोद्वहेत् । तद्गोत्रे तत्कुले चापि कन्यामुद्वहेदिति केचन वदन्ति ॥

तथा च प्रयोगपारिजाते ।

सावित्रीं यस्य यो दद्यात्तत्कन्यां न स उद्वहेत् ।
तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत् ॥

इति । केचनेत्यनेन सावित्रीप्रदातृप्रवर एव विवाहो निषिध्यत इत्यर्थः । लौगाक्षिः कश्यपसुतो वसिष्ठेनोपनीतत्वाद्वासिष्ठः काश्यपश्च । अतस्तद्वदन्यगोत्रोपनीतो द्व्यामुष्यायण एवेति तद्गोत्रे तत्कुले वाऽपि विवाहो निषिध्यत एवेत्यर्थः । यथा देवरातः पनसः शौंगशैशिरिः कापिलः धनञ्जयः जातूकर्ण्यः एतेषां पुत्रपौत्रादयश्च द्विगोत्रास्तद्वदित्यर्थः ॥

मातुलस्य सुतोद्वाहो बोधायनमुनीरितः ॥ ७५ ॥
दाक्षिणात्यैः स्मृतिव्याख्यानेषु शिष्टैस्सुसाधितः ।

बोधायनधर्मे " पञ्चधा विप्रतिपत्तिः दक्षिणतस्तथोत्तरतो दक्षिणतोऽनुव्याख्यास्यामः पर्युषितभोजनं अनुपनीतेन सह भोजनं मातुलपितृष्वसृकन्यापरिणयनमिति अथोत्तरतः ऊर्णाविक्रयः शीधुपानं उभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रयानमिति इतरदितरमितरस्मिन् कुर्वन् दुष्यति " इति विद्यमानत्वात्तद्दक्षिणदेशीयानुत्तरतो विसृजेत् उत्तरदेशीयान् दाक्षिणतो विसृजेत् । अतः पराशरमाधवीयादिस्मृतिव्याख्यानेषु दाक्षिणात्यशिष्टाः स्मृतिमन्त्रार्थवादबलाद्दक्षिणदेशे मातुलकन्यापरिणयनं पितृष्वसृदुहितृपरिणयनं च कार्यमिति स्थापयामासुः । तत्र 'आयाहीन्द्र पथिभिरीलितेभिः' इति मन्त्रेण मातुलपितृष्वसृदुहितृपरिणयनं कार्यमिति प्रतीयते ॥

बुधैर्वधूवरौ भिन्नगोत्रप्रवरजाविति ॥ ७६ ॥
निर्णीतौ चेद्वदेल्लग्नं दैवज्ञो न ततोऽन्यथा ।

वरो वधूश्च भिन्नगोत्रप्रवरजाविति बुधैर्निर्णीतौ चेद्दैवज्ञो लग्नं वदेत् अन्यथा न वदेत् ॥

युग्मेऽब्दे जन्मतस्त्रीणां प्रीतिदं पाणिपीडनम् ॥ ७७ ॥
तद्वत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः ॥

वध्वाः जन्मप्रभृति समेऽब्दे विवाहः प्रशस्तः । पुंसो जन्मतो विषमे वर्षे प्रशस्तः वध्वा विषमेऽब्दे पुंसो युग्मे च न शुभदः ॥

अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ॥ ७८ ॥
दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला ।
गौरीप्रदो व्रजेत्स्वर्गं वैकुण्ठं रोहिणीप्रदः ॥ ७९ ॥
कन्याप्रदो ब्रह्मलोकं रौरवं तु रजस्वलाम् ।
प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ॥ ८० ॥

दृष्टे तु कन्यका दुष्टा जनकः पतितः स्मृतः ।
आरभ्य जन्मवर्षात्प्राग्रजोदर्शात्तु कन्यका ॥ ८१ ॥
विवाहार्हा भवेदूर्ध्वं गान्धर्वैकाधिकारिणी ।
स्ववर्षाद्द्वित्रिपञ्चाब्दहीनां कन्यां समुद्वहेत् ॥ ८२ ॥
स्वदैर्घ्यादधिकां नैव नातिकुब्जां कदाचन ।
स तु यद्यन्यजातीयः पतितः क्लीब एव वा ॥ ८३ ॥
विकर्मस्थः सगोत्रो वा व्यङ्गो दीर्घामयोऽपि वा ।
दत्ताऽपि देया साऽन्यस्मै सप्रावरणभूषणा ॥ ८४ ॥
वाचा दत्ता मनोदत्ता दत्ता यद्युदकेन वा ।
दुष्टं त्यक्त्वा गुणाढ्याय पुनर्देया तु कन्यका ॥ ८५ ॥
नोदकेन न वाचा वा कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥ ८६ ॥
सगोत्रप्रवराया हि निषिद्धं पाणिपीडनम् ।
अज्ञानादथवा मोहात् प्राजापत्यव्रतं चरेत् ॥ ८७ ॥

आपस्तम्बसूत्रे—" सगोत्राय दुहितरं न प्रयच्छेत् " इति सगोत्रकन्याविवाहो निषिद्धः । आश्वलायनसूत्रे—" असमानप्रवरैर्विवाहः " इति समानप्रवरविवाहः पर्युदस्तः । याज्ञवल्क्यस्मृतौ—

अरोगिणीं भ्रातृमतीं असमानार्षगोत्रजाम् ।

इत्यादिषु समानगोत्रप्रवरवधूविवाहस्य निषिद्धत्वात् अज्ञात्वा तादृशीं ऊढ्वा तद्दोषशान्तये वैदिककर्मयोग्यत्वार्थं च प्राजापत्यव्रतं चरेत् ॥

मोहाद्गत्वा प्रतिगमं चरेच्चान्द्रायणं व्रतम् ।
गर्भश्चेत्काश्यपोऽयं स्यात् भारद्वाजोऽथवा भवेत् ॥ ८८ ॥

समानार्षगोत्रजामूढां मोहाद्गच्छेद्यावद्दारं गमनं तावच्चान्द्रायणव्रतं चरेत् ।

तत्र यदि गर्भस्स्यात् तत्रोत्पन्नः काश्यपगोत्रो वा भारद्वाजगोत्रो वा भवेत् येन पुत्रः [ येन तं ] काश्यपो वा भारद्वाजो वा पुत्रत्वेन स्वीकुर्यात्। नो चेत् काश्यपो वा भारद्वाजो वा संस्कुर्यात् ॥

**साऽपि भार्या प्रतिगमं चरेच्चान्द्रायणं व्रतम् ।**
**ब्राह्मणी चेन्मातृवत्तां बिभृयान्मातृहाऽन्यथा ॥ ८९ ॥**
**सगोत्रप्रवरां ज्ञात्वा गच्छंस्तु गुरुतल्पगः ।**
**तत्र चण्डालमुत्पाद्य ब्राह्मण्यादेव हीयते ॥ ९० ॥**

समानप्रवरां ज्ञात्वा गच्छेच्चेद्गुरुतल्पव्रतं चरेत् । तत्र यदि गर्भोत्पत्तिस्स्यात् तदा स ब्राह्मण्याद्धीयत एव तत्रोत्पन्नः चण्डालो भवति । तं चण्डालेषु निक्षिपेदित्यर्थः । तथा च यमः—

आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः ।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥
सगोत्रप्रवरां कन्यामूढां ज्ञात्वोपगम्य च ।
तस्यां चण्डालमुत्पाद्य ब्राह्मण्यादेव हीयते ॥

इति । अस्यार्थः—यस्तु संन्यासी सन् स्त्रियं भोगार्थं गच्छति स आरूढपतितः, तद्वीर्यादुत्पन्न एकः । ब्राह्मणस्त्रियां शूद्रादुत्पन्न एकः । सगोत्रप्रवरां ज्ञात्वा विवाहितायां स्त्रियामुत्पन्न एकः । एते त्रयः चण्डालाः ईरिताः ते चण्डालेषु योज्या इत्यर्थः । इतरत् स्पष्टम् । तथा च स्मृत्यन्तरम्—

कन्यामूढां सगोत्रप्रवरपुरुषजां मातृवद्दोषदण्ड-
प्रायश्चित्तादिभाक्स्याज्जनयति च सुतं जातिचण्डालमस्याम् ॥
अज्ञात्वोढ्वोपगम्य प्रतिगमनमुपेत्यैन्दवं सा च भार्या
गर्भश्चेत्स्यान्न दुष्टस्स मुनिभिरुदितः काश्यपो गोत्रविद्भिः ॥ इति ।

**तनूनपान्नराशंसयागोद्वाहादिकर्म[1] च ।**
**याज्यत्वादीनि सिद्ध्यन्ति गोत्रप्रवरनिर्णयात् ॥ ९१ ॥**
**महान्यत्नस्ततः कार्यो गोत्रप्रवरनिर्णये ।**

---

१ पुरुषोत्तमप्रवरमञ्जर्यामुपक्रमस्थमिदं पद्यम्.

गोत्रप्रवरनिर्णये जाते तनूनपाद्याजिनः नराशंसयाजिन इति भेदः सुखेन ज्ञेयः; उद्वाहादिकर्म च ज्ञेयं; याज्यत्वादि च सुखेन ज्ञेयं भवति । बोधायनसूत्रे–"नाराशंसान् व्याख्यास्यामः आत्रेयवाध्र्यश्ववाधूलवसिष्ठकण्वसंकृतियस्कशुनकराजन्यमौद्गल्या इत्येते नाराशंसास्तनूनपादन्येषां गोत्राणां" इत्युक्तेः आत्रेयादिमौद्गल्यान्ताः नाराशंसयाजिन इतरगोत्रजाः तनूनपाद्याजिनः वत्सविदृष्टिषेणाः पञ्चावत्तिनः इतरे चतुरवत्तिनः । एतद्भेदाज्ञाने श्रौतस्मार्तादि कर्म न सिध्यति । समानगोत्रप्रवराज्ञाने उद्वाहकर्म न सिध्यति । याज्यत्वादि च याज्यगोत्रप्रवराज्ञाने न सिध्यति । यतस्सर्वकर्मसिद्धिः सर्वानर्थपरिहारश्च गोत्रप्रवरनिर्णयादेव भवति अतो गोत्रप्रवरनिर्णये महान्यत्नः कार्यः ॥

गोत्रप्रवरविज्ञानं स्वधर्मफललिप्सुभिः ॥ ९२ ॥
सम्पाद्यमाहुर्धर्मज्ञाः प्रत्यवायजयेप्सुभिः ।
सर्वेश्वरस्तवमिमं गोत्रप्रवरनिर्णयम् ॥ ९३ ॥
विधाय माधवाचार्यः सर्वेशाय समार्पयत् ।
इमं मुनेरविच्छिन्नान्वयं पर्वणिपर्वणि ॥ ९४ ॥
जपन्नीशप्रसादेन ब्रह्मलोके महीयते ।

इति वैदिकमार्गप्रतिष्ठानिष्ठवसिष्ठान्वयाभिनवमाधवाचार्योद्धृते गोत्रप्रवरनिर्णये दशमं प्रकरणं समाप्तम् ।

समाप्तोऽयं निबन्धः ।

---

# अकारादिक्रमेण गोत्रर्षिसूचिनी.

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|
| ११९ | ९ | आपरायण | ३१ |
| २६ | १६ | आपस्ताम्बि | ३ |
| ४३ | १० | ,, | २० |
| ४१ | ६ | आपस्तम्भ | १९ |
| ११६ | ९ | ,, | २४ |
| ११६ | १४ | आपस्ताम्भि | २४ |
| ११८ | २४ | आपाग्नेय | ३० |
| ११३ | १९ | आपिकायन | ७ |
| ३२ | १८ | आपिकायनि | ७ |
| २३ | २१ | आपिङ्गलेय | १ |
| २७ | २१ | आपिशल | ७ |
| २२ | २३ | आपिशलि | १ |
| ११३ | २० | आपिशायन | ७ |
| ११० | २१ | आपिशालि | १ |
| ५८ | २२ | आप्यायन | ३१ |
| ८१ | २२ | आभरद्वसु | ५८ |
| ६८ | ६ | आभूत्य | ५३ |
| ११८ | १६ | आमरनाशन | ३३ |
| १११ | ९ | आमिलायन | १ |
| ५५ | ११ | आमौखिताकि | २२ |
| १२५ | १ | आयवत्स | ५९ |
| ६८ | १४ | आयस्थूण | ५३ |
| ७९ | २१ | ,, | ५५ |
| ७७ | १९ | आयस्थूल | ५५ |
| ५० | २ | आयाग्नेय | २६ |
| ३८ | १२ | आयास्य | ९ |
| ११४ | ७ | ,, | १२ |
| ६२ | २१ | आरकि | ३६ |
| ४१ | ७ | आरणसिन्धु | १९ |
| ७६ | २१ | आरवव | ५६ |
| १२३ | ४ | आरालि | ५५ |
| ६८ | २३ | आरिष्टैपायि | ५४ |
| ११४ | २३ | आरुणायनि | १३ |
| ४१ | २० | आरुणि | १९ |
| ५६ | ९ | ,, | २७ |
| ७७ | २३ | ,, | ५७ |
| ११९ | २ | आरुण्यः | ३१ |
| ७९ | २२ | आर्कर्य | ५७ |
| २३ | २० | आर्कायण | १ |
| २३ | ६ | ,, | ४ |
| ७८ | १८ | आर्कि | ५७ |
| ६० | १ | आर्घपथ | ३१ |
| २५ | २० | आर्तभाग | १ |
| ४४ | १९ | आर्द्ररूक | ३० |
| ११९ | २३ | आर्यपथ | ३५ |
| २२ | २२ | आर्यायण | १ |
| ५५ | २२ | आर्षभि | ३० |
| १२८ | १९ | ,, | ३४ |
| ५८ | १६ | आर्षसाहारि | ३१ |
| ५० | ६ | आर्षादि | २९ |
| ११८ | १६ | ,, | ३३ |
| ११२ | १ | आर्षेय | ४ |
| २३ | १० | आर्ष्टिषेण | ३ |
| ६२ | २१ | आलकि | ३६ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. स. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| ७५ | १४ | आलम्भायन | ५५ | १२१ | ७ | आश्वतापन | ४१ |
| ६१ | १४ | आलर्वि | ३६ | ६३ | ११ | आश्वताथन | ३१ |
| ७६ | २ | आलव | ५६ | ७३ | २१ | आश्वबाणायत्ति | ५४ |
| ७८ | ५ | आलवायन | ५६ | २७ | ४ | आश्वलायन | ७ |
| १२६ | १५ | ,, | ६४ | ७१ | १९ | ,, | ५३ |
| ५० | १ | आलवाल | २६ | ७५ | १२ | ,, | ५५ |
| ११८ | २३ | ,, | ३० | १२५ | १९ | ,, | ६३ |
| १२० | २५ | आलवि | ४१ | ४३ | ५ | आश्वलायनि | २० |
| २२ | १५ | आलेखन | १ | ४४ | १९ | ,, | ६० |
| ६३ | १३ | आलोप्य | ३१ | ११६ | ९ | ,, | २४ |
| ७५ | १५ | आवाकित | ५५ | ७२ | १४ | आश्वलायनिन् | ५३ |
| २६ | २० | आविगोवि | १ | १२१ | २२ | आश्ववत | ४३ |
| ७६ | १९ | आविलबदर | ५६ | ७० | २० | आश्ववातापन | ५३ |
| ६८ | १६ | आविश्रेण्य | ५३ | ६२ | १० | आश्ववातायन | ३८ |
| १२४ | ७ | ,, | ६१ | ७२ | १५ | ,, | ५३ |
| ७५ | १८ | आविश्व | ५८ | १२४ | १३ | ,, | ६१ |
| १२७ | ६ | आविष्टायन | ६५ | ७३ | २१ | आश्वावीत | ५४ |
| १२९ | १० | आविष्ठि | ६२ | ३२ | ५ | आश्वाभि | ३ |
| ७८ | १४ | आविष्ठायन | ५७ | ११२ | ११ | आश्वायाति | ३ |
| ४१ | १६ | आश्न | १९ | ६१ | १८ | आश्विवन्तवय | ३६ |
| १११ | ४ | आश्मक्रम | १ | २६ | ४ | आष्मक्रमणि | १ |
| ६४ | ५ | आश्मरथ्य | ३९ | ७६ | २ | आसक्षर | ५६ |
| १२२ | ११ | ,, | ५० | ६८ | ८ | आसुरायण | ५३ |
| ११७ | ४ | आश्मी | २९ | १२३ | २६ | ,, | ६१ |
| ११५ | २५ | आश्लुः | २४ | ५८ | १६ | आहायन | ३१ |
| ६५ | १८ | आश्व | ३१ | ११९ | २० | ,, | ३५ |
| ७१ | २० | ,, | ५३ | १२४ | १० | आहुगायक | ६१ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| ६९ | २० | औदमेघि | ५१ | ६६ | २१ | औपदहनि | ३१ |
| ६१ | २२ | औदरि | ३६ | १२१ | १ | ,, | ४१ |
| ६१ | १३ | औदलि | ३६ | १२७ | १७ | ,, | ६८ |
| १२० | २५ | ,, | ४१ | ८६ | ६ | औपदहयन | ६० |
| १२४ | १ | ,, | ६१ | १११ | १६ | औपधि | १ |
| ७७ | १३ | औदलोम | ५५ | ३६ | १९ | औपबिन्दु | १८ |
| १२९ | १५ | औदवाहि | ६२ | ११४ | १४ | ,, | १४ |
| ११५ | १२ | औदजायन | १२ | ११४ | २४ | औपमन्य | १३ |
| ७५ | २४ | औदाहमानि | ५६ | ७८ | ९ | औममन्यव | ५६ |
| ३७ | २३ | औदुञ्जायन | १८ | ११८ | १४ | औपमर्कटायनि | ३३ |
| ६१ | २४ | औदुम्बरि | ३६ | ११६ | २७ | औपमर्कटि | २५ |
| १२६ | १३ | औद्राहयानि | ६४ | ५४ | १३ | औपमर्कटच्चायक | २९ |
| ७८ | ६ | औद्राहमति | ५६ | ७८ | २१ | औपलेखय | ५६ |
| ५७ | १५ | औद्दालकि | ३१ | ७८ | ६ | औपलेखि | ५६ |
| ११९ | १४ | ,, | ३५ | १२६ | १९ | ,, | ६४ |
| १२२ | १३ | ,, | ५० | ७९ | १८ | औपलोम | ५५ |
| ५८ | २२ | औद्दालन | ३१ | १२५ | २४ | औपवत | ६३ |
| ७६ | २० | औद्दाहमानि | ५६ | ६८ | ९ | औपव्य | ५३ |
| १२९ | १५ | औपकत्सकि | ६२ | १२३ | २७ | ,, | ६१ |
| ४३ | १४ | औपकर्मी | २१ | ४१ | १७ | औपशय | १९ |
| ७५ | २२ | औपगव | ५६ | ११५ | २६ | औपसिवि | २४ |
| ७७ | १२ | ,, | ५५ | ७८ | ८ | औपस्वस्थ | ५८ |
| १२५ | २४ | ,, | ६३ | १२६ | ९ | ,, | ६५ |
| ५६ | ९ | औपगवि | २७ | १२३ | १० | औमिल | ५५ |
| ११९ | ३ | ,, | ३१ | ६३ | १८ | औरकि | ४४ |
| ६१ | १७ | औपदह | ३६ | २३ | २० | औरशि | १ |
| ६१ | २४ | औपदहनि | ३६ | ११० | १७ | औरसि | १ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| ७६ | २१ | कासावय | ५६ | ७६ | १ | कुण्डोदरायण | ५६ |
| ३६ | ६ | कासि | ९ | १२६ | १४ | ,, | ६४ |
| ३१ | १२ | कासिकृत् | १ | ४५ | १६ | कुत्स | २८ |
| ११४ | १२ | कासीक | १२ | ११८ | ७ | ,, | ३२ |
| ४७ | २ | कासोरु | १० | ८७ | ७ | कुनाड | ६३ |
| ११४ | २३ | ,, | १३ | ११६ | १९ | कुपित | २४ |
| ६४ | १७ | कास्वैत | ४६ | ११६ | ६ | कुमुदगन्धि | २४ |
| १२३ | १० | काहुल | ५५ | ४९ | ७ | कुम्भगोत्रोद्भव | २७ |
| २२ | २२ | काह्वायन | १ | १२८ | १ | कुरुनाड्य | ६८ |
| ५४ | १६ | ,, | २५ | ११६ | १८ | कुलकि | २४ |
| ७६ | २३ | ,, | ५७ | ७३ | १५ | कुलह | ५१ |
| १२७ | ३ | ,, | ६५ | ७४ | २४ | कुलिज | ५१ |
| ११६ | १९ | किकाज | २४ | १२७ | १७ | कुलमाप | ६८ |
| ३६ | १४ | किलालि | ९ | ८६ | ६ | कुल्माषदण्डि | ६० |
| ११४ | ११ | ,, | १२ | ११९ | ३ | कुशामित्र | ३१ |
| १२४ | १६ | कीरि | ६१ | ६१ | १३ | कुशिक | ३६ |
| ७७ | १४ | कीलिव्यय | ५५ | ६३ | ११ | ,, | ३१ |
| ४२ | ११ | कुक्र | २० | १२० | २२ | ,, | ४१ |
| ४१ | ८ | कुक्ष | १९ | १२१ | १८ | ,, | ४९ |
| ११६ | ३ | ,, | २४ | ४८ | ११ | कुशीदाकि | २२ |
| १२७ | २५ | कुडचाक्षि | ६८ | ११७ | १८ | कुसीद | २६ |
| ३८ | १३ | कुण्डव | १० | ४८ | २२ | कुसीदानि | २२ |
| ७५ | १७ | कुण्डिन | ५८ | १२५ | १० | कुहन | ५९ |
| ७९ | १८ | कुण्डिन | ५६ | ७१ | ७ | कुहल | ५१ |
| ७९ | १० | ,, | ५७ | १२५ | ५ | कुहव | ५९ |
| १२६ | ५ | ,, | ६६ | ७६ | ४ | कुहुंशय | ५७ |
| ११४ | १७ | कुण्डेव | १३ | ११६ | १४ | कृक | २४ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| ३० | २२ | कृच्छ | १ | २४ | ६ | कैतवायन | ६ |
| ११० | १९ | कृतभाग | १ | ११३ | १७ | ,, | ७ |
| १११ | ८ | कृत्स्नपगैलायनि | १ | १२४ | १० | कैरज | ६१ |
| ८० | ८ | कृष्ण | ५६ | ११९ | २१ | कैरजि | ३५ |
| ८१ | २२ | ,, | ५८ | ७० | १९ | कैरञ्ज | ५३ |
| १२६ | २० | ,, | ६४ | ५९ | २० | कैरञ्जि | ३१ |
| १२० | ५ | कृष्णशीर्षक | ३६ | ५८ | १८ | कैरञ्जी | ३१ |
| ७६ | ५ | कृष्णाः पराशराः | ५७ | ७३ | १४ | कैरात | ५१ |
| १२७ | ३ | कृष्णाजानि | ६५ | १२५ | ८ | ,, | ५९ |
| ७६ | ९ | कृष्णाजिन | ५७ | ४६ | १९ | कैराति | १० |
| ५७ | १६ | कृष्णात्रेय | ३१ | ११४ | २२ | ,, | १३ |
| ११९ | १५ | ,, | ३५ | ५४ | २१ | कैलल | २८ |
| १११ | १० | केझलेटि | २ | १११ | १९ | कैलवर्णाधि | १ |
| १२० | १५ | केरय | ३९ | ७१ | २२ | कैवल | ५४ |
| ४३ | १२ | केशमर्थ | २१ | ११६ | २८ | कैवलायन | २५ |
| ११५ | २५ | केशरवय | २४ | ४२ | २२ | कैवल्य | २१ |
| ४० | २३ | केशस्वेय | १९ | ११६ | २४ | कैवाल्य | २५ |
| १२५ | ५ | केशिभि | ५९ | ४७ | २ | कैशिल्य | १० |
| ७१ | ७ | केशील | ५१ | ७१ | ७ | कोकिल | ५१ |
| ११६ | २५ | केषर्मि | २५ | १२५ | ५ | ,, | ५९ |
| ३१ | १० | केसलेढि | १ | ७१ | २१ | कोकिलाकहन | ५४ |
| ७१ | २० | कैकयश | ५३ | १२६ | २० | कोक्ष | ६४ |
| ७२ | १७ | कैकरसप | ५३ | ३१ | ८ | कोचहस्तिक | १ |
| ७१ | १ | कैकशि | ५३ | १११ | १५ | कोचहुण्डि | १ |
| १२४ | १३ | कैकसि | ६१ | १११ | ३ | कोचिहास्ति | १ |
| ७३ | २१ | कैकिपय | ५४ | १११ | ८ | कोपयज्ञ | १ |
| १२४ | २१ | कैजालि | ६१ | ३१ | ३ | कोपियज्ञ | १ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|
| ११४ | १० | कौमारवत्य | १२ |
| ३६ | १३ | कौमाश्वत्य | ९ |
| ४१ | ७ | कौमुदगन्धि | १९ |
| ४३ | ८ | ,, | २० |
| ७९ | २२ | कौमुदाय | ५७ |
| १२७ | २ | कौमुदि | ६५ |
| ६३ | १५ | कौमुहायन | ३७ |
| ३८ | २३ | कौमेलि | १० |
| ७८ | ३ | कौरकृत् | ५६ |
| १२६ | १६ | ,, | ६४ |
| ५८ | २३ | कौरग्रीवि | ३१ |
| १२७ | ९ | कौरजायन | ६५ |
| ७१ | ८ | कौरडज | ५१ |
| ७१ | २२ | कौरद्वाज | ५४ |
| ६२ | १० | कौरव्य | ३८ |
| ७८ | १९ | ,, | ५६ |
| १२६ | १६ | ,, | ६४ |
| ७८ | २ | कौरव्याव | ५६ |
| १२४ | २१ | कौरिह्य | ६१ |
| ४३ | ९ | कौरुक्षेत्रि | २० |
| ११६ | १३ | ,, | २४ |
| १२५ | ६ | कौरुण्डज | ५९ |
| ४१ | ८ | कौर्काक्षि | १९ |
| १२६ | २३ | कौलकि | ६४ |
| ५४ | २१ | कौलर्प | २८ |
| ११७ | २ | कौलाक्षि | २५ |
| १२५ | २१ | कौलायन | ६३ |
| ४३ | १३ | कौलास्त्र | २१ |
| ११६ | २६ | कौलास्त्रय | २५ |
| ५४ | १० | कौलि | २८ |
| १२६ | ३ | ,, | ६३ |
| ७१ | ८ | कौवलि | ५१ |
| १२५ | ५ | ,, | ५९ |
| २६ | २ | कौवह | १ |
| १२५ | २६ | कौविधि | ६३ |
| ८७ | २३ | कौशलि | ६३ |
| ७३ | २१ | कौशान्तक | ५४ |
| २३ | १६ | कौशाम्बेय | ५ |
| ३२ | ११ | कौशाम्बोयि | ५ |
| ८७ | ७ | कौशाल्य | ६३ |
| १२४ | २८ | कौशि | ५९ |
| ६६ | १२ | कौशिक | ३९ |
| १२२ | ११ | ,, | ५० |
| १२४ | १ | कौशिकेय | ६१ |
| ६८ | ११ | कौशितकय | ५३ |
| ११४ | १३ | कौशिल्यायन | १३ |
| १२४ | १७ | कौशीतकि | ६१ |
| १२४ | १३ | कौशीदक | ६१ |
| ७१ | १९ | कौषीतक | ५३ |
| ६८ | २१ | कौषीतकेय | ५३ |
| १२८ | १ | कौसल्य | ६८ |
| ७० | २० | कौसीदक | ५३ |
| ६९ | ३ | कौहल | ५१ |
| ४६ | २३ | कौहौकर्णि | १० |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|
| ६८ | २२ | गौरिवायण | ५३ |
| ४० | २९ | गौरिवायन | १९ |
| ११५ | २६ | ,, | २४ |
| १२४ | २ | ,, | ६१ |
| १२० | ११ | गौरिवीत | ४० |
| ७५ | ११ | गौरिश्रवस् | ५५ |
| १२५ | १९ | ,, | ६३ |
| २७ | २२ | गौरिहित | ५ |
| ६८ | ११ | गौरीवायन | ५३ |
| ११३ | ७ | गौर्जिग | ५ |
| ६० | १ | गौर्यन्य | ३१ |
| ११९ | २३ | गौर्वन्य | ३५ |
| २५ | २३ | गौलव | १ |
| १११ | २ | गौवि | १ |
| २३ | १८ | गौश्रायण | १ |
| ६७ | ३ | ग्रथिन | ४६ |
| ८० | २१ | ग्रथय | ५६ |
| ४५ | ४ | ग्राध | २४ |
| ३२ | १४ | ग्रामद् | ९ |
| २३ | २४ | ग्राम्यायण | ३ |
| २६ | २४ | ग्राम्यायणि | ३ |
| २६ | १६ | ग्राम्यायनि | ३ |
| ७६ | ५ | ग्रावावि | ५७ |
| १०२ | ७ | ग्राष्णेयन | ५३ |
| १२२ | २३ | ग्रीव | ५९ |
| १२२ | ११ | घोटमुख | ५० |
| ४५ | २० | घोर | २९ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|
| १२२ | २५ | चक्र | ५५ |
| ७० | १८ | चक्रधर्मिन् | ५३ |
| १२४ | ११ | ,, | ६१ |
| ३३ | २५ | चाक्षि | ८ |
| ३३ | ३ | चक्षुर्वा | ८ |
| ११२ | ११ | चटायन | ९ |
| १२५ | १० | ,, | ५९ |
| ३२ | ९ | चण्डम | ५ |
| ११३ | ४ | चण्डमोदन | ५ |
| ४६ | २३ | चण्डाण्डक | १० |
| ४६ | २० | चण्डान्तक | १० |
| ८० | २२ | चण्डालि | ५६ |
| ५० | ६ | चतुराय | २९ |
| ११८ | १६ | चतुरि | ३३ |
| ७६ | ७८ | चत्थ्य | ५६ |
| ११९ | १८ | चन्द्रातिथि | ३५ |
| १२५ | ४ | चलुभि | ५९ |
| ६२ | २२ | चाक्रवर्मायण | ४१ |
| १२५ | २१ | चाक्रायण | ६१ |
| ४८ | ३ | चाक्रि | २१ |
| २५ | २३ | चाणूकेय | १ |
| ८० | १ | चाण्डालि | ५५ |
| १२६ | १ | ,, | ६३ |
| ६१ | २१ | चात्रवर्णायन | ४१ |
| २२ | २२ | चान्द्रमस | १ |
| ५५ | २२ | चान्द्रायण | ३० |
| १२८ | १९ | ,, | ३४ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|
| ७८ | २० | चान्द्रोदय | ५६ |
| ६९ | २२ | चामेत्र | ५४ |
| १२३ | ४ | चाम्पेय | ५५ |
| ५५ | २१ | चारायण | ३० |
| १२१ | ४ | चारिकि | ४१ |
| १२३ | ६ | चारुभत्स्य | ५५ |
| १२८ | ५ | चाप | ७३ |
| १२८ | २१ | चासरायणि | ३४ |
| ६१ | १४ | चिकित | ३६ |
| ६५ | २ | ,, | ३१ |
| ४७ | १० | चिकिपि | २० |
| ११६ | १५ | चिकीर्षि | २४ |
| १२१ | २ | चित्रन्तावि | ४१ |
| ६१ | २४ | चित्रन्तायन | ३६ |
| २४ | १ | चित्रसेन | ५ |
| १२० | २६ | चिन्तित | ४१ |
| ३१ | २२ | चिर | १ |
| १२८ | ७ | चिलि | ७३ |
| ५८ | २० | चूर्णबोध | ३३ |
| ७१ | १७ | चेकेत | ५३ |
| ४४ | २३ | चेताकि | ३० |
| ७१ | १८ | चेदगव्य | ५३ |
| १२४ | ११ | चेदु | ६१ |
| १२५ | ५ | चेरेल | ६९ |
| ११५ | २६ | चेलक | २४ |
| ११६ | १८ | चेलाक्षरु | '५४ |
| ७८ | २ | चैक | ५६ |
| ६३ | १० | चैकित | ३१ |
| १२४ | १० | चैकेत | ६१ |
| २४ | २३ | चैक्ष | ८ |
| ४३ | २० | चैतकि | २२ |
| ११७ | १३ | ,, | २६ |
| ५५ | २१ | चैतातिय | ३० |
| ६१ | १७ | चैत्रेय | ३६ |
| १२१ | २ | ,, | ४१ |
| १२१ | २३ | ,, | ४३ |
| ६९ | २३ | चैरण्डि | ५४ |
| ६९ | १४ | चैरन्ध्रि | ५४ |
| ७१ | २१ | चैरभानु | ५४ |
| १२४ | ३ | चैल | ६१ |
| १२२ | ४ | चोदायनि | ४८ |
| ६९ | १४ | चोप्यणाय | ५४ |
| ४७ | २२ | चोरग्रीवि | २० |
| ७६ | १७ | चोल | ५६ |
| १२९ | ११ | चोष्यन | ६२ |
| २७ | १३ | चौक्ष | ८ |
| ७८ | ५ | चौण्डावरय | ५६ |
| ४३ | ४ | चौपिष्ट | २० |
| ७७ | १७ | चौपारिश्रवस | ५५ |
| ७१ | ७ | चौरनाभ | ५१ |
| १२५ | २७ | चौलि | ६३ |
| ६९ | २३ | चौल्बण | ५४ |
| ६१ | १६ | चौवाल | ३६ |
| ८४ | १८ | चौषि | ५७ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| ३० | १० | च्यवन | १ | ६९ | १९ | जय | ५४ |
| ५७ | २३ | छगल | ३१ | ७५ | २३ | ,, | ५६ |
| ११९ | ४ | छत्रिण | ३१ | ७७ | २४ | जयमाल | ५५ |
| ११८ | २४ | छत्रिहय | ३० | २७ | २० | जयविश्वम्भर | १० |
| ११९ | १२ | छन्दोगि | ३५ | १२६ | १२ | जयोलोक | ६४ |
| ६० | ५ | छन्दोगेय | ३१ | १११ | ८ | जलधि | १ |
| ५७ | १४ | छागल | ३१ | ११७ | १७ | जलन्दु | २६ |
| ११९ | १३ | ,, | ३५ | ७३ | १२ | जलन्धर | ५१ |
| ६८ | १८ | छागलि | ५३ | १२५ | ४ | जलन्धव | ५९ |
| ६८ | ८ | छागव्य | ५३ | ७१ | ६ | जलम्ब | ५१ |
| १२३ | २६ | ,, | ६१ | ७१ | २१ | ,, | ५४ |
| १२३ | २४ | छाङ्गरि | ६१ | १२५ | १७ | जलसिन्धकि | २६ |
| ६० | २२ | छान्द | ३१ | ४८ | ११ | जसिम्बि | २२ |
| ११९ | १२ | छान्दि | ३५ | ३० | २० | जलुपि | १ |
| ५७ | २३ | छान्दोगि | ३१ | ४८ | २२ | जवि | २२ |
| ७१ | १७ | छायवण | ५३ | ३० | १७ | जहिन | १ |
| ११९ | २४ | जगलद् | ३५ | १११ | ८ | जहिमोवीतिन | १ |
| ११८ | २५ | जङ्घ | ३० | ७१ | २० | जहीथवन | ५३ |
| १२३ | २ | जङ्घारि | ५५ | १२२ | ९ | जहु | ५३ |
| ५४ | २० | जङ्घास्तरण | २६ | ७१ | २१ | जाकेल | ५४ |
| ७६ | १६ | जतुकर्ण | ५६ | ६१ | ४ | जाणवंश | ५१ |
| ४९ | २२ | जतृण | २५ | १२३ | ११ | जातवि | ५५ |
| ११९ | ४ | ,, | ३१ | ८१ | ६ | जातुकर्ण्य | ५९ |
| ४४ | ७ | जत्रिणि | २५ | ५९ | २१ | जातुकिडोलेय | ३१ |
| ४९ | १३ | जतृण | २५ | ७५ | १३ | जातूकर्ण्य | ५५ |
| २९ | १७ | जमदग्नि | १ | ७८ | १३ | ,, | ५९ |
| ३१ | १७ | ,, | ४ | १२५ | २० | ,, | ६३ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| १२७ | ११ | जातूकर्ण्य | ६७ | ७८ | ३ | जालपि | ५६ |
| ८१ | ६ | जादय | ५९ | ७६ | १७ | जालम्भायन | ५६ |
| ४३ | २२ | जानकि | ३० | ७५ | २३ | जालागत | ५६ |
| ५८ | १८ | ,, | ३१ | १२६ | १२ | ,, | ६४ |
| १२८ | २१ | ,, | ३४ | ७६ | १९ | जालागवहय | ५६ |
| ६९ | ७ | जानन्धरि | ५१ | ८० | ३ | जालि | ५५ |
| १२५ | ३ | ,, | ५९ | १२५ | १० | जावंश | ५९ |
| २२ | १८ | जानायन | १ | ४७ | १३ | जित्यद्रोणि | २० |
| ११९ | २१ | जानुकि | ३५ | ११० | १६ | जिहीति | १ |
| ६३ | १२ | जाबाल | ३१ | ३१ | १० | जिह्मशून्य | १ |
| २२ | २३ | जाबालि | १ | १२३ | २७ | जीवन्त | ६१ |
| ३२ | १३ | ,, | ५ | २५ | ५ | जीवन्ति | १ |
| ६१ | १६ | ,, | ३६ | २८ | ५ | जीनन्त्यायन | ५ |
| ६९ | २४ | ,, | ५४ | ३२ | १० | जीवन्त्यायननि | ५ |
| १२१ | १ | ,, | ४१ | ३० | २१ | जीवाप्ति | १ |
| ३६ | ५ | जाभ्य ? | ९ | २२ | १९ | जीहीति | १ |
| २५ | २ | जामदग्न्य | १ | ४३ | ९ | जेत्वरायन | २० |
| २३ | २३ | जामाल | ४ | ७८ | १३ | जेमय | ५७ |
| २५ | ५ | जामाल्य | १ | २६ | २१ | जैकाजिंहि | १ |
| ६२ | ७ | जायन | ४३ | २६ | ३ | जैंकाजिह्वि | १ |
| ४२ | २ | जायावत | २१ | ४७ | १३ | जैक्षलयानि | २० |
| ११६ | २३ | ,, | २५ | ४७ | २२ | जैजिल | २० |
| ६८ | १३ | जारमात्स्य | ५३ | ५८ | १८ | जैत्रायण | ३१ |
| १२४ | ४ | ,, | ६१ | ११९ | २१ | ,, | ३५ |
| ३० | २२ | जालधि | १ | ४३ | ९ | जैत्रि | २० |
| ६९ | ७ | जालन्धरि | ५१ | ११६ | १३ | ,, | २४ |
| १२५ | ३ | ,, | ५९ | ११६ | १३ | जैत्वलायन | २४ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| १२७ | ६ | जैमि | ६५ | १२५ | ८ | तदपांस | ५९ |
| २८ | ५ | जैमिनि | ५ | ७३ | १६ | तद्पास | ५१ |
| ११३ | २ | जैवत्तायन | ५ | ७८ | ४ | तदुहितरथ | ५६ |
| ११३ | ५ | जैवत्यायन | ५ | ४१ | १७ | तनुकर्ण | १९ |
| ११० | २६ | जैह्मजिजीवन्ति | १ | १२१ | ४ | तन्तु | ४१ |
| ८४ | १२ | जैह्मप | ५७ | ५८ | १८ | तन्त्ववाह | ३१ |
| ११६ | १८ | जैह्मलायन | २४ | १२७ | २५ | तन्नर | ६८ |
| २६ | २१ | जैह्याष्म | १ | १२७ | ७ | तप | ६५ |
| २५ | १८ | जैह्यति | १ | ४८ | २२ | तपस्वितेतर | २२ |
| १११ | ४ | जैह्यायन | १ | ७९ | २ | तरणि | ५७ |
| ४८ | १८ | ज्ञात्वायन | २८ | १२७ | ८ | ,, | ६५ |
| ७२ | १८ | ज्ञानराध | ५३ | ५५ | २३ | तरसिखण्डी | २२ |
| १२४ | १७ | ,, | ६१ | ११७ | १६ | तरस्वान् | २६ |
| १२४ | २० | ज्ञानहरित | ६१ | ५५ | १० | तरास्विन् | २२ |
| ६२ | ५ | ज्यामकायन | ३७ | ८० | ८ | तरायण | ५६ |
| ११३ | ६ | ज्वारि | ५ | ११७ | १३ | तरि | २६ |
| ४१ | १ | ज्वलि | १९ | १२६ | २० | तरोगण | ६४ |
| ११४ | २१ | टेकि | १३ | ७६ | २१ | तपिकेश | ५६ |
| १२५ | १० | डाज | ५९ | ७६ | १८ | ताजायन | ५६ |
| ११७ | ४ | डीराय | २५ | ४२ | ५ | ताडिन् ? | २२ |
| ५८ | २० | तञ्जन | ३१ | १२२ | २७ | ताण्डकायन | ५५ |
| ४४ | २३ | ताण्डि | ३० | ४१ | २३ | ताण्डि | १९ |
| १२७ | २५ | ,, | ६८ | ४३ | २२ | ताण्डि | ३० |
| १२८ | १८ | ,, | ३४ | ५५ | २२ | ,, | २२ |
| ४१ | १९ | तत्कल | १९ | ११४ | ११ | ,, | १२ |
| १११ | १६ | तत्व | १ | ११७ | १५ | ताण्डिन | २६ |
| ७४ | २५ | तदप | ५१ | ७३ | २३ | तातक | ५४ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| ७० | १७ | देवपात | ५३ | ११५ | २७ | देवि | २४ |
| १२४ | ३३ | ,, | ६१ | १२८ | ७ | ,, | ६१ |
| २५ | २१ | देवमति | १ | ४१ | १६ | देह | १९ |
| ११६ | १ | ,, | १९ | १२९ | ९ | देहकालेय | ६२ |
| ११६ | १ | ,, | २४ | ११३ | ८ | दैर्घचित्त | ५ |
| ७१ | १८ | देवयात | ५३ | २७ | ९ | दैर्घ्यचित | ५ |
| १२४ | ११ | ,, | ६१ | ३९ | १ | दैर्घ्यतमस | १६ |
| ६२ | २१ | देवरात | ३६ | ६२ | ५ | दैदतरस | ३७ |
| ६३ | १० | ,, | ३१ | २३ | १६ | दैवतायन | ५ |
| ६३ | १५ | ,, | ३७ | ११३ | २ | दैवन्तायन | ५ |
| १२१ | ४ | ,, | ४१ | २३ | १७ | दैवन्त्यायन | १ |
| १२२ | १७ | ,, | ५५ | २३ | २० | दैवमत्य | १ |
| ७१ | २२ | देवराति | ५४ | ६८ | २२ | दैववात | ५३ |
| ४४ | २० | देववन्ति | ३० | ६२ | ४ | दैवश्रवस | ३७ |
| ४१ | १९ | देववेल | १९ | २७ | २२ | दौकियारेय | ५ |
| ६३ | १५ | देवश्रवस | ३७ | ११९ | १७ | दौराङ्गि | ३९ |
| १२१ | १६ | ,, | ४४ | ८० | २२ | दौलि | ५६ |
| ५५ | ४ | देवस्थाति | २७ | ११८ | ९ | द्रल | ३२ |
| ११९ | २ | देवस्थान | ३१ | २२ | २० | द्रोणजिह्वि | १ |
| ४३ | ८ | देवस्थानि | २० | ११९ | १४ | द्रोणनाभ | ३९ |
| ४४ | २१ | ,, | ३० | ५७ | १५ | द्रोणभाव | ३१ |
| ५५ | २१ | ,, | २७ | २७ | ४ | द्रोणायन | ७ |
| ११६ | १२ | ,, | २४ | ४३ | ९ | द्रौणि | २० |
| ११६ | १२ | देवागारि | २४ | ११६ | १२ | द्रौणय | २४ |
| ४३ | ८ | देवागिरिधि | २० | ३२ | १८ | द्रौणायन | ७ |
| ४० | २२ | देवाश्व | १९ | ११६ | १३ | द्रौणि | २४ |
| ११५ | २४ | ,, | २४ | २३ | २० | द्रौपाजिह्वि | १ |

| पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. | पृ. सं. | प. सं. | गोत्रर्षिनाम. | ग. सं. |
|---|---|---|---|---|---|---|---|
| १२३ | ५ | नवतन्तु | ५५ | ४७ | १ | निचो[illegible] | १० |
| ८१ | २ | नसातम | ५८ | ११४ | २३ | ,, | ६१ |
| १२५ | २५ | नाकव्य | ६३ | ३७ | २१ | नित्तंहत | १७ |
| १२४ | २० | नागशिरस् | ६१ | ५६ | १० | नितुन्द | २७ |
| १२३ | ४ | नाचिक | ५५ | ११९ | ३ | नितुन्दिल | ३१ |
| ३६ | २४ | नाज | ९ | ४७ | २२ | नित्यरोगि | २० |
| १११ | ६ | नाडायन | १ | ११६ | १९ | निद्रागवध | २४ |
| ११८ | १७ | ,, | ३३ | ६८ | १७ | निध्रुव | ५३ |
| ७६ | १६ | नाहव्य | ५६ | १२३ | २२ | निध्रुव | ६१ |
| ३० | १६ | नान्तभागि | १ | २६ | ४ | निराणि | १ |
| ८० | ७ | नायक | ५६ | २६ | २१ | निरार्णव | १ |
| १२२ | २३ | नारद | ५५ | ४७ | ३ | निरोधान्म | १० |
| १२३ | ७ | नारदि | ५५ | ४७ | २० | निरोयाम्र | १० |
| १२१ | २७ | नाराद्य | ४८ | १२७ | २० | निर्वैरि | ६८ |
| ६२ | ८ | नारायण | ४३ | ११९ | २६ | निशायन | ३५ |
| ६८ | २१ | ,, | ५३ | ८७ | २२ | निष्पञ्चपराण्ड | ६३ |
| १२१ | २७ | ,, | ४८ | ३७ | ११ | निहत | १७ |
| ७३ | २२ | नारी | ५४ | ११५ | १० | ,, | २० |
| ११८ | १७ | ,, | ३३ | ३८ | १५ | नीचि | १० |
| १२० | ३ | नालन्दन | ३६ | ११४ | १९ | नीचिर्वा | १३ |
| २५ | १७ | नालायन | १ | ७६ | १२ | नीलाः प[illegible]शराः | ५७ |
| १२४ | १८ | नाशरि | ६१ | १२२ | २३ | नीला[illegible] | ५५ |
| ११३ | १५ | नाशार्यजन | ७ | ५७ | १७ | नीलात्रेय | ३१ |
| २३ | २३ | नाष्ट्रायण | ४ | ११९ | १५ | ,, | ३५ |
| १२६ | २४ | नाहुलि | ६४ | ११९ | १७ | नीलायन | ३५ |
| ४७ | २० | निकाष्टोर | १० | ६१ | १६ | नुवलि | ३६ |
| ७२ | १४ | निकृतज | ५३ | २४ | १ | नृप | ५ |

